ISSN: 2320-740X




# शारदा

## वार्षिकपत्रिका

**प्रधानसम्पादकः**

आचार्यः सि. एस्. एस्. नरसिंहमूर्तिः

**सम्पादकौ**

डा. राघवेन्द्रभट्टः

डा. विश्वनाथहेगडे



केन्द्रीयसंस्कृतविश्वविद्यालयः

संसदः अधिनियमेन स्थापितः

राजीवगान्धीपरिसरः

मेणसे, शृङ्गेरी - ५७७१३९, (कर्णाटकराज्यम्)

# श्रीश्रीजगद्गुरुशङ्कराचार्यमहासंस्थानम्, दक्षिणाम्नायश्रीशारदापीठम्, शृङ्गेरी



जगद्गुरवः श्रीश्रीभारतीतीर्थमहास्वामिनः
श्रीदक्षिणाम्नायशृङ्गेरीशारदापीठम्, शृङ्गेरी

पवित्रक्षेत्रे शृङ्गगिरौ विद्यमानं श्रीराजीवगान्धीसंस्कृतविद्यापीठं संस्कृतप्रचारं विदधद् वरीवर्ति । विद्यापीठेऽस्मिन् परुदिव ऐषमोऽपि शारदानाम्नी पत्रिका प्रकाश्यत इति विदित्वा दक्षिणाम्नायशृङ्गगिरिशारदापीठाधीश्वराः जगद्गुरुश्रीभारतीतीर्थमहास्वामिचरणाः नितरां प्रमुदितस्वान्ता अभवन् ।

इयं च पत्रिका अत्रत्यानां छात्राणां प्रज्ञायाः प्रतिभायाश्च दर्पणायते । श्रीशारदाशशिकलावतंसयोरकम्पानुकम्पया पत्रिकेयं हृद्यैः लेखनैर्विभूषिता सहृदयानां चेतांसि रञ्जयतु , विद्यापीठमिदमुत्तरोत्तरमभिवर्धताम् । अत्रत्याः छात्राः सम्यग्विद्यामधीत्य श्रेयोभाजनानि भूयासुरिति श्रीचरणा आशासते ।

इति निवेदयिता
डा. वे. रा. गौरीशङ्करः

प्रो. श्रीनिवास वरखेड़ी
कुलपतिः
केन्द्रीयसंस्कृतविश्वविद्यालयः
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्,
भारतसर्वकारस्य शिक्षामन्त्रालयाधीनम्)



Prof. Shrinivasa Varkhedi
Vice-Chancellor
Central Sanskrit University
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan,
Under Ministry of Education, Govt. of India)



के.सं.वि./कुलपति/101/2022-23/250

दिनांकः- 02-08-2022

# शुभसन्देशः

भारतीयज्ञानसागरस्य अस्ति अनितरसाधारणं वैशिष्ट्यम्। अस्मिन्निहितानि ऐहिकम् आमुष्मिकञ्च फलन्ति वेदशास्त्रपुराणकाव्यादिरत्नानि जगतो गर्वकारणम्। तेषां काण्डे विनियोगेन राष्ट्रोन्नतिः विश्वकल्याणञ्च सम्पत्स्यते। अध्ययनम्, अध्यापनम्, संशोधनम्, प्रसारः, सामाजिकापेक्षानिर्वाहः इत्यादिभिः नानाक्रियाभिः भारतीयविद्याशाखानां साधुसमाश्रयः कर्तव्यः। एतदुद्देशेन भारतसर्वकारेण प्रतिष्ठापितस्य केन्द्रीयसंस्कृतविश्वविद्यालयस्य सर्वे परिसराः शास्त्रैः प्रतिपाद्यं तत्त्वं यथापेक्षं समाजं बोधयितुं सर्वात्मना यत्नरताः सन्तिः। तत्र वाग्देवतायाः शारदाम्बायाः सन्निधौ शृङ्गिरौ विद्यमानेन राजीवगान्धीपरिसरेण क्रियमाणः शास्त्रीय उद्यमः सर्वोऽपि अनुसरणीयो वर्तते । विद्वद्भिरध्यापकैः प्रतिभानवद्भिरन्तेवासिभिश्च विरचितानामपूर्वलेखानां सङ्ग्रहात्मिका शारदा वार्षिकी पत्रिका जगद्गुरुश्रीचरणानां करकमलाभ्याम् आविष्क्रियत इति विदित्वा नितान्तं नन्दामि। पत्रिकेयं विद्वन्मनोरञ्जनी विद्यार्थिजिज्ञासाशमनी च भूयादित्याशासे।

विद्वज्जनविधेयः

(प्रो. श्रीनिवास वरखेड़ी)
कुलपतिः

56-57, संस्थानीयक्षेत्रम्, जनकपुरी, नवदेहली - 110058
56-57, Institutional Area, Janakapuri, New Delhi -110058 (INDIA)
Ph.: (O) 011-28523949, EPABX: 28524993, 28521994, 28524995
EMAIL : vicechancellorcsu@gmail.com/ vc@csu.co.in, WEBSITE : www.sanskrit.nic.in

**प्रो. रणजित कुमार बर्मन**
कुलसचिव (प्र)
**केन्द्रीयसंस्कृतविश्वविद्यालयः**
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्,
भारतसर्वकारस्य शिक्षामन्त्रालयाधीनम्)



**Prof. Ranjit Kumar Barman**
Registrar (I/c)
**Central Sanskrit University**
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan,
Under Ministry of Education, Govt. of India)



## शुभसन्देशः

'श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम्' इति खलु अभियुक्तवचनम्। उपासनया मनुष्यः वाग्देवतायाः अनुग्रहभाग्भवति। पठनं लेखनं वा भगवत्या उपासनायाः साधनमेव भवति। यद्यपि सर्वं वाङ्मयं सरस्वत्याः स्वरूपमेव तथापि 'त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम्' इति शङ्करभगवत्पादैरुक्तरीत्या अस्माभिः अनुष्ठीयमानेन गीर्वाणवाणीसम्बन्धिकर्मणा भगवत्याः सरस्वत्याः स्तुतिः सेवा च कृता भवति। केन्द्रीयसंस्कृतविश्वविद्यालयस्य शृङ्गेरीस्थराजीवगान्धीपरिसरेण शारदानाम्नी वार्षिकपत्रिका प्रकाश्यते इति ज्ञात्वा अत्यन्तं मोदे। भगवत्याः शारदाम्बायाः जगद्गुरुश्रीचरणानाञ्च अनुग्रहभाग्भिः परिसरस्य अध्यापकैः छात्रैश्च लिखितानां लेखानां नूनमुपयोगं संस्कृतलोका लभेरन् इति आशासे।

भावत्कः

R. K. Barman.
प्रो. रणजित कुमार बर्मन

56-57, संस्थानीयक्षेत्रम्, जनकपुरी, नवदेहली - 110058
56-57, Institutional Area, Janakapuri, New Delhi -110058 (INDIA)
Ph.: (O) 011-28523949, EPABX: 28524993, 28521994, 28524995
EMAIL : vicechancellorcsu@gmail.com/ vc@csu.co.in, WEBSITE : www.sanskrit.nic.in

आचार्यः सि. एस्. एस्. एन्. मूर्तिः
निदेशकः
केन्द्रियसंस्कृतविश्वविद्यालयः
राजीवगान्धीपरिसरः, मेणसे, शृङ्गेरी



Prof. C. S. S. N. Murthy
Director
Central Sanskrit University
Rajiv Gandhi Campus, Sringeri - 577 139



## वन्दे गीर्वाणभारतीम्

प्रज्ञा प्रतिष्ठा भूतानां प्रज्ञा लाभः परो मतः ।
प्रज्ञा निःश्रेयसी लोके प्रज्ञा स्वर्गो मतः सताम् ॥
(म.शा. १८० स. श्लो.२)

जगति विद्यमानेषु संस्कृतविश्वविद्यालयेषु नानापरिसरयुक्तः, नैकशास्त्रपरिपोषणरतः केन्द्रीयसंस्कृतविश्वविद्यालयः सर्वातिशायी वर्वर्ति । तत्रान्यतमत्वेन राराज्यते शृङ्गेरीस्थराजीवगान्धीपरिसरः । यतोऽयं नानाशास्त्रनदीष्णैः संयमीन्द्रैः पुम्भावसरस्वतीरूपैः जगद्गुरुभिः श्रीश्री भारतीतीर्थमहास्वामिभिः समकल्पि समारम्भि च । अमीषामसीमानुकम्पया समेधमानो वरीवर्त्यंयम् । अत्र निदेशकाः अध्यापकाश्च समे शास्त्रेषु बद्धादराः अवृतन्, वर्तन्ते च । तेऽन्तेवासिनां तत्तच्छास्त्रेषु कौशलवर्धनाय नैकान् उपायान् समकल्पयन् । ते यथा – १.शारदाविशिष्टव्याख्यानमाला, २. वाक्यार्थपरिषत्, ३.वाग्वर्धिनीपरिषत् इति । तत्र प्रतिगुरुवासरं छात्राः स्वीयशास्त्रवाक्पाटवं सम्पादयितुं वाग्वर्धिनीसभासु अध्यापकानां पुरतः तत्तद्विषयेषु भाषणं कुर्वन्ति । शास्त्रेषु भारतीयमौल्यप्रतिपादकेषु च विषयेषु लेखनकौशलसम्पादनाय विविधान् लेखान् रचयन्ति । अध्यापकाश्च शास्त्रीयलेखान् रचयन्ति । अस्मिन् हायने लिखितानाम् एतेषां सर्वेषां लेखानां संस्कृत-हिन्दी-कन्नड-आङ्ग्लभाषागतानां सङ्ग्रहात्मिका 'शारदा'नाम्नी परिसरस्य वार्षिकपत्रिका प्रकाश्यते । तेनान्तेवासिनां महानुपकारो भवतीति वयं विश्वसिमः ।

अवसरेऽत्र कृतश्रमाणां डा. राघवेन्द्रभट्ट–डा. विश्वनाथहेगडेवर्याणां समेषां शारदाम्बा मङ्गलमातनोतु । एतादृशस्वाध्यायज्ञानयज्ञे सततं प्रोत्साहितवद्भ्यः कुलपतिभ्यः प्रो. श्रीनिवासवरखेडीमहोदयेभ्यः कुलसचिवेभ्यः प्रो. रञ्जितकुमारबर्मन्वर्येभ्यश्च सादरं प्रणामान्निवेदयामः । शुभावसरेऽस्मिन् परमकरुणामूर्तीनां जगद्गुरूणां श्रीश्री भारतीतीर्थमहास्वामिनां तत्करकमलसञ्जातानां श्रीश्री विधुशेखरभारतीमहास्वामिनाञ्च अनुग्रहाशीर्भिः परिसरीयाणां सर्वेषां श्रेयांसि भूयासुरित्याशास्महे ।

इत्थं बुधजनविधेयः

आचार्यः सि. एस्. एस्. एन्. मूर्तिः




# सम्पादकीयम्

भारतीयज्ञानशाखाया अध्ययनेन बोधेन आचरणेन प्रचारेण च आत्मनो जगतश्चोन्नतिर्भवति। श्रुतिशास्त्रपुराणकाव्यानि तन्मार्गमुपदिशन्ति। साधकेनाश्रान्ताधीतिना भवितव्यम्। अध्ययनं लेखनापेक्ष्यमध्वनो दार्ढ्यमादधाति। अतो गम्यार्थदर्शनाय तत्त्वदर्शिनः पाठलेखविधी समाशिश्रियन्। परःसहस्रेभ्यः संवत्सरेभ्यः प्रवर्तमाना महतीयं शास्त्रपरम्परा तत्पाठलेखविधिभ्यां द्रढीयसी बोभवीति। उभावपीमौ विधी अन्योन्यान्विततया अर्थतत्त्वं प्रकाशयत इत्यनपोद्धारधिया तावेताववालम्बते सुधीलोकः। अतः

चरणे द्वे साधकस्य पठनं लेखनं तथा।
एकेन रहितः खञ्जो द्वाभ्यान्तु पङ्गुरेव सः॥

इति वचो विपश्चिदः कस्यचन न कस्य खलु श्रद्धेयम्? एवङ्गुणेनाधीतिस्ततो बोधस्ततः प्रचारणक्रिया च अपनयति क्लेशम्, सुखयति लोकम्, योजयति समाजम्, पोषयति पैतृकं साम्राज्यम् ।

महौषधेन संस्कृतवाङ्मये निहितेन समाजस्य हितं कुर्वन् केन्द्रीयसंस्कृतविश्वविद्यालयः भारतीयविद्यया शिक्षाप्रदाने प्रतिष्ठितो वर्तते। भारते नानाप्रदेशेषु स्थितेषु तदीयपरिसरेषु अन्यतमो वर्तते शृङ्गेरीस्थः राजीवगान्धीपरिसरः। शिक्षासाहित्यज्यौतिषन्याय-व्याकरणमीमांसावेदान्तशास्त्राणां पटुभिरध्यापकैः बहुपटुभिश्छात्रैश्च लिखितैः शास्त्रीयैः नीतिप्रदैश्च लेखैरुपेता शारदा वार्षिकी पत्रिका प्राकाश्यं नीयते। यत्र संस्कृतहिन्दीकन्नडाङ्ग्लभाषासु रचिता लेखाः सन्ति।

अस्याः पत्रिकायाः प्रकाशनाय शुभसन्देशं प्रदाय अस्मानन्वग्रहीषुः केन्द्रीयसंस्कृतविश्वविद्यालयस्य कुलपतयः **आचार्याः श्रीनिवासवरखेडी**महाभागाः, कुलसचिवाः **आचार्याः रणजित कुमार बर्मनवर्याः**, परिसरनिदेशकाः **आचार्याः सि. एस्. एस्. नरसिंहमूर्तिवर्या**श्च। तान् सप्रश्रयं प्रणवावः। लेखकेभ्यः अध्यापकेभ्यः वन्दनानि, छात्रेभ्यः साधुवादांश्च वितन्वः। सम्पादकमण्डलीसदस्येभ्यः, पत्रिकायाः विन्यासादिबहुकार्यं कृतवते सङ्गणकप्राध्यापकाय श्रीरवीशवर्याय च धन्यवादान् प्रकटयावः। समये लेखानां सङ्ग्रहादिकर्म कृतवतीभ्यां कुमारीभ्यां श्वेताभट्ट-सप्तमीभ्यां साधुवादान् वितन्वहे।

येषां दिव्यानुग्रहः सर्वात्मना परिसरमिमं संरक्षति तेषां ज्ञानवैराग्यतपोधनानां जगद्गुरूणां दक्षिणाम्नायशृङ्गेरीशारदापीठाधीश्वराणां **श्रीश्रीभारतीतीर्थमहास्वामिनां** तथा तत्करकमलसञ्जातानां **श्रीश्रीविधुशेखरभारतीमहास्वामिनां** चरणाम्बुजयोः सभक्तिश्रद्धं प्रणामं समर्पयावः।

निवेदयितारौ
**डा. राघवेन्द्रभट्टः**
**डा. विश्वनाथ हेगडे**

शुभकृत्-श्रावण-शुक्ल-द्वादशी
०९-०८-२०२२, शृङ्गेरी

## मीमांसाविभागः


प्रो. सुब्राय वि. भट्टः
दर्शनसङ्कायप्रमुखः, के. सं. वि.


प्रो. सूर्यनारायणभट्टः
विभागाध्यक्षः


डा. वेङ्कटेशताताचार्यः
सहायकाचार्यः


डा. गोविन्दहेगडे
प्राध्यापकः

## न्यायविभागः


प्रो. नवीनहोळ्ळः
विभागाध्यक्षः


डा. श्यामसुन्दरः ए.
प्राध्यापकः


डा. राघवेन्द्र आरोळ्ळी
प्राध्यापकः


डा. नारायणराव्करः
प्राध्यापकः

## अद्वैतवेदान्तविभागः


डा. गणेश ईश्वर भट्टः
विभागाध्यक्षः


डा. विश्वनाथहेगडे
सहायकाचार्यः


विद्वान् निरञ्जनभट्टः
प्राध्यापकः

## व्याकरणविभागः


डा. चन्द्रशेखरभट्टः
विभागाध्यक्षः


डा. कृष्णानन्तपद्मनाभम्
सहायकाचार्यः


डा. प्रमोदभट्टः
सहायकाचार्यः


डा. अरुणभट्टः
प्राध्यापकः

## साहित्यविभागः


डा. राघवेन्द्रभट्टः
विभागाध्यक्षः


डा. चन्द्रकला आर्. कोण्डी
सहाचार्या


डा. कोम्पेल्लि विनयकुमारः
सहायकाचार्यः


डा. एम्. श्रीनिवासमूर्तिः
प्राध्यापकः


डा.श्रीकरः वि.
प्राध्यापकः

## फलितज्यौतिषविभागः


डा. मुरलीकृष्णः टि.
प्राध्यापकः


डा. प्रसादभट्टः
प्राध्यापकः


विद्वान् नागपतिहेगडे
प्राध्यापकः

## आधुनिकविषयविभागः


डा. ओमप्रकाश साहनी
सहायकाचार्यः (हिन्दी)


डा. प्रभाकरः एम्. ए.
प्राध्यापकः (इतिहासः)


डा. कविता एस्.
प्राध्यापिका (कन्नडभाषा)


कु. सुमना हेच्. एस्.
प्राध्यापिका (आङ्ग्लभाषा)


डा. रामचन्द्र हेच्. डि.
प्राध्यापकः (क्रीडा)


श्री शशिधरः के. वि.
प्राध्यापकः (सङ्गणकम्)


श्री रवीशः एन्.
प्राध्यापकः (सङ्गणकम्)

# शिक्षाविभागः


प्रो. चन्द्रकान्तः
विभागाध्यक्षः


प्रो. रामचन्द्रुल बालाजी
आचार्यः


प्रो. हरिप्रसादः के.
आचार्यः


डा. वेङ्कटरमण एस्. भट्टः
सहाचार्यः


डा. गणेश ति. पण्डितः
सहायकाचार्यः


डा. नारायणवैद्यः
सहायकाचार्यः


डा. अरविन्दकुमार सोमदत्तः
सहायकाचार्यः


डा. दयानिधिशर्मा
सहायकाचार्यः

# वास्तु-जौतिषपदविकापाठ्यप्रणाली
(Diploma Course)


डा. रमानन्दभट्टः एन्.
ज्यौतिषप्राध्यापकः


डा. सुधांशुकुमारनन्दः
वास्तुप्राध्यापकः

# मुक्तस्वाध्यायपीठम्
(Distance Education)


श्री कु. वेङ्कटेशमूर्तिः
समन्वयकः


डा. कृष्णकुमार द्विवेदी
एम्. टि. एस्. (औ. सो)

# ग्रन्थालयः


डा. आकाश बाबु जैन्
सहायक ग्रन्थपालकः


श्री दिनेशः एस्.
एम्. टि. एस्.


श्रीमती सिद्दम्मा
एम्. टि. एस्.


श्री मोहम्मद् रफ़ीक्
एम्. टि. एस्.


श्री सन्दीपकुमारः एम्. आर्.
एम्. टि. एस्. (औ. सो)

# कार्यालयीयसदस्याः

श्री गुरुराजभट्टः
कार्यालयसहायकः

श्रीमती मञ्जुळा एस्.
कनिष्ठश्रेणी लिपिका

श्री एच्. के. कुमारः
एम्. टि. एस्.

श्री एस्. शिवण्णा
एम्. टि. एस्.

कु. संयुक्ता
टेकनिकल् असिस्टेन्ट्

श्री गणेशप्रसादः
डि. ई. ओ. (औ. सो.)

श्री रवि वारणासी
डि. ई. ओ. (औ. सो.)

श्रीमती सावित्री टि. एम्.
छात्रावासनिरीक्षिका

श्रीमती अर्पिता
छात्रावासनिरीक्षिका

श्री लोकेशः
छात्रावाससहायकः (औ. सो.)

श्री रवि
उद्यानपालकः

श्रीमती जयम्मा
स्वच्छताकर्मचारिणी

श्रीमती तिम्मम्मा
स्वच्छताकर्मचारिणी (औ. सो.)

श्री उमेशः एच्. एस्.
स्वच्छताकर्मचारी (औ. सो.)

श्रीमती सुन्दरी
स्वच्छताकर्मचारिणी (औ. सो.)

श्रीमती पार्वती
स्वच्छताकर्मचारिणी (औ. सो.)

श्रीमती पद्मा
स्वच्छताकर्मचारिणी (औ. सो.)

श्रीमती अन्नपूर्णा
स्वच्छताकर्मचारिणी (औ. सो.)

श्री एम्. बि. शङ्करः
रक्षणकर्मचारी (औ. सो.)

श्री सदाशिवशेट्टि
रक्षणकर्मचारी (औ. सो.)

श्री के. एस्. चन्द्रप्पः
रक्षणकर्मचारी (औ. सो.)

श्री एम्. के. राजुः
रक्षणकर्मचारी (औ. सो.)

श्री एम्. वि. महेशः
रक्षणकर्मचारी (औ. सो.)

श्री एम्. जि. अप्पाचार्
रक्षणकर्मचारी (औ. सो.)

श्री सुब्रह्मण्यः एम्. बि.
रक्षणकर्मचारी (औ. सो.)

श्री सुब्रह्मण्यः
रक्षणकर्मचारी (औ. सो.)

श्री हरीश् शेट्टि
रक्षणकर्मचारी (औ. सो.)




# वाग्वर्धिनीपरिषत् २०२१-२२

## अध्वदर्शिनौ


डा. राघवेन्द्रभट्टः
साहित्यविभागाध्यक्षः


डा. विश्वनाथहेगडे
सहायकाचार्यः, अद्वैतवेदान्तविभागः

## परिषत्सदस्याः


सुदर्शन् एम्. एस्.
कार्यदर्शी


मयूरी जोशी
कार्यदर्शिनी


योगेश विष्णु भट्टः
स्पर्धिष्णुपरिषत्कार्यदर्शी


अपर्णा होळ्ळा के. ए
स्पर्धिष्णुपरिषत्कार्यदर्शिनी


गीता वी. भट्टः
स्पर्धिष्णुपरिषत्सदस्या


निरञ्जन एन् भट्टः
स्पर्धिष्णुपरिषत्सदस्यः


श्वेता विष्णु भट्ट
पत्रिकाकार्यदर्शिनी


प्रज्वल अवधूत जोशी
पत्रिकाकार्यदर्शी


ऋचिका कदम
पत्रिकाकार्यदर्शिनी


सप्तमी के. एन्.
पत्रिकाकार्यदर्शिनी


रजत भट्टः बि.
सांस्कृतिककार्यदर्शी


अम्बिका भट्ट ए.
सांस्कृतिककार्यदर्शिनी


शाल्मली एन्. के.
वेदिकासज्जता


सुधांशु शुक्ला.
वेदिकासज्जता


भास्कर वि. जे.
वेदिकासज्जता



विनय दत्तात्रेय हेगडे
शारदाप्रसादवितरणम्



गणेश कुमारः पि.
शारदाप्रसादवितरणम्



निरंजन गोखले एम्.
शारदाप्रसादवितरणम्



सागर खैनुर्
क्रीडाकार्यदर्शी



अश्विनी प्रभाकर भट्टः
क्रीडाकार्यदर्शिनी

## कक्ष्याप्रतिनिधयः



अक्षत् जैन्
आचार्यद्वितीयवर्षम्



गोपिका ए. जि.
आचार्यद्वितीयवर्षम्



पवार पंकज अरुण
आचार्यप्रथमवर्षम्



जागृति कश्यप
आचार्यप्रथमवर्षम्



नरेश जोशी
शिक्षाशास्त्रिद्वितीयवर्षम्



यशस्विनी सतीश हेगडे
शिक्षाशास्त्रिद्वितीयवर्षम्



नवीन दिवाकर हेगडे
शिक्षाशास्त्रिप्रथमवर्षम्



स्वाती एन् . एन्.
शिक्षाशास्त्रिप्रथमवर्षम्



श्रीधरः एन् . एन्.
शास्त्रितृतीयवर्षम्



ज्योत्स्नापूर्णायामिनी
शास्त्रितृतीयवर्षम्



रवितेजः
शास्त्रिद्वितीयवर्षम्



श्रीनिधि एम्.भट्ट
शास्त्रिद्वितीयवर्षम्



वीरराघवन्
शास्त्रिप्रथमवर्षम्



मुक्ता श्रीपाद लघाटे
शास्त्रिप्रथमवर्षम्



नहुश एस्. मोराजे
प्राक्-शास्त्रिद्वितीयवर्षम्



भारती होसमनि
प्राक्-शास्त्रिद्वितीयवर्षम्



राघवमिश्रः
प्राक्-शास्त्रिप्रथमवर्षम्



लक्ष्मी शिवकुमार अय्यर
प्राक्-शास्त्रिप्रथमवर्षम्

# विविधपरिषदां संयोजकाः

## स्पर्धिष्णुपरिषत्



**डा. गणेश ईश्वर भट्टः**
अद्वैतवेदान्तविभागाध्यक्षः



**डा. मुरलीकृष्णः टि.**
प्राध्यापकः, ज्यौतिषविभागः

## वाक्यार्थपरिषत्



**डा. वेङ्कटरमण एस्. भट्टः**
सहाचार्यः, शिक्षाविभागः



**डा. गोविन्द जि. हेगडे**
प्राध्यापकः, मीमांसाविभागः

## क्रीडासमितिः



**प्रो. चन्द्रकान्तः**
शिक्षाविभागाध्यक्षः



**डा. अरविन्दकुमार सोमदत्तः**
सहायकाचार्यः, शिक्षाविभागः



**डा. रामचन्द्रः हेच्. डि.**
प्राध्यापकः (क्रीडा)

## सांस्कृतिकसमितिः



**डा. राघवेन्द्रभट्टः**
साहित्यविभागाध्यक्षः



**डा. कु. वेङ्कटेशमूर्तिः**
समन्वयकः, मुक्तस्वाध्यायपीठम्



**डा. कोम्पेल्ली विनयकुमारः**
सहायकाचार्यः, साहित्यविभागः



**डा. प्रसादभट्टः**
प्राध्यापकः, ज्यौतिषविभागः

## विद्यावारिधि-उपाधिप्राप्तिः



श्री श्रीकरः वि.

विभागः
शिक्षाविभागः

मार्गदर्शकः
आचार्यः हरिप्रसादः के.



श्री पवन्

विभागः
फलितज्यौतिषम्

मार्गदर्शकः
आचार्यः ईश्वरभट्टः



श्री कृष्णकुमार द्विवेदी

विभागः
फलितज्यौतिषम्

मार्गदर्शकः
आचार्यः ए. पि. सच्चिदानन्दः



श्री सुखदेव भट्टः

विभागः
व्याकरणम्

मार्गदर्शकः
डा. कृष्णानन्तपद्मनाभम्



श्री विघ्नेश्वरः

विभागः
मीमांसा

मार्गदर्शकः
डा. सूर्यनारायणभट्टः



श्री सन्दीपवसन्तजोशी

विभागः
साहित्यम्

मार्गदर्शिका
डा. चन्द्रकला आर्. कोण्डी



श्रीमती श्रीदेवी परमेश्वर हेगडे

विभागः
साहित्यम्

मार्गदर्शकः
डा. रामचन्द्रजोयीस



श्री कलाधरभट्टः

विभागः
व्याकरणम्

मार्गदर्शकः
डा. कृष्णानन्तपद्मनाभम्



श्री बालचन्द्र भट्टः

विभागः
फलितज्यौतिषम्

मार्गदर्शकः
आचार्यः ए. पि. सच्चिदानन्दः



श्री वरदगोपाल क. श्री

विभागः
न्यायः

मार्गदर्शकः
आचार्यः का. इ. मधुसूदनः



श्री सन्दीपभास्करकानिट्करः

विभागः
न्यायः

मार्गदर्शकः
आचार्यः नवीनहोळलः



श्री गणेशकृष्णभट्टः

विभागः
फलितज्यौतिषम्

मार्गदर्शकः
आचार्यः ए. पि. सच्चिदानन्दः



श्री अरुणभट्टः

विभागः
व्याकरणम्

मार्गदर्शकः
चन्द्रशेखरभट्टः



श्री नारायण समाइ

विभागः
साहित्यम्

मार्गदर्शिका
डा. चन्द्रकला आर्. कोण्डी



श्री पुरुषोत्तम कंस्रालि

विभागः
शिक्षाविभागः

मार्गदर्शकः
डा. रामचन्द्रुल बालाजी



श्री प्रमोदभट्टः

विभागः
पुराणेतिहासः

मार्गदर्शकः
आचार्यः सुब्राय वि. भट्टः



श्री प्रसन्न अडिगः

विभागः
व्याकरणम्

मार्गदर्शकः
डा. कृष्णानन्तपद्मनाभम्



श्री गोविन्द जि. हेगडे

विभागः
मीमांसा

मार्गदर्शकः
डा. एस्. वेङ्कटेश ताताचार्यः



श्री ब्रजेश कश्यप्

विभागः
साहित्यम्

मार्गदर्शकः
डा. राघवेन्द्रभट्टः

# परिसरीयविविधशैक्षिकपुरस्कारराशिः - 2019-20



**कु. ऐश्वर्या**
( आचार्यस्तरे अत्यधिकाङ्काः )

श्रीगुरुकृपापुरस्कारः
श्रीमती कावेरम्मा पुरस्कारः



**आयुष्मान् आदर्श विनायक भट्टः**
( आचार्यस्तरे अत्यधिकाङ्काः )

श्रीगुरुकृपापुरस्कारः
श्रीमती कावेरम्मा पुरस्कारः



**आयुष्मान् गणपति गणेश भट्टः**
( वेदान्तशास्त्रे आचार्यस्तरे अत्यधिकाङ्काः )

श्रीमती कावेरम्मा पुरस्कारः
वेदान्तकेसरी ब्रह्मश्री के. एन्. नारायणभट्ट पुरस्कारः



**श्रीमती दुर्गा श्रीवत्सा**
( नव्यन्यायशास्त्रे शास्त्रिस्तरे अत्यधिकाङ्काः )

श्री बि. जि. शेषगोपालपुरस्कारः
आदिशक्त्यात्मक श्री अन्नपूर्णेश्वरीपुरस्कारः



**आयुष्मान् विवेक त्रिपाठी**
( फलितज्यौतिषशास्त्रे शास्त्रिस्तरे अत्यधिकाङ्काः )

आदिशक्त्यात्मक श्री अन्नपूर्णेश्वरीपुरस्कारः
श्रीमती ललितम्मास्मारकपुरस्कारः



**आयुष्मान् नवीनः के. आर्.**
( न्यायशास्त्रे आचार्यस्तरे अत्यधिकाङ्काः )

श्रीमती कावेरम्मापुरस्कारः



**आयुष्मान् गुरुदत्त हेगडे**
( फलितज्यौतिषशास्त्रे आचार्यस्तरे अत्यधिकाङ्काः )

आदिशक्त्यात्मक श्री अन्नपूर्णेश्वरीपुरस्कारः



**कु. कमला हुलगप्प नेल्लुर्**
( शिक्षाशास्त्रे अत्यधिकाङ्काः)

श्री वेङ्कटेश्वरपुरस्कारः



**कु. कोण्डि अमृता राममूर्ति**
( साहित्यशास्त्रे शास्त्रिस्तरे अत्यधिकाङ्काः )

आदिशक्त्यात्मक श्री अन्नपूर्णेश्वरीपुरस्कारः



**आयुष्मान् सुब्रह्मण्यः एस्.**
( मीमांसाशास्त्रे शास्त्रिस्तरे अत्यधिकाङ्काः )

आदिशक्त्यात्मक श्री अन्नपूर्णेश्वरीपुरस्कारः



**आयुष्मान् सौरव् रावुत्**
( व्याकरणशास्त्रे शास्त्रिस्तरे अत्यधिकाङ्काः)

आदिशक्त्यात्मक श्री अन्नपूर्णेश्वरीपुरस्कारः



**आयुष्मान् लोकनाथ पण्डा**
( वेदान्तशास्त्रे शास्त्रिस्तरे अत्यधिकाङ्काः )

आदिशक्त्यात्मक श्री अन्नपूर्णेश्वरीपुरस्कारः



**कु. श्रीनिधि एम्. भट्ट**
( प्राक्-शास्त्रिस्तरे अत्यधिकाङ्काः )

श्रीमहाबलभिडेस्मारकपुरस्कारः



**आयुष्मान् नारायणसमै**

शृङ्गेरीकुलपतिशङ्करनारायणजोयीसपुरस्कारः

# परिसरीयविविधशैक्षिकपुरस्कारराशिः - 2020-21



**कु. क्षमा कामत् के.**
( न्यायशास्त्रे आचार्यस्तरे अत्यधिकाङ्काः )

श्रीश्रीभारतीतीर्थस्वर्णपदकम्
श्रीगुरुकृपापुरस्कारः
श्रीमती कावेरम्मा पुरस्कारः



**आयुष्मान् तीर्थङ्करः दे**
( वेदान्तशास्त्रे आचार्यस्तरे अत्यधिकाङ्काः )

श्रीश्रीभारतीतीर्थस्वर्णपदकम्
श्रीमती कावेरम्मा पुरस्कारः
वेदान्तकेसरी ब्रह्मश्री के. एन्. नारायणभट्ट पुरस्कारः



**आयुष्मान् रञ्जनः कंसराली**
( फलितज्यौतिषशास्त्रे शास्त्रिस्तरे अत्यधिकाङ्काः )

श्रीश्रीभारतीतीर्थस्वर्णपदकम्
आदिशक्त्यात्मक श्री अन्नपूर्णेश्वरीपुरस्कारः
श्रीमती ललितम्मास्मारकपुरस्कारः



**कु. गीताञ्जली माळवे**
(वेदान्तशास्त्रे शास्त्रिस्तरे अत्यधिकाङ्काः)

श्रीश्रीभारतीतीर्थस्वर्णपदकम्
श्री बि. जि. शेषगोपलपुरस्कारः
आदिशक्त्यात्मक श्री अन्नपूर्णेश्वरीपुरस्कारः



**आयुष्मान् मयूरेशः एम्. मराठे**
( फलितज्यौतिषशास्त्रे आचार्यस्तरे अत्यधिकाङ्काः )

श्रीश्रीभारतीतीर्थस्वर्णपदकम्
आदिशक्त्यात्मक श्री अन्नपूर्णेश्वरीपुरस्कारः



**कु. त्रिदला ई.जि.**
(व्याकरणशास्त्रे आचार्यस्तरे अत्यधिकाङ्काः)

श्रीश्रीभारतीतीर्थस्वर्णपदकम्
श्रीमती कावेरम्मा पुरस्कारः



**आयुष्मान् दत्तात्रेय श्रीकान्तः हेगडे**
( मीमांसाशास्त्रे आचार्यस्तरे अत्यधिकाङ्काः )

श्रीश्रीभारतीतीर्थस्वर्णपदकम्
श्रीमती कावेरम्मा पुरस्कारः



**आयुष्मान् सुधांशुः किशन्**
( साहित्यशास्त्रे शास्त्रिस्तरे अत्यधिकाङ्काः )

श्रीश्रीभारतीतीर्थस्वर्णपदकम्
आदिशक्त्यात्मक श्री अन्नपूर्णेश्वरीपुरस्कारः



**आयुष्मान् शशाङ्कः वि. हेगडे**
(मीमांसाशास्त्रे शास्त्रिस्तरे अत्यधिकाङ्काः)

श्रीश्रीभारतीतीर्थस्वर्णपदकम्
आदिशक्त्यात्मक श्री अन्नपूर्णेश्वरीपुरस्कारः



**आयुष्मान् दीपक झा**
(व्याकरणशास्त्रे शास्त्रिस्तरे अत्यधिकाङ्काः)

श्रीश्रीभारतीतीर्थस्वर्णपदकम्
आदिशक्त्यात्मक श्री अन्नपूर्णेश्वरीपुरस्कारः



**आयुष्मान् शेखरचन्द्रः भट्**
( न्यायशास्त्रे शास्त्रिस्तरे अत्यधिकाङ्काः )

श्रीश्रीभारतीतीर्थस्वर्णपदकम्
श्रीमती कावेरम्मा पुरस्कारः



**कु. आर्. श्रीविद्या स्वर्णमाल्या**
( प्राक्-शास्त्रिस्तरे अत्यधिकाङ्काः )

श्रीश्रीभारतीतीर्थस्वर्णपदकम्
श्रीमहाबलभिडेस्मारकपुरस्कारः



**श्रीमती जोशी सुमा सुब्रायः**
( साहित्यशास्त्रे आचार्यस्तरे अत्यधिकाङ्काः )

श्रीश्रीभारतीतीर्थस्वर्णपदकम्



**आयुष्मान् मृत्युञ्जय सदानन्द शास्त्री**
( साहित्यशास्त्रे आचार्यस्तरे अत्यधिकाङ्काः )

श्रीश्रीभारतीतीर्थस्वर्णपदकम्



**आयुष्मान् गिरीशभट्टः**
( शिक्षाशास्त्रिस्तरे अत्यधिकाङ्काः )

श्रीश्रीभारतीतीर्थस्वर्णपदकम



**कु. श्वेता जि.एस्**
( शिक्षाशास्त्रिस्तरे अत्यधिकाङ्काः )

श्री वेङ्कटेश्वरपुरस्कारः



**श्री पवनः**
शृङ्गेरीकुलपतिशङ्करनारायणजोयीसपुरस्कारः



**श्री कृष्णकुमारः द्विवेदी**
शृङ्गेरीकुलपतिशङ्करनारायणजोयीसपुरस्कारः

## प्रातिभवैभवम्



**विवेक त्रिपाठी**
आचार्यद्वितीयवर्षम्

राष्ट्रस्तरे ज्यौतिषशलाकायां प्रथमः
राज्यस्तरे ज्यौतिषशलाकायां प्रथमः
काश्यां संस्कृतभारत्याः स्पर्धायां ज्यौतिषशलाकायां प्रथमः



**श्रीपति एस्. पि**
आचार्यद्वितीयवर्षम्

राष्ट्रस्तरे साहित्यशलाकायां प्रथमः
राज्यस्तरे साहित्यशलाकायां प्रथमः
अष्टादशतमनाट्यमहोत्सवे वीरपृथ्वीराजनाटके प्रथमः



**महेश चिदम्बर भट्टः**
आचार्यद्वितीयवर्षम्

राष्ट्रस्तरे मीमांसाशलाकायां प्रथमः
राज्यस्तरे मीमांसाशलाकायां प्रथमः
अहमदनगरपरीक्षायां प्रथमश्रेणी



**अवनी एस् टेंगसे**
आचार्यद्वितीयवर्षम्

राष्ट्रस्तरे व्याकरणभाषणे प्रथमा
राज्यस्तरे व्याकरणभाषणे प्रथमा
अहमदनगरपरीक्षायां प्रथमश्रेणी



**गीता वीरभद्र भट्टः**
आचार्यद्वितीयवर्षम्
राष्ट्रस्तरे पुराणेतिहासशलाकायां प्रथमा
राज्यस्तरे पुराणेतिहासशलाकायां प्रथमा
प्रज्ञानम् – संस्थया समायोजितानां राज्यस्तरीयस्फूर्तिस्पर्धायां चतुर्थश्रेणी



**नरसिंह गणेश भट्टः**
आचार्यद्वितीयवर्षम्
तेनालीपरीक्षायां प्रथमश्रेणी
राज्यस्तरे व्याकरणशलाकायां द्वितीयः



**सुदर्शनः एम्. एस्.**
आचार्यद्वितीयवर्षम्
अष्टादशतमनाट्यमहोत्सवे वीरपृथ्वीराजनाटके प्रथमः
तरुणोदयसंस्थायाम् आयोजितभाषणस्पर्धायां द्वितीयः



**अपर्णा होळ्ळा के. ए.**
आचार्यप्रथमवर्षम्
अष्टादशतमनाट्यमहोत्सवे वीरपृथ्वीराजनाटके प्रथमा
राज्यस्तरे अक्षरश्लोकीस्पर्धायां द्वितीया



**शशाङ्क शिवराम भट्टः**
आचार्यद्वितीयवर्षम्
राष्ट्रस्तरे शास्त्रार्थविचारे तृतीयः
राज्यस्तरे शास्त्रार्थविचारे प्रथमः



**प्रणव डोङ्गे**
प्राक्-शास्त्रिद्वितीयवर्षम्
राष्ट्रस्तरे भगवद्गीताकण्ठपाठस्पर्धायां तृतीयः
राज्यस्तरे भगवद्गीताकण्ठपाठस्पर्धायां प्रथमः



**श्रीनिधि एम्. भट्ट**
शास्त्रिद्वितीयवर्षम्
अहमदनगरपरीक्षायां प्रथमश्रेणी



**सत्यप्रमोदः**
शास्त्रिद्वितीयवर्षम्
प्रज्ञानम्- संस्थया समायोजिता तर्कप्रवेशप्रथमपरीक्षायां प्रथमश्रेणी



**वलुष्का बहुगुण**
शास्त्रिद्वितीयवर्षम्
प्रज्ञानम्- संस्थया समायोजिता तर्कप्रवेशप्रथमपरीक्षायां प्रथमश्रेणी



**सौपर्णिका**
शास्त्रिद्वितीयवर्षम्
प्रज्ञानम्- संस्थया समायोजिता तर्कप्रवेशप्रथमपरीक्षायां प्रथमश्रेणी



**सुधन्वा**
शास्त्रिप्रथमवर्षम्
प्रज्ञानम्- संस्थया समायोजिता तर्कप्रवेशप्रथमपरीक्षायां प्रथमश्रेणी



**अपर्णा एन्.**
प्राक्-शास्त्रिप्रथमवर्षम्
प्रज्ञानम्- संस्थया समायोजिता राज्यस्तरीयस्पूर्तिस्पर्धायां प्रथमश्रेणी



**मनस्विनी के. जि.**
आचार्यद्वितीयवर्षम्
राज्यस्तरे पुराणेतिशलाकायां द्वितीया



**पङ्कज पवार्**
आचार्यप्रथमवर्षम्
राज्यस्तरे साहित्यभाषणे द्वितीयः



**चन्द्रशेखर हेब्बारः**
आचार्यप्रथमवर्षम्
राज्यस्तरे जैनबौद्धदर्शनभाषणे द्वितीयः



**नन्दना के. पि.**
शास्त्रिद्वितीयवर्षम्
राज्यस्तरे वेदान्तशलाकायां द्वितीया



**अर्चना महाबलेश्वर भट्टः**
शास्त्रिद्वितीयवर्षम्
प्रज्ञानम्- संस्थया समायोजिता राज्यस्तरीय बालसंस्कृतिशिक्षणा स्पर्धायां द्वितीयश्रेणी



**मुक्ता श्रीपाद लघाटे**
शास्त्रिप्रथमवर्षम्
राज्यस्तरे न्यायशलाकायां द्वितीया



**सुब्रह्मण्यः एस्.**
आचार्यद्वितीयवर्षम्
राज्यस्तरे मीमांसाभाषणे तृतीयः



**रोहित् शर्म**
आचार्यप्रथमवर्षम्
राज्यस्तरे साहित्यशलाकायां तृतीयः



**सुधांशु शुक्ला**
शास्त्रितृतीयवर्षम्
काश्यां संस्कृतभारत्याः स्पर्धायां ज्यौतिषशलाकायां तृतीयः



**भारती होसमनि**
प्राक्-शास्त्रिद्वितीयवर्षम्
राज्यस्तरे अमरकोशकण्ठपाठस्पर्धायां तृतीया



**सिन्दूरा**
प्राक्-शास्त्रिप्रथमवर्षम्
प्रज्ञानम्- संस्थया समायोजिता राज्यस्तरीयस्पूर्तिस्पर्धायां तृतीयश्रेणी

## अष्टादशे संस्कृतनाट्यमहोत्सवे वीरपृथ्वीराज-नाटके प्रथमपुरस्कारभाजः छात्राः



नवनीतकृष्ण जे.
(विशेषपुरस्कारः)
आचार्यद्वितीयवर्षम्



योगेश विष्णु भट्टः
(विशेषपुरस्कारः)
आचार्यद्वितीयवर्षम्



अम्बिका भट्ट ए.
(विशेषपुरस्कारः)
शास्त्रितृतीयवर्षम्



रजत भट्टः बि.
आचार्यद्वितीयवर्षम्



गणेश कुमरः पि.
आचार्यद्वितीयवर्षम्

## अष्टादशे संस्कृतनाट्यमहोत्सवे वीरपृथ्वीराज-नाटके प्रथमपुरस्कारभाजः छात्राः



प्रज्वल अवधूत जोशी
आचार्यप्रथमवर्षम्



निरंजन एच् भट्टः
आचार्यप्रथमवर्षम्



नरेश जोशी
शिक्षाशास्त्रिद्वितीयवर्षम्



अंकित जैन
शिक्षाशास्त्रिद्वितीयवर्षम्



कबिता देवी
शिक्षाशास्त्रिद्वितीयवर्षम्



भाग्यश्री एल्.
शिक्षाशास्त्रिद्वितीयवर्षम्



मञ्जुनाथ जि. हेगडे
शिक्षाशास्त्रिप्रथमवर्षम्



ज्योतिरञ्जनः
शिक्षाशास्त्रिप्रथमवर्षम्



प्रवीण प्र हेगडे
शास्त्रितृतीयवर्षम्



नागरत्ना भट्ट
शास्त्रितृतीयवर्षम्



गगना हेच्. वि.
शास्त्रिद्वितीयवर्षम्



निरञ्जन गोखले एम्.
शास्त्रिद्वितीयवर्षम्



महाबलेश्वर हेगडे
शास्त्रिप्रथमवर्षम्



नहुष एस्. मोराजे
प्राक्-शास्त्रिद्वितीयवर्षम्



अनिरुद्ध काकत्कर्
प्राक्-शास्त्रिप्रथमवर्षम्

## परिसरे प्रवृत्तानां विविधकार्यक्रमाणां चित्राणि




कन्नडराज्योत्सवकार्यक्रमे भाषमाणः श्रीमान् मुरलीवर्यः ।



संस्कृतोत्सवे परिसरपरिवारम् अनुगृह्णन्तः
जगद्गुरुश्रीश्रीविधुशेखरभारतीमहास्वामिनः ।



वाग्वर्धिनीपरिषदः उद्घाटनभाषणं विदधानः कुलपतिः आचार्यः श्रीनिवासवरखेडीवर्यः ।



छात्रैः सह संवादं कुर्वन् आचार्यः श्रीनिवासवरखेडीवर्यः ।



हिन्दीदिवसकार्यक्रमस्य उद्घाटनं कुर्वन् निदेशकः आचार्यः सुब्राय वि भट्टवर्यः ।



NAAC पर्यवेक्षणपूर्वसिद्धतायाः मार्गदर्शनं कुर्वन् आचार्यः ए. पि. सच्चिदानन्दवर्यः ।




परिसरे काफी डे कार्यक्रमः



जगद्गुरुश्रीचरणैः सह स्वर्णपदकभाजः छात्राः ।



जगद्गुरुश्रीचरणानाम् अनुग्रहं प्राप्नुवन्ती डा. प्रमोदादेवी ओडेयर् ।



परिसरस्य स्वातन्त्र्यदिनोत्सवः ।

# शारदा – २०२१-२२

## अनुक्रमणिका

### संस्कृतविभागः

# शारदा – २०२१-२२




ISSN: 2320-740X

# शारदा – २०२१-२२



## हिन्दी विभाग



## English Section

# शारदा – २०२१-२२

## ಕನ್ನಡ ವಿಭಾಗ





ISSN: 2320-740X

# लौकिकलिङ्गलक्षणम् – अनुपपत्तयश्च


प्रो. सि. एस्. एस्. नरसिंहमूर्तिः

निदेशकः


पाणिनीये चतुस्सप्ततिः (७४) अधिकारसूत्राणि वर्तन्ते । तत्र सूत्रनिर्देशाः इत्थं विद्यन्ते । यथा -

१) प्रथमानिर्देशः - सूत्रकारेणापूर्वतया बोधितः । यथा – प्रत्ययः, समर्थः, अव्ययीभावः, बहुव्रीहिः, द्वन्द्वः, कृत्, तद्धिताः इत्यादयः ।

२) पञ्चमीनिर्देशः - यथा – शास्त्रैकगम्यमानकार्यबोधकः । यथा - धातोः, प्रातिपदिकात्, अनुपसर्जनात्, पदात्, कालात् इत्यादयः ।

३) षष्ठीनिर्देशः - यथा – शास्त्रीयकार्यसम्पादनार्थकः । यथा - अङ्गस्य, भस्य, उत्तरपदस्य, पदस्य इत्यादयः ।

४) सप्तमीनिर्देशः - यथा - शास्त्रे क्वचिद्बोधितायाः संज्ञाया अनुवादेन कार्यबोधकः, अथवा लौकिकसंज्ञानुवादेन कार्यबोधकः । यथा - कारके, स्त्रियाम्, आर्धधातुके, भूते, शेषे, अलुगुत्तरपदे, संहितायाम् इत्यादयः ।

स्त्रीलिङ्गबोधकाः प्रत्ययाः= स्त्रीप्रत्ययाः । एते प्रत्ययाः पाणिनीयाष्टके स्त्रियाम्(४-१-३) इत्यधिकारे कथिताः । ते च प्रत्ययाः नव सन्ति । ते यथा - टाप्, डाप्, चाप्, ङीप्, ङीष्, ङीन्, ऊङ्, ति, ष्फ इति । एते च प्रत्ययाः द्योतकाः भवन्ति । वाचकत्वे स्त्रीप्रत्ययसत्त्वे एव स्त्रीत्वं प्रतीयेत, तदभावे नेत्यर्थः स्यात् । तर्हि वाक्, गीः, उपानत्, परिषत्, सदः इत्यादिस्थलेषु स्त्रीत्वं न प्रतीयेत । तत्र कस्यापि स्त्रीप्रत्ययस्याभावात् । द्योतकत्वे तु प्रत्ययाभावेऽपि प्रातिपदिके स्त्रीत्वस्य सत्त्वान्न दोषः ।

स्त्रियामिति सप्तमीनिर्देशो वर्तते । सप्तमीनिर्देशस्यायं स्वभावो यत्सर्वदा सिद्धमेवार्थं बोधयति ।

ISSN: 2320-740X

यथा - घटे जलमस्ति, वृक्षे पुष्पाणि सन्ति । यस्य घटविषयकं ज्ञानमस्ति तं प्रत्येव वाक्यमिदं प्रयुङ्क्ते । यो घटं न जानाति तं प्रति प्रथमान्तेनैव प्रयोगः क्रियते - घटोऽस्ति, वृक्षोऽस्ति । प्रकृतेऽत्र सप्तमीनिर्देशेन स्त्रीत्वरूपं लिङ्गं सिद्धमस्तीत्याचार्यस्य सङ्कल्पः स्यात् । तच्च लौकिकमुत शास्त्रीयमिति सन्देहो भवति। अत्र शास्त्रे तु शास्त्रीयं लिङ्गं क्वापि नोक्तम् । लौकिकम् उत दर्शनान्तरीयं वाऽङ्गीकृत्य कार्याणि साधनीयानि । तत्रादौ लौकिकं लिङ्गलक्षणं किमिति परिशीलयामः ।

किं लिङ्गम्? ततः किं स्त्रीत्वम्?

लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्गम् । लौकिकानां व्यवहारे लिङ्गमेवं वर्तते ।

**स्तनकेशवती स्त्री स्याल्लोमशः पुरुषस्मृतः ।**

**उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥**

स्तनकेशवती स्त्री स्यादित्यत्र स्तनकेशग्रहणमन्येषामपि प्रसवयोग्यप्रजननादीनामुपलक्षणम् । एवं लोमग्रहणमपि मेढ्रादीनां पुंधर्माणामुपलक्षणम् । स्त्रीपुंसयोरुभयोरपि तुल्यजातीयं तन्नपुंसकं भवति । इदं चेतनैकनियतं लिङ्गलक्षणम् । अत्र सूत्रे भाष्ये एवं विचार आरब्धः - **स्त्रियाम् इत्युच्यते, का स्त्री नाम? लोकतः ।** तत्र कैयटः एवं व्याख्यत् - वस्तुस्वरूपजिज्ञासायां प्रथमान्तेन प्रश्नः युक्तः, कस्यां स्त्रियामित्युच्यमाने विशेषविषयः प्रश्नः । अतः किं लिङ्गं स्वीकर्तव्यमिति भाष्याशयः । तत्र यदि लौकिकानां लक्षणं स्वीक्रियेत तदा बहवो दोषाः भाष्यकारेण प्रादर्शिषत । ते यथा -

**१) लिङ्गात्स्त्रीपुंसयोर्ज्ञाने भ्रुकुंशे टाप्प्रसज्यते ।** तथाहि - भ्रुकुंशो नामस्त्रीवेषधारी नटः, तस्येदानीं स्तनकेशसम्बन्धात् स्त्रीत्वे सति टाप् प्राप्नोति । न च स्तनकेशवतीत्यत्र नित्ययोगे मतुब्विधानात् भ्रुकुंशशब्दस्य तथाऽभावान्न स्त्रीत्वमिति चेद् - सामाजिकानां स्त्रीवेषधारिण एव तस्य दर्शनात् स्त्रीत्वं वर्तते । नित्ययोगे मतुपः स्वीकारे दोषान्तरमप्यस्ति । केशवपने च स्त्रियाः स्त्रीत्वन्न स्यात्, तदानीं केशसम्बन्धाभावात् । स्तनादीनामाविर्भावात्पूर्वं बाल्यावस्थायां स्त्रीत्वव्यवहारो न स्यात् ।


ISSN: 2320-740X

स्तनातिशयसम्बन्धस्य उत्तरकालभावित्वाद् अतिशयने मतुपि विज्ञायमाने प्राक् स्त्रीत्वं न स्यात् । अव्याप्तिसद्भावादस्य लौकिकव्यवहारस्य यथावत्सङ्गमनं दुर्लभम् । अतोऽन्येषामुपलक्षणमिति निश्चप्रचमङ्गीकर्तव्यम् ।

**२) नत्वं खरकुटीः पश्य ।** खरकुटीः = नापितगृहम् । चञ्चाः पश्य, वर्ध्रिकाः पश्य, खरकुटीः पश्य "तस्माच्छसो नः पुंसि" इति नत्वं प्राप्नोति । चञ्चा तृणमयः पुमान्" इति कोशः । चञ्चेव मनुष्यः= चञ्चा । संज्ञायां च(५-३-९७) इवार्थे कन् स्यात् समुदायश्चेत्संज्ञेत्यर्थकेन कन्प्रत्ययः, तस्य लुम्मनुष्ये(५-३-९८) इत्यनेन संज्ञायां च इति विहितस्य कनः लुग्भवति मनुष्ये वाच्ये इति लुक् । चञ्चेत्यस्य वर्ध्रिका इत्यर्थः । यद्यपि मनुष्यशब्दः स्त्रीपुंससाधारणस्तथापि सम्प्रति पुरुषसंज्ञायामत्र प्रसङ्गः । नापितगृहे यथा लोमानि भवन्ति तद्वल्लोमानि कस्यचित् मनुष्यस्य सन्तीत्यभिप्राये नापितगृहमिव इति इवार्थे कन्प्रत्ययः । तस्य लुम्मनुष्ये(५-३-९८) इत्यनेन संज्ञायां च इति विहितस्य कनः लुग्भवति मनुष्ये वाच्ये इति लुक् । तत्र मनुष्यस्य वाच्यत्वात् तस्य च लोमशत्वात् पुंस्त्वात् खरकुटीः पश्य इत्यत्र नत्वप्रसङ्गः ।

**३) खट्वा वृक्षौ न सिद्ध्यतः ।** लौकिकं यल्लिङ्गं तत् खट्वावृक्षादिषु सुतरां नास्ति । अतः खट्वा इत्यत्र टाप्, वृक्षान् इत्यत्र "तस्माच्छसो नः पुंसि" इति नत्वं न प्राप्नोति । तर्ह्यनयोः किं लिङ्गं न्याय्यमिति सन्देहे **नापुंसकं भवेत्तस्मिन्** इति वार्तिककृदवदत् । नपुंसके = वस्तुनि भवं लिङ्गम् = नापुंसकं, नपुंसकत्वमित्यर्थः । तदभावे नपुंसकम् इति पूर्वमुक्तमेव । तदभावे = स्त्रीपुंसलिङ्गाभावे नपुंसकं लिङ्गं न्याय्यम् । स्त्रीत्वपुंस्त्वयोरभावात् लिङ्गवत्त्वेन स्त्रीपुंससदृशत्वाच्च सत्त्वरूपत्वाच्च लिङ्गप्रतीतिः भवेत् । किं तल्लिङ्गमिति चेद् - **असत्तु मृगतृष्णावत्** इति । तद्यथा - मृगास्तृषिता अपां धाराः पश्यन्ति, न च ताः सन्ति । मृगतृष्णासु असदपि जलं यथा जलाभासः तथा कस्यचिल्लिङ्गस्यानवभासेऽपि नपुंसकमिति व्यवहारः । वस्तुतोऽसत्वेऽपि बुद्धिसत्ता सर्वत्राङ्गीक्रियते ।

उक्तञ्च परमार्थसारे भगवता पतञ्जलिना -

**मृगतृष्णायामुदकं शुक्तौ रजतं भुजङ्गमो रज्ज्वाम् ।**

**तैमिरिकचन्द्रयुगवद्भ्रान्तमखिलं जगद्रूपम् ॥ इति॥**

ततः **गन्धर्वनगरं यथा ।** यथा गन्धर्वनगराणि दूरतो दृश्यन्ते, उपसृत्य च नोपलभ्यन्ते, तद्वत्खाद्वावृक्षयोरसल्लिङ्गं द्रष्टव्यम् । वस्तुतोऽसत्त्वमपि सत्त्वमेव, परं तु न दृश्यते । यथा - **आदित्यगतिवत्सन्न** इति । यथा आदित्यगतिः सती प्रत्यक्षेण नोपलभ्यते देशान्तरप्राप्त्याऽनुमीयते तथा खद्वावृक्षयोः सदपि लिङ्गं सूक्ष्मत्वात्प्रत्यक्षेण ग्रहीतुमशक्यं, तत्कृतकार्यदर्शनादनुमीयते ।

समाधानान्तरमपि उक्तम् - **वस्त्रान्तर्हितवच्च तत् ।** यथा वस्त्रान्तर्हितानि द्रव्याणि नोपलभ्यन्ते तद्वत् खद्वावृक्षयोः सल्लिङ्गं  नोपलभ्यन्ते । विषम उपन्यासः - वस्त्रान्तर्हितानि द्रव्याणि वस्त्रापाये उपलभ्यन्ते । खद्वावृक्षयोः पुनर्येऽप्येते रथकारा वाशीवृक्षादनहस्ता मूलात्प्रभृति आ अग्राद्वृक्षांस्तक्ष्णुवन्ति तेऽपि तयोर्लिङ्गं नोपलभन्ते? केनैतदवसीयते -  खद्वावृक्षयोः सल्लिङ्गं  नोपलभ्यते इति ।

यदि सत्,  तदा ऽनुपलम्भे किं कारणमिति चेद् -  भाष्यकृदेवं विवृणोति - षड्भिः प्रकारैः सतां भावानामनुपलब्धिर्भवति - १) अतिसन्निकर्षात् २) अतिविप्रकर्षात् ३) मूर्त्यन्तरव्यवधानात् ४) तमसावृतत्वात् ५) इन्द्रियदौर्बल्यात् ६) अतिप्रमादात् इति ।

१) अतिसन्निकर्षात्  - स्वचक्षुर्गतमञ्जनम् ।

२) अतिविप्रकर्षात्  - उड्डीनस्य शकुनेः ।

३) मूर्त्यन्तरव्यवधानात् - कुड्यादिव्यवहितस्य सुवर्णादेः ।

४) तमसावृतत्वात् -  अन्धकाराक्रान्तस्य श्वभ्रादेः(गर्तः) ।

५) इन्द्रियदौर्बल्यात्  -  तिमिरावृतस्य नयनादेः ।

६) अतिप्रमादात्  -  विषयान्तरासक्तचित्तत्वात् ।

सौक्ष्म्यमप्यनुपलब्धौ कारणं भवति, तत्तु इन्द्रियदौर्बल्येऽन्तर्भावान्न पृथगुपन्यासः । दिव्यचक्षुः



ISSN: 2320-740X

श्रोता हि सूक्ष्मप्यर्थमुपलभन्ते, न तु दुर्बलेन्द्रियाः । अतोऽत्र इन्द्रियदौर्बल्यमेव कारणं भवितुमर्हतीति निश्चीयते। **यल्लोके दृष्ट्वा एतदवसीयते** इति भाष्यकृदाह।

**लोक्यते येन शब्दार्थो लोकस्तेन स उच्यते।**

**व्यवहारोऽथवा वृद्धव्यवहर्तृपरम्परा ॥**

अयमर्थः - यत् = निमित्तम्, उपलभ्य निमित्तवत्यर्थे प्रत्यय उपजायते, तत स्त्र्यादिशब्दवाच्यम्। तत् = निमित्तवदर्थरूपं स्त्र्यादिशब्देन अवसीयते = प्रत्याय्यते।

अतः चेतनाचेतनसाधारणं दर्शनान्तरीयोक्तः लिङ्गव्यवहारः वैयाकरणैः स्वीक्रियते - सत्त्वरजस्तमसां गुणानामवस्था उपचया-पचय-साम्यरुपाः इति। तत्र गुणानामुपचयः पुंस्त्वम्, तेषामेवपचयः स्त्रीत्वम्, तेषां साम्यं तु नपुंसकत्वमिति । तत्तदवस्थाविशिष्टागुणा एव लिङ्गमिति वक्तुः सांख्यानामपि अत्रैव तात्पर्यम्।

**********

## समाजनिर्मितेः कार्यं कुर्याच्छैक्षिकशासनम्

**प्रो. चन्द्रकान्तः**

**अध्यक्षः, शिक्षाशास्त्रविभागः**

समाजो नाम मानवानां सङ्घः । अयं समाजः गतिशीलो वर्तते । अत्र कारणं सांस्कृतिकम् आर्थिकं दार्शनिकं राजनैतिकं वैज्ञानिकं सामाजिकं तान्त्रिकं च क्षिप्रपरिवर्तनं वर्वर्ति । परिष्ठितेः परिवर्तनमनुसृत्य शैक्षिकप्रशासने सामञ्जस्यसम्पादनमत्यन्तमनिवार्यं भवति । अपि च शैक्षिकप्रशासकः तदनुगुणं क्रियाशीलः भवेत्। एतद्दृष्ट्या शैक्षिकप्रशासनं बौद्धिकैकीकरणस्य साधनं वर्तते। समाजे सर्वेषां मध्ये सामञ्जस्यसम्पादनस्य क्रियाशीलोऽद्यमः भवेत् शैक्षिकप्रशासनम् । प्राचीना साम्प्रदायिकी

शैक्षिकप्रशासनप्रक्रिया सामाजिकसेवारूपेण चित्रितावर्तत । परं नूतनप्रवृत्तीनां समायोजनेन सह शैक्षिकवैश्वीकरणस्य कृते समुचिताः योजनाः तासां कार्यान्वयनञ्चाधुना शैक्षिकपथ्याह्वानमिव (Educational Challenge) राजते। समाजस्य प्रकृत्यनुगुणं शैक्षिकप्रशासने तस्योद्देश्येषु च सामरस्यं सम्पादनीयं वर्तते । आत्मनिर्भरतायाः सम्पूर्तिः शैक्षिकप्रशासनेन भवेत् । जर्मनदेशे जापान्देशे रष्यादेशे च शैक्षिकसंस्थाः आत्मविश्वासपूर्णानां यूनां निर्माणे उत्तरदायिन्यः वर्तन्ते । प्रजातन्त्रात्मकसमाजे एतदनिवार्यमपि विद्यते । शैक्षिकोद्देश्यानां पूरणार्थं शैक्षिकप्रशासनानां कृते निर्देशः प्रदेयो वर्तते । अतः प्रशासनस्य स्वरूपनिर्माणार्थं कार्यविशेषस्य मार्गदर्शनं, नियन्त्रणार्थमधिकृताधिकारोत्तरदायित्वानां व्यवस्था, मानवीयसम्बन्धस्य संरक्षणार्थं बद्धता च शैक्षिकसंघटनानां पुरतः विद्यमानाः उत्कटाकांक्षाः वर्तन्ते । एतेषामंशानामनुपालनेनैव शैक्षिकप्रशासनं व्यवस्थितं सफलं च सञ्जायते । अतः शैक्षिकप्रशासकैः प्रशासनस्य महत्त्वपूर्णानि तत्त्वानि ज्ञेयानि वर्तन्ते । तदर्थमेव प्रशासनस्यार्थः परिशीलनीयः इति शिक्षाविदामाघोषः ।

शैक्षिकप्रशासनं प्रशासनशास्त्रस्यैवाङ्गं विद्यते । तस्मात् प्रशासनस्यार्थावगतिः शिक्षाक्षेत्रे अपरिहार्या राजते । सुप्रशासनं विना कस्यचिल्लघुपरिवारस्यापि पुरोगतिः नावलोक्यते। विना प्रशासनं किमपि कार्यं वा कापि संस्था लोके न विद्यते। प्रशासनमाङ्ग्लभाषायां एड्मिनिस्ट्रेशन् (Administration) इत्युच्यते । प्रशासनपदस्य शाब्दिकः अर्थः भवति प्रकृष्टं शासनमिति वा प्रकर्षेण शासनमिति । प्र उपसर्गपूर्वकस्य शास अनुशिष्टौ इति धातोः ल्युट् प्रत्यये प्रशासनमिति पदं सिद्ध्यति । **कुर्वीत शासनं राजा सम्यक् सारापराधतः। (म. स्मृ-9-262)** निर्देशः निदेशः आदेशः आदेशनमित्याद्यर्थाः अस्य शासनपदस्य वर्तन्ते । पाल्यते अनेन प्रशासने काचित् संस्था वा कश्चित् समूहः इत्यर्थः । तदेवेवं वक्तुं शक्यते यत् - प्र-प्रकृष्टा, शा-शासिता, स-संस्था, न-नयेन (उपायेन) इति । आङ्ग्लभाषायाः पदं स्वीकृत्यापि विस्तृतं व्यवस्थितं विवरणं विधातुं शक्यते । तथा हि


ISSN: 2320-740X

"Administration" इत्यत्र विद्यमानवर्णा एव प्रशासनस्य रहस्यं प्रतिपादयन्ति । तद्विवरणमेवात्र विशिष्यते ।

* A- Accountable - प्रशासनं दायित्वपूर्णं कार्यं वर्वर्ति । प्रशासकः संस्थायां जायमानानां समेषां कार्याणाम् उत्तरदायी भवति । एतत् मम सम्बद्धं नास्ति, एतत् मदीयम् इति भेदभावं प्रशासकः सर्वथा न कुर्यात् । सर्वस्यापि कर्मणः उत्तरदायी स एव भवति । अतः प्रशासनमेकमुत्तरदायित्वपूर्णं कार्यमिति कथने न कस्यापि विप्रतिपत्तिर्भवितुमर्हति ।

* D- Directional - प्रशासनं निष्कपटं सरलञ्च कार्यमस्ति, प्रशासकः कदापि कपटी न भवेत्स्वयं, नाचरेच्च कापट्यम् अन्यैः सहोद्योगिभिस्सह । कापट्येन जायते खलु धर्मनाशः। महाभारतादिषु युगान्तरीयेषु अपि एष धर्मः सनातनः अवलोक्यते ।

*M- Managerial - प्रशासनं व्यवस्थापनात्मकं कार्यं वर्तते । कस्य पदार्थस्य कुत्र स्थापनं कर्त्तव्यं, कथं तस्य उपयोगः भवेदिति मत्वा समायोजनं करणीयमिति प्रशासकः जानीयादेव । न केवलं भौतिकसंसाधनानां व्यवस्थापनं महत्त्वपूर्णं स्थानं भजते मानवीयसंसाधनानां व्यवस्थापनस्यापि महत्त्वपूर्णं स्थानं विद्यते । उपलभ्यमानानां संसाधनानां सम्यक् व्यवस्थापनेन प्रशासनं सफलं जायते ।

* I-Institutional - प्रशासनं संस्थागतं कार्यं भवति । अतः व्यक्तिगतहितमत्र निहितमस्ति । न तु तदेव प्रधानं भवति । संस्थायाः हितमेवात्र प्रधानं भवति । तस्मात् संस्थायाः विकासार्थमपेक्षितं कार्यं प्रशासकः सर्वदा कुर्यात् । यदि तत्र विघटनात्मकं किञ्चित् प्रशासकः समाचरति तर्हि संस्थायाः विनाशः निश्चयेन भवति । अतः संस्थायाः विकासार्थं प्रशासकः संस्थागतयोजनायाः (institutional planning) तत्त्वान्यवगत्य संस्थां प्रशिष्यात् ।

*N- National - इदं प्रशासनं सार्वजनिककार्यं भवति कदापि वैयक्तिकविचाराः अत्र स्थानं न प्राप्नुयुः। राष्ट्रियविकासाय सर्वतोभावेन संस्थायाः विद्यालयस्य महाविद्यालयस्य विश्वविद्यालयस्य वा प्रशासकः योगदानं सकारात्मकं प्रयच्छेत्। विद्यालयविकासे समाजस्य विकासः निहितोऽस्ति, समाजस्य विकासे राष्ट्रस्य विकासः निहितो वर्तते । अतः प्रशासनं सर्वत्र राष्ट्रहितभावनया सम्पद्येत ।

*I- Instructional - प्रशासनस्य मूलाधारतन्त्रं निर्देशनं भवति ।

उत्तमनिर्देशनं विना प्रशासने यत्किमपि कार्यं समर्पकरूपेण न सेत्स्यति । समयानुसारं समुचितनिर्देशनं प्रशासकः कर्मचारिभ्यः, छात्रेभ्यः, अधिकारिभ्यः च प्रयच्छन् संस्थां सञ्चालयति चेदेव किञ्चिदुत्पाद्य देशस्य मानव-सम्पद्रूपेण भौतिकसम्पद्रूपेण वा राष्ट्रविकासे समुचितं योगदानं कर्तुमर्हति ।

*S- Significant - प्रशासनमेकं महत्त्वपूर्णं विशिष्टं च कार्यमस्ति । प्रशासकः कार्यमेतत् सार्थकरूपेण सम्पादयेत् येन समाजः बहुधा उपकृतः भवेत् । प्रशासनकार्यं विशिष्टं कर्त्तव्यं चेत् विविधाः आकर्षकयोजनाः प्रशासने समायोजनीयाः । “यो यस्मिन् कर्मणि कुशलः तं तत्र नियोजयेदिति” न्यायं सम्यक् विज्ञाय तदनुगुणं प्रशासकः कार्यवितरणं कृत्वा विशिष्टरूपेण कृतानि कार्याणि सार्थकानि यथा भवेयुः तथा संस्थां प्रशिष्यात् ।

*T- Technical - प्रशासनमेकं तान्त्रिकं कार्यं वर्तते । प्रशासनं यदा उद्यमरूपेण प्रस्तुतं भवति तदा उत्पादकत्वं तत्र समापादितं जायते अन्यथा जडतां प्राप्नोति । यन्त्रवत् प्रशासनं नियतं कार्यसम्पादनतत्त्वयुतं वर्तते । यन्त्रे दोषः भवति चेद्यथा न चलति तथैव प्रशासने दोषः भवति चेत् सर्वं कार्यं निरर्थकं सम्पद्यते ।


ISSN: 2320-740X

*R- Rational - तर्कसम्मतं विवेकशीलं च कार्यं भवति प्रशासनम् । "सहसा विदधीत न क्रियाम् अविवेकः परमापदां पदम्" इति भारवेः वाक्यमत्र (तर्कसङ्गतं) सम्यगन्वेति । प्रशासकः प्रत्येकं पदमपि विवेकबुध्या तर्केण च निक्षिपेत् ।

*A- Adequate – आवश्यकतानुसारं कार्यं प्रशासने सम्पादनीयं भवति । यत् कार्यमनुतिष्ठति प्रशासकः तत् समाजेन, संस्थया, सर्वकारेण च स्वीकारार्हं भवेत् । अतः व्यवस्थितमिदं प्रशासनकार्यं वर्तते, न तु प्रशासकहितसम्पादकं भवति ।

*T- Timely - प्रशासनं समुचितसमये एव कार्यसम्पादनस्य कौशलं प्रतिपादयति । यथा “अविधिना कृतमकृतमिति” न्यायः वर्तते तद्वत् प्रशासने अकाले कृतम् अनर्थजनकं भवति । अतः समये यत् कर्त्तव्यं तदवश्यमेव कर्त्तव्यं भवति प्रशासने । अतः प्रशासनं सामयिकं इति प्रोच्यते बुधैः ।

*I- Imperious - प्रशासनमभिमानपूर्णं सम्मानयुतं च वर्वर्ति । यद्यपि प्रजातन्त्रस्य समानता धर्मः पालनीयः तथापि प्रशासनस्य प्रभुत्वपूर्णं स्वरूपं नैव बाधितं भवति । नियमानुसारमाधिकारिकं रूपं प्रशासनम् अभिधत्ते । प्रशासकेन प्रशासनस्य गौरवं मानञ्च वर्धनीयं संरक्षणीयमपि ।

* O- Organized - प्रशासनं सङ्घटितं कार्यं भवति । विघटनमत्र विनाशसूचकं भविष्यति । एकव्यक्तिसाध्यं किमपि प्रशासने न भवति । यद्यपि एकेनैव व्यक्तिविशेषेण किञ्चित् महत्त्वपूर्णं कार्यं साध्यते तथापि तद् संघटनस्यैव प्रतिफलितं वा साध्यं भविष्यति । “अहं करोमीति नास्ति किञ्चित्, वयं कुर्मः इत्येवात्र सर्वमपि” । “स्वार्थस्य स्थानं शून्यं परार्थस्य स्थानं सर्वमिति” नियमः अनुसरणीयो वर्तते ।

* N- Necessary - प्रशासनं सर्वत्र आवश्यकं तत्त्वमस्ति । यद्विना कश्चन साधारणपरिवारोऽपि साफल्यं वा पुरोगतिं नैवावाप्नोति । प्रत्येकं समूहस्य वा संस्थायाः कार्यं सुचारुसञ्चालनार्थं प्रशासनं वा प्राशासनिकं तत्त्वमनिवार्येण समाश्रयणीयमेव ।

एवञ्चात्र समुल्लिखितानि सर्वाण्यपि आङ्ग्लपदानि क्रियाविशेषणानि वर्तन्ते । अर्थात् प्रशासनं सर्वैरपि एतैः विशेषणैः समलङ्कृतं यदा जायते तदैव पूर्वनिर्धारितं लक्ष्यं समवाप्तुं समर्थं सञ्जायते । कस्याप्येकस्यांशस्य लुप्तता वा त्यागः संस्थायाः कृते हानिं जनयति इति कथने नास्ति संशयलेशः । शिक्षाक्षेत्रमपि एतादृशमुत्तमं प्रशासनमेव कांक्षति । यतो हि शिक्षयैव समाजः परिपुष्टः सुनिर्मितः च जायते। तस्मात् समाजनिर्मितेः कार्यं कुर्यात् शैक्षिकप्रशासनमिति वाक्यं सार्थकतां भजते ।

**********

## सोमेन यजेत - इत्यत्र वाक्यार्थविचारः

**प्रो. रामचन्द्रुलबालाजी**

**आचार्यः, शिक्षाशास्त्रविभागः**

**सोमेन यजेत इत्यत्र सोमपदस्य सामानाधिकरण्येन वैयधिकरण्येन च अन्वयशङ्का तन्निराकरणञ्च ।**

सोमेन यजेत इत्यत्र सोमपदस्य मत्वर्थलक्षणमङ्गीकृत्य सोमवता यागेनेष्टं भावयेत् इत्यर्थः सिद्धान्ते वर्ण्यते । मत्वर्थलक्षणामनङ्गीकृत्य सोमस्य अन्वय एव न सम्भवति । तथाहि सोमयागयोः एकरूपेण (करणत्वेन) भावनायामन्वयः (सामानाधिकरण्येनान्वयः) सोमेन यागेन इष्टं भावयेदितिरीत्या वक्तुं न शक्यते । तथा सति करणत्वेन सोमस्य यागस्य च विधानात् विधेयभेदात् वाक्यभेदः स्यात् । एवं यथा यागस्य फलं प्रति साक्षात् करणत्वं तथा सोमस्यापि करणत्वेन प्राधान्यापत्तिश्च । एवं सोमस्य यागार्थत्वानुपपत्तिश्च । यागे द्रव्यानुपपत्तिश्च । एवम् इष्टकर्मकभावनायाः समानपदोपात्तयागेनैव करणाकांक्षायाः निवृत्तौ भिन्नपदोपात्तसोमस्य करणत्वेन अन्वयासम्भवश्च स्यात् । अतः सोमयागयोः भावनायां सामानाधिकरण्येन अन्वयो न सम्भवति ।


ISSN: 2320-740X

वैयधिकरण्येनापि सोमयागयोरन्वयो न सम्भवति । तथा हि वैयधिकरण्येन अन्वयो द्विविधः । यागेन सोमं भावयेत् सोमेनेष्टं भावयेत् इत्येकः । सोमेन यागम्भावयेत्, यागेनेष्टम्भावयेदिति चापरः । तत्र प्रथमविधः वैयधिकरण्येन अन्वयो न सम्भवति । समानपदोपात्तत्वेन फलभावनायां करणत्वेन अन्वितस्य यागस्य सोमकर्मकभावनायां करणत्वेन अन्वयो न सम्भवति । एवं यागस्य सोमार्थत्वं च स्यात् । यागस्य सोमार्थत्वे अङ्गीक्रियमाणे अदृष्टद्वयकल्पनाप्रसङ्गः । तथा हि प्रोक्षणेन व्रीहिष्विव यागेन सोमे कस्यचित् दृष्टस्य अजननात् एकमदृष्टं कल्पनीयम्। एवं सोमेन इष्टं भावयेदित्यत्र सोमस्य 'ग्रहैर्जुहोति' इति होमेन भस्मीभावात् अदृष्टमन्तरेण सोमः स्वर्गं न जनयतीति तत्रापि अन्यददृष्टं कल्पनीयमिति अदृष्टद्वयकल्पना स्यात् । सोमेनेति तृतीयया करणत्वेनोपस्थितस्य सोमस्य साध्यत्वेन अन्वयानुपपत्तिश्च ।

एवं द्वितीयविधे वैयधिकरण्येनान्वये 'सोमेन यागं भावयेत्, यागेन इष्टं भावयेत्' इति रीत्या अन्वयात् यद्यपि न अदृष्टद्वयकल्पनादोषः । सोमस्य दृष्टद्वारैव यागार्थत्वात्। यागस्य इष्टार्थत्वे एकमेव अपूर्वं कल्पनीयम् । तथापि अप्राप्तत्वात् भावनाकरणत्वेन अन्वितस्य यागस्य साध्यत्वेन अन्वयो न सम्भवति । करणत्वसाध्यत्वयोः विरुद्धत्वात् । अतः यागेन स्वर्गम्भावयेदिति प्रथमतः करणत्वेन अन्वये सति पश्चात् सोमेन यागम्भावयेदिति यागस्य साध्यत्वेन अन्वयस्य वक्तव्यत्वात् वाक्यमेकं प्रसज्यते । तस्मात् सोमयागयोः सामानाधिकरण्येन वैयधिकरण्येन वा अन्वयः न सम्भवति इति सिद्धान्ते सोमपदे मत्वर्थलक्षणा स्वीक्रियते ।

**सोमस्य इतिकर्तव्यतात्वेन अन्वयमाशङ्क्य निराकरणम् ।**

ननु सोमेन यजेत इत्यत्र केन भावयेदिति करणाकाङ्क्षायां यथा यागः करणत्वेनान्वेति तथा कथं यागेन स्वर्गम्भावयेत्? इतिकर्तव्यताकाङ्क्षायां सोमस्य इतिकर्तव्यतात्वेन भावनायामेवान्वयोऽस्तु । एवञ्च न वाक्यभेदः न मत्वर्थलक्षणापत्तिरितिचेन्मैवम् । सोमेनेत्यत्र तृतीया करणत्ववाचिनी । न इतिकर्तव्यतात्ववाचिनी । यदि तावदितिकर्तव्यतात्वे लक्षणा स्वीक्रियते तदा "गुणे त्वन्याय्यकल्पना

(जैमिनीसूत्रम् ९.३.१५)” इति न्यायानुसारेण अप्रधाने सोमपदे एव मत्वर्थलक्षणा स्वीक्रियते । न प्रधाने तृतीया विभक्तौ।

न च “वेदो वा प्रायदर्शनात्” (जैमिनीसूत्रम् ३.३.२) इत्यत्र अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात्सामवेद (ऐतरेयब्राह्मणम् ५.५.६) इत्यर्थवादे उपक्रमस्थत्वेन असञ्जातविरोधित्वेन च वेदशब्दस्यैव प्राबल्यम् । उच्चैरृचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना इति विधिवाक्यगताः ऋगादिशब्दाः जघन्यत्वेन सञ्जातविरोधित्वेन च दुर्बलाः । उपक्रमानुरोधेन उपसंहारस्य अन्यथानयनमिति सिद्धान्तितत्वात्, तन्न्यायेन अत्रापि अन्त्ये प्रत्यये एव लक्षणा इति वाच्यम् । सिद्धस्य वस्तुनः इतिकर्तव्यतात्वं नास्ति । क्रियाया एव इतिकर्तव्यतात्वम् अत एव उक्तम् “नावान्तरक्रियायोगादित्यादि” (तन्त्रवार्तिकम्- अधिकरणम्-१.४.२) । अतः द्रव्यस्य सोमस्येतिकर्तव्यतात्वेनान्वयो न भवति । अपि च सोमेन यजेतेतिवाक्यं यागोत्पत्तिवाक्यम् , नाधिकारवाक्यम् । ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यस्य अधिकारविधित्वात् । उत्पत्तिवाक्ये च न इतिकर्तव्यताकांक्षा जायते । इष्टविशेषाकाङ्क्षाकलुषितत्वात् । तस्मात् सोमेन यजेतेत्यत्र सोमस्य इतिकर्तव्यतात्वेन अन्वयो न सम्भवति ।

**सोमेन यजेत इत्यत्र गुणविधित्वमाशङ्क्य निराकरणम् ।**

ननु सोमेन यजेतेत्यत्र मत्वर्थलक्षणामङ्गीकृत्य विशिष्टविधाने गौरवात् दध्ना जुहोति इतिवत् यागोद्देशेन सोमरूपगुणविधानमेवास्तु यागस्तु ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यनेन विहितः । तस्य च उद्भिदा यजेत पशुकामः इति वाक्यस्येव उत्पत्तिविधित्वम् , अधिकारविधित्वञ्च अङ्गीक्रियते । एवं तद्विहितयागानुवादेन सोमेन यजेत इत्यत्र सोमरूपगुणविधानमेवास्तु । न च ‘विधाने वाऽनुवादे वा, यागः करणमिष्यते, तत्समीपे तृतीयान्तः, तद्वाचित्वं न मुञ्चति’ (तन्त्रवार्तिकम् – अधिकरणम् १.४.१) इति कारिकोक्तरीत्या गुणविधित्वपक्षेऽपि मत्वर्थलक्षणा आवश्यकी इति वाच्यम् । अन्वयानुपपत्तौ खलु लक्षणा अङ्गीकार्या भवति । सर्वत्र धात्वर्थस्य करणत्वेनैव अन्वय इति यदि नियमः स्यात्, तदा


ISSN: 2320-740X

अन्वयानुपपत्त्या लक्षणा स्वीकर्तव्या स्यात्, तदेव नास्ति । 'दध्ना जुहोति' इत्यादि गुणविधौ धात्वर्थस्य न करणत्वेनान्वयः । करणत्ववाचकतृतीयाद्यभावात् । तृतीया कल्प्यते इति चेत्- गुणस्य तत्र विधीयमानत्वेन साध्याकांक्षायां धात्वर्थस्य साध्यत्वकल्पनाया एव उचितत्वात् । 'अग्निहोत्रं जुहोति' इत्याद्युत्पत्तिविधिषु धात्वर्थस्य करणत्वेन अन्वयः "अग्निहोत्रनामकहोमेन इष्टं भावयेदिति" । 'दध्ना जुहोति' इत्यादि गुणविधिषु साध्यत्वेन अन्वयः । दध्ना होमं भावयेत् इति । (तैत्तिरीयब्राह्मणम् २.१.५) दध्नेन्द्रियकामस्य जुहुयात् इत्यादि गुणकामविधिषु आश्रयत्वेन अन्वयः । होमाश्रितेन दधिकरणत्वेन इन्द्रियरूपं फलं भावयेत् इति । एवञ्च प्रकृते सोमेन यजेतेत्यत्र यागस्य साध्यत्वेन अन्वयात् मत्वर्थलक्षणायां न किमपि प्रयोजनम् । अपि च गुणविधावपि मत्वर्थलक्षणाङ्गीकारपक्षे गुणस्य धात्वर्थाङ्गत्वे किं प्रमाणमिति विवेचनीयम् । न तावत् दध्नेति तृतीयाश्रुतिः । तादृशतृतीयाश्रुतिःमत्वर्थलक्षणायां दधिमत एव अङ्गत्वे प्रमाणं स्यात् । न तु गुणस्य दध्नः अङ्गत्वे ॥

दधिहोमयोः समभिव्याहारात्मकं वाक्यं दध्नः होमाङ्गत्वे प्रमाणमिति चेत्, वाक्यस्य स्वातन्त्र्येण प्रामाण्यभावात्, लिङ्गश्रुतिकल्पनाद्वारैव प्रामाण्यं वक्तव्यम् । तथा च क्लृप्तश्रुतिमुत्सृज्य श्रुत्यन्तरकल्पने व्यर्थः प्रयासः समाश्रितः स्यात् । किञ्च वाक्यात् श्रुत्यन्तरकल्पनेऽपि कल्पितश्रुत्या गुणस्य धात्वर्थाङ्गत्वं बोध्यते इति प्रत्यक्षश्रुतेः वैयर्थ्यं स्यात् । अथ कल्पितश्रुतिसहकारेण प्रत्यक्षश्रुतिरेव धात्वर्थाङ्गत्वेन गुणं विधत्ते इति चेत् तदानीं दध्ना होमं भावयेदिति अन्वयस्य वक्तव्यतया धात्वर्थस्य करणत्वेनैव अन्वयः इति नियमः उपेक्षितः स्यात्। तस्मात् गुणविधौ मत्वर्थलक्षणाभावात् सोमेन यजेतेत्ययं गुणविधिरेवेति चेत्, अत्रोच्यते यद्यपि सोमेन यजेत इत्यत्र न वाक्यभेदः तथापि ज्योतिष्टोमेन स्वर्गकामो यजेत इति वाक्ये कर्मस्वरूपे, तस्य च फलसम्बन्धे विधीयमाने गौरवलक्षणो वाक्यभेदः अस्त्येव । उद्भिदा यजेत इत्यत्र तु अगत्या तदाश्रयणम् । न च सोमेन यजेत इत्यस्य उत्पत्तिविधित्वे वाक्यभेदाभावेऽपि मत्वर्थलक्षणादोषः स्यादेवेति वाच्यम् । वाक्यभेदापेक्षया मत्वर्थलक्षणादोषस्य लघुत्वेन अङ्गीकारात्। लक्षणा हि पददोषः ।

ISSN: 2320-740X

वाक्यभेदस्तु वाक्यदोषः । पदवाक्ययोर्मध्ये पदे एव दोषकल्पना उचिता । 'गुणेत्वन्न्याय्य कल्पना' इति न्यायात् । अपि च कर्मणो रूपं यत्रोपलभ्यते तत्र उत्पत्तिविधित्वमङ्गीकर्तव्यम् । यागस्य च द्वे रूपे द्रव्यं देवता चेति । सोमेन यजेतेत्यत्र देवताया अभावेऽपि द्रव्यमुपलभ्यत एव । ज्योतिष्टोमेनेत्यत्र तु न द्रव्यं देवता वा श्रूयते । अतः सोमेन यजेत इत्ययमेव उत्पत्तिविधिः । सोमपदस्य मत्वर्थलक्षणामङ्गीकृत्य सोमवता यागेन इष्टं भावयेदिति वाक्यार्थः इति सिद्धान्तः ॥

**********

## भारतस्य इतिहासविषये व्यर्थप्रलापाः

### (इत्याख्यस्य कन्नडग्रन्थस्य अनूदितः एकः अध्यायः)

**प्रो. हरिप्रसादः के.**

**आचार्यः, शिक्षाशास्त्रविभागः**

**उपोद्घातः**

भारतेन स्वातन्त्र्यम् अवाप्य ७५ संवत्सराणि सम्पद्यमानानि सन्ति । अतिदीर्घकालिकं पारतन्त्र्यं स्वातन्त्र्येण चिन्तनात् अस्मान् विमुखीकरोति । स्वातन्त्र्यप्राप्तेः परमपि धूर्तानामेव शासनं भारतस्य स्वत्वस्य पुनरुज्जीवनाय अवसरं नाकल्पयत् । एतस्य परमं प्रमाणं स्वातन्त्र्योत्तरभारते निरन्तरं चत्वारः शिक्षामन्त्रिणः भारतभुवः संस्कृतेः सभ्यतायाः च अस्मितायाः विषये अनादरवन्तः म्लेच्छाः एव आसन् इति । भारतस्य अस्तित्वमेव जगतितले श्रेष्ठसभ्यतायाः संस्कृतेः ज्ञानविज्ञानानाम् आविष्कर्तृत्वेन प्रसारकत्वेन च आसीत् चेदपि ईदृशानां देशविरोधिनां प्रशासकानां कारणतः भारतस्य स्वत्वस्य पुनरुज्जीवनं यथा न स्यात् तथा कर्तुं सर्वविधप्रयत्नाः कृताः । तदर्थम् आङ्ग्लेयानां सरणिः अनुसृता च । तत्र एकः प्रयत्नः भारतस्य वास्तविकं वैभवपूर्णम् इतिहासं जनमानसात् दूरीकृत्य नूतनसंततयः ततः


ISSN: 2320-740X

अपरिचिताः यथा भवेयुः तथाकरणम् इति । किन्तु सत्यं बहुकालं यावत् गोपायितुं न शक्यते । तत् कथमपि स्वात्मानं कालान्तरे प्रकाशयति इत्यस्य उदाहरणम् एव "ऐदि चरित्र" इत्याख्यः ग्रन्थः । एषः ग्रन्थः तेलुगुभाषया एम्.वि.आर्.शास्त्री इत्याख्येन तेलुगुलेखकेन लिखितो वर्तते । एतस्य कन्नडानुवादं बाबुकृष्णमूर्तिवर्यः अकार्षीत् । सर्वेणापि स्वाभिमानिना भारतीयेन अवश्यं पठनीयः ग्रन्थः । ३८० पृष्ठात्मकस्य एतस्य ग्रन्थस्य पञ्चमाध्यायस्य कश्चन भागः मया छात्रेषु अध्ययनजागृतिमुत्पादयितुम् अनूदितः । स एव भागः अग्रे पठ्यताम् –

"तस्मिन् देशे बलिष्ठान् अश्वान् अपि सर्पाः लीलया गिलन्ति । तत्र केषाञ्चित् सर्पाणां पक्षिणामिव द्वौ पक्षौ भवतः । रात्रौ ते जतुकाः इव डयन्ते । तेषां मूत्रं वा स्वेदो वा मनुष्याणाम् उपरि पतति चेत् तत्र पिटकानि उत्पद्यन्ते । क्रमशः शरीरस्य सः भागः पूयते क्षीयते च । सर्पाणामिव वृश्चिकाणामपि तत्र महान्तौ पक्षौ भवतः । तत्र अश्वानां मुखानि हरिणानां मुखानि इव भवन्ति । तेषां मस्तके एकं शृङ्गं भवति ।

तस्य देशस्य आदिवासिनां जनानाम् आकाराः इतोऽपि विचित्राः भवन्ति । केषाञ्चित् पादाः तिरोमुखाः भवन्ति । पादानां पृष्ठभागः पुरोभागे भवति । अङ्गुल्यः पृष्ठभागे भवन्ति । इतोऽपि केषाञ्चित् आदिवासिनां मुखमेव न भवति । मुखस्य स्थाने द्वे रन्ध्रे भवतः । ताभ्यां रन्ध्राभ्यामेव मांसानां फलानां वा गन्धम् आघ्राय जीवन्ति । कदाचित् दुर्गन्धं आघ्रान्ति चेत् अवश्यं ते म्रियन्ते । इतोपि केषाञ्चित् आदिवासिनाम् एकमेव नेत्रं भवति । तदपि ललाटस्य मध्यभागे । अन्येषां केषाञ्चित् आदिवासिनां पादाः सर्पाः इव रज्जुस्वरूपाः भवन्ति । केषाञ्चित् तु गजपादवत् पादाः भवन्ति । केषाञ्चित् आदिवासिनां कर्णौ चलनसमये भूमिं स्पृशन्तौ भवतः । तेषां कर्णौ तावद्विशालौ भवतः यौ प्रसारयामः चेत् अवश्यं तदुपरि मनुष्याः कटेषु इव शयनं कतुम् अर्हन्ति ।

तस्मिन् देशे पर्वतवासिषु केचन वामनाः भवन्ति । तेषु कस्यापि औन्नत्यं सार्धद्वयात् पादात् अधिकं न भवति । ते जनाः बलाकेभ्यः बहु एव पीडिताः भवन्ति । अतः ते अजान् मेषान् च आरुह्य धनुः बाणान् च गृहीत्वा वसन्ततौँ समुद्रतीरं गत्वा तत्र तैः निक्षिप्तान् अण्डान्, अण्डात् निर्गतान् बलाकशावकान् च मारयन्ति । एतत् कार्यं प्रतिवर्षं मासत्रयं प्रवर्तते । ते तथा न कुर्वन्ति चेत् बलाकाः तेभ्यः जीवितुमेव अवसरं न प्रयच्छन्ति ।

तत्र षष्ठे वयसि बालिकाः गर्भवत्यः भवन्ति ।

तस्मिन् देशे सुवर्णस्य उत्पादनं पिपीलिकाः कुर्वन्ति । एकैका पिपीलिका अपि अस्मद्देशीयात् जम्बूकादपि बृहती भवति । भूमौ बिलं निर्माय पिपीलिकाः सुवर्णस्य चूर्णानि सङ्गृह्णन्त्यः भवन्ति । गच्छति काले सङ्गृहीतस्य सुवर्णस्य चूर्णं पर्वताकारेण वर्धते । सुवर्णानां चूर्णानि तथा निबिडतया सङ्गृहीतानि भवन्ति येन तन्मध्ये तिष्ठामः चेत् सूर्यस्यापि दर्शनं न भवति । अत्यन्तं प्रकाशमानया कान्त्या शोभायमानं सुवर्णराशिं पश्यामः चेत् अस्माकं नेत्राभ्यां दृक्शक्तिरेव निर्गच्छेत् । तत्र पार्श्वस्थेभ्यः मरुस्थलेभ्यः मनुष्याः अश्वशकटेषु आगत्य मध्याह्नसमये यदा पिपीलिकाः भूम्याः अन्तः बिलेषु प्रविशन्ति तदा यथाशक्ति सुवर्णपर्वतं खनित्वा शकटेषु पूरयित्वा अतिवेगेन ततः पलायन्ते । एतत् ज्ञात्वा पिपीलिकाःताननुगम्य प्रयत्नेन अविश्रम्य संयुध्य म्रियन्ते । ताः पिपीलिकाः अपि सुवर्णस्य मूल्यं सम्यक् जानन्ति । अत एव ताः स्वप्राणान् अपि पणीकृत्य युध्यन्ते”

एतत् सर्वं प्रलापं श्रुत्वा किं चिन्तयन्ति भवन्तः ? उन्मत्तानाम् ऊहाप्रपञ्च इति वा ? सुरापानं कृत्वा वाचिता कथा इति वा ? अरेबियन् नैट्स् इत्याख्या कथा इति वा ? पातालभोगिनां कथाजालमिति वा ?


ISSN: 2320-740X

नैव भोः नैव । अस्माकं इतिहासकारैः परमप्रमाणत्वेन स्वीकृतात् एकस्मात् इतिहासग्रन्थात् उद्धृतानि अनर्घ्यानि मौक्तिकानि सन्ति इमानि वाक्यानि !!!

तस्य ग्रन्थस्य नाम इण्डिका इति । तस्य रचयिता (अथवा रचयिता इति चिन्तितः) मेगास्तनिस् इत्युच्यते । तेन उपरि वर्णितः विषयः कस्यचित् कल्पितलोकस्य नास्ति भोः, साक्षात् अस्माकं भारतस्य वर्तते India that is Bharat इत्येतस्य ।

बहुभ्यः वर्षेभ्यः अस्माभिः पठ्यमानस्य इतिहासस्य लेखकानां सर् विलियम् जेम्स् म्याक्स्मुल्लर् इत्येतादृशानां पाश्चात्त्यविदुषां दृष्ट्या भारतीयसाहित्यस्य ऐतिहासिकं महत्त्वमेव नास्ति । भारतीयानाम् अस्माकं आरम्भतः एव इतिहासविषयकं कल्पनमेव स्पष्टं नास्तीति ते कथयन्ति । प्राचीनाः सुदीर्घाणि पुराणानि तु लिखितवन्तः । किन्तु तानि सर्वाणि कल्पनामात्राणि सन्ति, युगाः मन्वन्तराणि इत्येवं प्रकारेण अस्माभिः सहस्रवर्षाणां कोटिवर्षाणां गणनानि सर्वथा मिथ्याभूतानि इति ते कथयन्ति । विष्णुः शिवः ऋषयः, शापाः, यागाः इत्येवं रूपेण कथाजालनिर्माणम् अकृत्वा वैदेशिकैः लेखकैरिव स्पष्टतया स्फुटवेद्यत्वेन इतिहासलेखनस्य विचार एव पौर्वात्यानां भारतीयानां नासीदिति ते अभिप्रयन्ति । अस्मान् शासितवतः ऐरोप्यशासकानाम् अभिप्रायानुसारं - इसवीयपूर्वे ३२तमे वर्षे अलेग्साण्डरस्य भारतस्य उपरि आक्रमणपर्यन्तं भारतस्य विश्वसितुं योग्यः इतिहास एव न लिखितः आसीत् इति । सः ग्रीकवीरः तस्य विजयगाथां साक्षात् अवलोक्य तत् लिपिबद्धं कर्तुं कांश्चन मेधाविनः विदुषः आनीतवान् आसीत् । तैः तदानीं लिखितसामग्रीणाम् साहाय्येन प्राचीनभारतस्य इतिहासः लिखितरूपः प्राप्यमाणः अभवत् । ग्रीकानां समग्राणां ऐतिहासिकसामग्रीणां मध्ये मेगास्तनीस् इत्यनेन लिखितम् इण्डिका इत्याख्यं पुस्तकं मेरुतुल्यम् अस्ति इति पाश्चात्त्यानां इतिहासबृहस्पतीनम् ऊहा वर्तते । तैः वञ्चनाबुद्ध्या ग्रथितां खपुष्पेतिहासमालां सगर्वं धारयित्वा तदीयशौर्यशुक्तिकां रजतभ्रान्त्या कौतुकेन अवलोक्य श्लाघामहे । अस्मत् सन्ततिभ्यः तदेव दर्शयितुम् अभिलषामः च ।

उदाहरणार्थम् –

केन्द्रीयपाठ्यक्रमस्य ११तमकक्ष्यायाः पाठ्यक्रमे रामशरणशर्मा इत्यनेन रचिते प्राचीनभारतदेशः(Ancient India) इत्यस्मिन् ग्रन्थे एवं ससम्माननं लिखितम् अस्ति यत् –

“सेल्यूकस् इत्यस्य राजदूतरूपेण मेगास्तनीस् इत्याख्यः चन्द्रगुप्तमौर्यस्य राजधान्यां पाटलीपुत्र इत्याख्यायां नगर्यां स्थित्वा मौर्यसाम्राज्यस्य विषये पाटलीपुत्रनगरशासनविषये च यत्लिखितवान् तत् तत्कालीनसामाजिकार्थिकस्थितीः सम्यक् प्रकाशयति” इति । (Throws valuable light on the administration, societyand economy of Maurya times)

प्राचीनभारतस्य इतिहासविषये अत्यन्तं विश्वासार्हः आधारः इति द्विशतात् वर्षेभ्यः अस्माकम् इतिहासकारैः वर्णिते इण्डिका इत्याख्ये ग्रन्थे कथं इतिहासः लिखितः इति भवन्तः अस्य लेखस्य आरम्भे एव पठित्वा ज्ञातवन्तः सन्ति किल !

अनादिकालादारभ्य भारतीयैः अनुस्त्रियमाणाः स्मृतयः इतिहासपुराणानि च ऐतिहासिकमहत्त्वहीनानि कल्पनामात्राणि इति आधुनिक-इतिहासचक्रवर्तिनः निर्णीतवन्तः । पुराणादीनां प्रामाण्यं ग्रीकलेखकैः रचितानां ग्रन्थानाम् आधारेण एव निर्णेतव्यम् इति च निर्णीतवन्त इत्येतत् अस्ताम् नाम । किन्तु तैः परमप्रमाणत्वेन स्वीक्रियमाणाः ग्रीकग्रन्थाः कुत्रापि नोपलभ्यन्ते !!! सहस्रवर्षेभ्यः पूर्वमेव ते कालकवलीभूताः सन्ति । अलेग्साण्डरतः पूर्ववर्तिषु स्कैलाक्स्, हेचाटियस्, मुल्लेटस्, हेरोडोटस्, केशियस् इत्यादिषु कोऽपि भारतस्य मुखं न दृष्टवान् । भारतस्य विषये तैः लिखितानां ग्रन्थानां को वा आधारः इति न ज्ञायते । ते ग्रन्थाः अनतिकाले एव नष्टाः । अलेग्साण्डरेण सह आगताः नेर्चस्, वन्सिक्रोटस्, अरिष्टोबुलस्, केल्लिस्थेनीस् इत्यादयः भारतं दृष्ट्वा यल्लिखितवन्तः तत् किमपि सम्प्रति नोपलभ्यते । अलेग्साण्डरतः अनन्तरं चतुश्शतात् वर्षेभ्यः परम् उत्पन्नाः अरियन् ष्ट्राबो इत्यादयः अपि


ISSN: 2320-740X

तान् ग्रन्थान् न प्राप्तवन्तः । अन्ततः अस्माभिः इदानीमपि सगर्वं कीर्त्यमानः इण्डीका इत्याख्यः ग्रन्थः अपि द्वित्रेषु शतकेषु एव अदृश्यतां गतः । तं ग्रन्थं ये पठितवन्तः तेषां स्मृतौ खिलीभूय तदीयग्रन्थेषु क्वचिदुद्धृतम् एव साम्प्रतम् उपलभ्यते । इत्थम् इतस्ततः प्रकीर्णं वस्तु सङ्गृह्य Megasthenis India इति नाम्ना लोकाय समार्पयत् जर्मनदेशस्य विद्वान् डा.श्वुवानबेक् इत्याख्यः । तदेव Ancient India as Described by Megasthenis and Arrian इति नाम्ना १८७७ तमे वर्षे जे.एन्. मेक्.क्रिण्डल् इत्याख्यः आङ्ग्ले अनूदितवान् । अस्य लेखस्य आरम्भे उद्धृतानि वाक्यानि तत्रत्यानि एव वर्तन्ते ।

इत्युक्ते मौर्यसाम्राज्ये मेगास्तनीसेन दृष्टमस्ति, दृष्ट्वा लिखितमस्ति चेति केवलं कल्प्यते । सः किं दृष्टवान् ? किं लिखितवान् चेति कोऽपि न जानाति । तदीयमिति यत् साम्प्रतम् उच्यते तत् यथार्थं वा अयथार्थं वा इति केनापि तृतीयेन कल्पितं वा इति कोपि वक्तुं नार्हति । अस्माकं पुरस्तात् विद्यमानं वस्तु (इण्डिका) मेगास्तनिसस्य एव इति सामान्यव्यवहारे उच्यते चेदपि प्राज्ञः कोपि अङ्गीकर्तुं न शक्नोति । एतद्विषये इण्डिका इत्यस्य सम्पादकस्य श्वानबेक् इत्यस्य एव इत्थम् अवगन्तव्यम् -

"The ancient writers, whenever they judge of those who have written on Indian matters, are without doubt want to reckon Megasthanis among those writers who are given tolying and least worthy of credit..." [Mc Crindle,1877 p 18]

(इत्युक्ते – भारतस्य इतिहासादिविषये लिखितवतां विषये वक्तव्यं चेत् असत्यवादिनाम् विश्वसितुम् अयोग्यानाम् आवल्यां मेगास्तनीसं प्राचीनलेखकाः योजितवन्तः)

इसवीयपूर्वे ६३ तमे वर्षे ष्ट्राबो इत्याख्यः तद्देशीयानां महालेखकानां विषये किमुक्तवानिति किञ्चित् आकर्ण्यताम् –

"Generally speaking, the men who have hitherto written on the affairs of India were a set of liars. Deimachos holds the first place in the list, Megasthenes comes next .... No faith whatever can be placed in Deimachos and Megasthenes. They coined the tables concerning men with ears large enough to sleep in, men without any mouths, without noses with only one eye.... And fingers bent backward.... They told of ants digging for gold.... Of serpents swallowing down oxen and stags.... Meantime accusing each other of falsehood" [Mc Crindle,1877 p 20]

(स्थूलरूपेण वक्तव्यं चेत् - एतावत्पर्यन्तं भारतस्य विषये ये ये लिखितवन्तः ते सर्वेपि अनृतवादिनः सन्ति । तेषु प्रथमस्थानं प्राप्नोति डिमचस् इत्याख्यः । द्वितीयं स्थानमर्हति मेगास्तनीसः । डिमचस-मेगास्तनीसाभ्याम् उक्तं किमपि विश्वसितुं न शक्यते । मनुष्यैः शयितुं योग्यविशालकर्णयुतानां विषये मुखनासिकारहितानां विषये, एकाक्षिणां विषये तिर्यक्पादाङ्गुलीनां विषये च ते मिथ्याकथाजालं रचितवन्तः । सुवर्णार्थं भूम्याः खननं कुर्वतीनां पिपीलिकानां विषये गोहरिणभक्षानां सर्पाणां विषये लिखितवन्तः । एकः अन्यम् इव परस्परम् अनृतवादी इति दूषितवन्तः)

तर्हि मेगास्तनीसस्य पुस्तकस्य किमपि मूल्यं नास्ति किम् ? तस्य पुस्तके विश्वसितुं योग्यं किमपि नास्ति किम् ? सर्वमपि असत्यमेव वा ?

उपरि अतिशयोक्तिमात्रं कल्पनाविलासः इत्यादिपदानि इण्डिकाविषये उक्तानि चेदपि विश्वसितुं योग्याः बहवः विषयाः तत्र सन्ति । तेन दृष्टस्य देशस्य तदानीन्तनस्थितयः, शासनरीतिः, आर्थिकसामाजिकस्थितिः, आचारविचाराः, वैदेशिकानां विषये आदरः, स्वीयस्य प्राचीनेतिहासस्य विषये भारतीयानां मनोभूमिः, हैन्दव-बौद्धधर्मयोः भेदः इत्यादिविषये मेगास्तनीसस्य पुस्तकं वस्तुतः


ISSN: 2320-740X

साहाय्यमाचरति एव । सनातनधर्मस्य विषये तदीयसम्प्रदायानां व्यवस्थाविषये अज्ञानेन साधारणाभेदेन वा मेगास्तनीसस्य लेखने दोषाः स्युः नाम । किन्तु अन्ततः कस्यचित् वैदेशिकस्य दृष्टौ तदानीन्तनं भारतं कथम् आसीत् इति ज्ञातुं वा तदीयग्रन्थः उपयोगी भवितुम् अर्हति ।

एवमेतत् ।

तस्य याथार्थ्यं कियदस्ति इति प्रश्नः अस्ति चेदपि इतः २००० वर्षेभ्यः पूर्वम् इसवीयपूर्वे चतुर्थे शतके अयं( इण्डिका ) ग्रन्थः लिखितः इत्यतः पुरातत्वशास्त्रदृष्ट्या अधिकं महत्वं दातव्यं स्यात् । तस्य प्राचीनतायाः कारणादेव चारित्रिकदृष्ट्या अपरिमितं प्राधान्यं प्राप्नोति । ग्रन्थोक्तं प्रत्येकमपि अक्षरं सत्यं भविष्यति चेदेव तस्य मूल्यम् अधिकं भवति इति कथनं मौर्ख्यं भवति । तादृशेषु ग्रन्थेषु तर्कसंमताः अंशाः कुत्रापि लभ्यन्ते चेत् तानेव स्वीकृत्य ऐतिहासिकेषु अध्ययनेषु विचारः/अनुसन्धानम् अनुवर्तनीयम्। एतादृशीषु परिस्थितिषु आधुनिकान् पण्डितान् उद्दिश्य एतदेव प्रष्टव्यं यत् - इतिहासविषये भवद्भिः उच्यमानानि धर्मसूत्राणि मेगास्तनीसे यथा अन्वियन्ति तथा भारतीयपुराणेषु नान्वियन्ति किम् ?

सहस्रात् वर्षेभ्यः पूर्वमेव नष्टस्य, नाममात्रावशेषस्य मेगास्तनीसरचितग्रन्थस्य ऐतिहासिकाधारत्वेन परिग्रहः कृतः चेत्, तत्पठित्वा यावत् स्मृतौ वर्तते तावत् रटित्वा एकत्रीकृतवाक्यानि एव इण्डिका इति च स्वीकृतं चेत्, सहस्रशः वर्षेभ्यः किञ्चिदपि अपरिवर्त्य सुरक्षितरूपेण विद्यमानानि पुराणानि ऐतिहासिकाधारत्वेन न परिगण्यन्ते इति कथं वा ते वदन्ति ?

आधुनिकेतिहासग्रन्थेषु यथा दिनाङ्कानुगुणं घटनाः वर्ण्यन्ते तथा पुराणेषु घटनाः न निरूपिताः स्युः । लोकाः, युगाः, देवताः, तदीयतरतमभावाः, धर्माः, तद्रहस्यानि, इत्यादिविषयाः पुराणेषु प्रतिपादिताः आधुनिकानां जनानां दृष्ट्या विचित्राः इव भासेरन् । आधुनिकशास्त्रानुगुणं पश्यामः चेत् तत्रस्थाः अनेके विषयाः सन्दिग्धाः इव भासेरन् । पुराणद्वयस्य मध्ये क्वचित् पारस्परिकविरोधः स्यादपि ।

कदाचित् आधुनिकाः प्रगतिचिन्तकाः इति आत्मानं मन्वानाः वयं भाषणवेलायां "पुराणेषु नवतिः प्रतिशतं भागः निरर्थकः" इति वदामः चेदपि तत्र एव उपयोगार्हाः 10% विषयाः सन्ति इति मत्वा तेषु विषयेषु आदरं प्रदर्शयेम किल? अस्माकं तेषु विषयेषु आदरो भवतु, न वा भवतु ; न्यूनातिन्यूनं ऐतिहासिकदृष्ट्या वा तर्कसङ्गतानां विषयाणां कृते प्राधान्यं दातव्यं किल ? बहुषु पुराणेषु पारस्परिकविरोधेन विनैव प्रतिपादिताः विषयाः बहवः सन्ति ये शास्त्रसम्मताः, विभिन्नैः प्रमाणैः प्रमाणीकृताः, विद्वद्भिः पुरस्कृताः च सन्ति । ईदृशाणां विषयाणाम् इतिहासस्य शोधार्थं स्वीकरणस्य आवश्यकता नास्ति किम् ?

अलेग्साण्डर् इत्यस्य आक्रमणपर्यन्तं भारतस्य समग्रः अपि इतिहासः भ्रमभूयिष्टः निरर्थकप्रलापः आसीत् इति विलियम जोन्स-म्याक्स-मुल्लर-प्रभृतिभिः उपेक्षाबुद्ध्या उक्तं चेदपि अस्मिन् देशे सहस्रशः संवत्सरेभ्यः अविच्छिन्नप्रवाहवत् समागतः, स्पष्टरूपेण अभिज्ञातुं शक्यः, असन्दिग्धः, केनापि शुद्धान्तःकरणेन निराकर्तुम् अशक्यः सुदीर्घेतिहासः अस्य देशस्य वर्तते । सः सर्वोऽपि प्राचीनेतिहासः अस्माभिः उपहास्यमानेषु पुराणेषु निगूहितो वर्तते ।

कृतयुग-त्रेतायुग-द्वापरयुगानां लक्षशः वर्षाणि भवन्ति इत्यतः तेषां गणनादिकं भ्रमं जनयेत् इति धिया पार्श्वे स्थापयित्वा कलियुगस्य एव गणनां करवाम । पुराणगतानि नामानि तत्पृष्टवर्तिनीः कथाः च अवलोकयामः चेत् अस्माकं हासः भवितुम् अर्हति । कलियुगस्य आरम्भतः अपि अस्माकं पूर्वजाः स्पष्टतया कालस्य गणनां कृतवन्तः एव सन्ति । अस्माकं देशे प्रत्येकस्मिन् पञ्चाङ्गे कलियुगस्य आरम्भतः प्रत्येकस्मिन् वर्षे कियान् कालः जातः इति स्पष्टगणना वर्तते । तदनुगुणं 2003 तमे इसवीये वर्षे कल्यादिः 5104 तमः संवत्सरः । इत्युक्ते इसवीयपूर्वे 3101-102 तमे (इत्युक्ते 5104 - 2003) संवत्सरे कलिशकः आरब्धः । कलिशकस्य गणना इसवीयपूर्वे 3102 तमे संवत्सरे फेब्रवरीमासस्य 20तमे दिनाङ्के आरब्धः इति पाश्चात्त्याः अपि विद्वांसः स्वीकुर्वन्ति । ततः 36 वर्षेभ्यः पूर्वम्, इत्युक्ते इसवीये पूर्वे 3138 तमे संवत्सरे महाभारतयुद्धं प्रवृत्तम् । तत्र विजयं प्राप्य 36वर्षाणां शासनं कृत्वा


ISSN: 2320-740X

श्रीकृष्णस्य देहत्यागवार्तां श्रुत्वा युधिष्ठिरः परीक्षितस्य पट्टाभिषेकं कृत्वा सपत्नीकः सहोदरैः सह स्वर्गारोहणाय प्रस्थितः । तदानीमेव कलिशकस्य आरम्भः अभवत् । ततः 26वर्षेभ्यः परं (इत्युक्ते इसवीयपूर्वे 3076 तमे वर्षे) सः स्वर्गं प्राप्नोत् । तदभिज्ञानाय तस्मादेव संवत्सरादारभ्य युधिष्ठिरशकस्य आरम्भः अभवत् । तं लौकिकाब्दः इत्यपि जनाः वदन्ति । तदनुगुणमेव इदानीमपि काश्मीरेषु पञ्चाङ्गं प्रचलति ।

**********

## योगदर्शने शिक्षातत्त्वम्

**प्रो. गौराङ्ग भागः**

**आचार्यः, शिक्षाशास्त्रविभागः**

दर्शनं नाम दृश्यते ज्ञायते विचार्यते परमतत्त्वमनेनेति दर्शनम् । दृश् धातोः करणे ल्युट् प्रत्ययेन दर्शनशब्दस्य निष्पत्तिः जाता । सत्यस्यानुसन्धानेन दर्शनम् । दर्शनं द्विविधम्, प्राच्यपाश्चात्त्यभेदेन । पुनः प्राच्यदर्शनं द्विविधमास्तिकनास्तिकभेदेन । प्राच्यदर्शनस्य अन्यद् नाम भारतीयदर्शनम्। ये वेदस्य प्रामाण्यमङ्गीकुर्वन्ति ते आस्तिकाः। आस्तिकदर्शनं षड् विधम् । तानि च न्यायवेशेषिकः सांख्यः योगः, पूर्वमीमांसा, उत्तरमीमांसा चोति । एतेषु षट्सु दर्शनेषु योगदर्शनमन्यतमम् ।

योगदर्शनस्य कर्ता महर्षिपतञ्जलिः । महर्षिपतञ्जलिः केवलं योगदर्शनस्य रचयिता न अपितु व्याकरणमहाभाष्यस्यापि । आयुर्वेदस्य चरकसंहितायाः रचयिता । यथोक्तम् -

**"योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।**

**योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि'॥ भोजवृत्तिः**

योगदर्शने चत्वारः पादाः सन्ति । यथा -1 समाधिपादः, 2 साधनपादः, 3 विभूतिपादः, 4 कैवल्यपादः चेति । 195 सूत्राणि वर्तन्ते अस्मिन् दर्शने । योगदर्शनानुसारं योगस्य तात्पर्यं योगश्चितवृत्तिनिरोधः । अर्थात् चित्तवृतेः निरोधः एव योग इत्युच्यते । योगःयुज् समाधौ युज्यते- । युज् संयोगे युक्ते । युज् संयमे योजयति, योजिता इति त्रयाणां धातूनामर्थान् एकीकृत्य अल् प्रत्यये कृते योगः । यस्यार्थः समाधिः -, संयोगः, संयमः च इत्येषाम् एकत्रावस्थानम् । गीतायामुक्तम् - **"योगः कर्मसु कौशलम् ।"**

**योगदर्शनस्य वैशिष्ट्यम्** -

1. चित्तवृत्तेः निरोधः योगः ।
2. योगमनोविज्ञानम् ।
3. प्रमाणस्मृत्यादीनां विवरणम्-निद्रा-विपर्यय-विकल्प- ।
4. सम्प्रज्ञातासम्प्रज्ञातसमाधेः अनुष्ठानम् ।
5.पञ्चक्लेशानां विवरणम् यथाअविद्या - अस्मिता राग द्वेष अभिनिवेशः च ।
6.योगस्याष्टाङ्गानियम -ः नियमः आसनम्, प्राणायामः, प्रत्याहारः, धारणा, ध्यानम्, समाधिः चेति ।
7. अष्टसिद्धयःईशि-वशित्व-प्राकाम्य-प्राप्ति-गरिमा-लघिमा-महिमा-अणिमा -त्वानि च ।
8. ईश्वरप्रणिधानम् ।
9. कैवल्यं तथा आत्मदर्शनम् ।

पतञ्जलिमतानुसारं शिक्षा एका दार्शनिकी मनोवैज्ञानिकी च प्रक्रिया । योगश्चितवृत्तिनिरोधः इति योगस्य परिभाषा । शिक्षा एका प्रक्रिया यया मनुष्यः स्वस्य लौकिककर्म कर्तुं समर्थः योग्यः वा भवति । शिक्षा लौकिकालौकिज्ञानयोः श्रेष्ठं साधनमस्ति ।

**शिक्षायाः उद्देश्यानि -**


ISSN: 2320-740X

1. आत्मसंयमम्

2. आत्मप्रशिक्षणम्

3. पूर्णताप्राप्तिः सर्वाङ्गीणविकासः वा

4. लौकिकालौकिकभावनायाः विकासः

5. उपयुक्तसंस्काराणां निर्माणम्

6. नैतिकः तथा चारित्रिकविकासः

**शिक्षणविधयः -**

योगदर्शने अनेकाः शिक्षणविधयः वर्तन्ते । यथा

1. प्रत्यक्षविधिः

2. अनुमानविधिः

3. आगमविधिः

4. उपदेशविधिः

5. सूत्रविधिः

6. तर्कविधिः

7. श्रवण निदिध्यासनविधिः-मनन-

8. स्वाध्यायविधिश्चेति ।

**पाठचर्या -**

योगश्चितवृत्तिनिरोधः इत्यनेन सूत्रेण योगः कः? चित्तं किं भवति? चित्तस्य का विशेषता? निषेधार्थम् अष्टाङ्गयोगस्य कानि साधनानि भवन्ति? इत्यादीनां प्नश्नादीनामुत्तरं पाठचर्यायाः स्वरूपं वहति । मानवानां कृते धर्मस्य तथा आत्मसंयमस्य ज्ञानं प्रदातुं योगशास्त्रस्य महती भूमिका वर्तते । अस्य

शास्त्रस्याधारेण पाठचर्यायां दर्शनशास्त्रं, धर्मशास्त्रं, नीतिशास्त्रं, मनोविज्ञानं, शरीरविज्ञानमित्यादीनां कृते स्थानं परिकल्पितम् ।

**अनुशासनम् -**

अनु उपसर्गपूर्वकं शास् धातोः ल्युट् प्रत्ययेन अनुशासनशब्दस्य निष्पत्तिः । योगदर्शने प्रतिपादितः उपदेशः अनुशासनमिति कथ्यते । अनुशासनस्यार्थः नियन्त्रणम्। प्रथमसूत्रे प्रतिपादितमस्ति - अथ योगानुशासनम् । योगस्यानुशासनम् योगानुशासनम् । द्वितीयं सूत्रं योगश्चितवृत –्तिनिरोधः । चित्तवृत्तीनां निरोधः एव योगः । योगशिक्षायाम् आत्मानुशासनं भवति । एतदर्थं महर्षिपतञ्जलिना अष्टाङ्गयोगस्य साधनं प्रस्तुतम् । अष्टाङ्गयोगे यमः पञ्चप्रकारकाः सन्ति । यथाअहिंसा -, सत्यम्, अस्तेयं, ब्रह्मचर्यम् अपरिग्रहः चेति। यथोक्तं योगसूत्रे -

**"अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः" । साधनपादः-30**

एतानि वैयक्तिकानुशासनस्य तथा च लौकिकानुशासनस्य साधनानि भवन्ति । अष्टाङ्गयोगे पञ्चप्रकारकाणां नियमानां प्रतिपादनं भवति । यथा-"शौचसन्तोषतपस्वाध्यायेश्वरप्रणिधानानि नियमाः" ॥

पुनः "स्थिरसुखामासनम् ।""श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" । "स्वविषयासम्प्रयोगे चित्तसस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः" । "देशबन्धचित्तस्य धारणा" । "तत्र प्रत्ययैकतानता ध्यानम्" । "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः"। अत्र मुक्त्यात्मकमनुशासनस्य प्राधान्यता वर्तते ।

**छात्रः -**

योगदर्शनानुसारं छात्रः योगी भवेत् । विद्यार्थी चित्तवृतेः निरोधं नियन्त्रणं च कुर्यात्। विद्यार्थी कायेन मनसा वाचा सात्विकं, शुद्धं, संस्कारयुक्तश्च भवेत् येन सः योगस्याधिकारी भवेत् ।

**अध्यापकः -**


ISSN: 2320-740X

योगदर्शनानुसारम् अध्यापकः अपि योगी भवेत् । वैरागी भवेत् । प्रमाणनिद्रा -विपर्यय-विकल्प-स्मृत्यादि पञ्चवृत्तिषु अध्यापकः छात्रः चेति नियन्त्रितः भवेत् । चित्तस्य पञ्चावस्था यथा-1 क्षिप्तावस्था, 2 मूढावस्था, 3 विक्षिप्तावस्था, 4 एकाग्रावस्था, 5 निरूद्धावस्था चेति ज्ञानं भवेत् अध्यापकस्य ।

**विद्यालयः -**

योगस्य ज्ञानं तथा आत्मसाक्षात्कारस्य लक्ष्यं प्रवचनेन बद्ध्या श्रवणेन च न भवति। योगदर्शने विद्यालयः मुक्तवातावरणे तथा स्वच्छवातावरणे भवेत् । शान्तपरिवेशे भवेत्। योगाभ्यासे । ज्ञानमात्मसाक्षात्कारश्च भवति । आत्मसाक्षात्कारः गुरुं विना भवितुं नार्हति । तस्मात्पूर्वं शिष्याणां कृते आवासिकशिक्षाव्यवस्था आसीत् ।

**निष्कर्षः -**

शिक्षायां योगदर्शनस्य भूमिका अत्यन्तगुरुत्वपूर्णा इति मन्यते । योगदर्शनमाध्यमेन आत्मसंयमनम्, मनसः दृढीकरणम्, इन्द्रियाणां स्वायत्ते स्थापनं तथा सर्वाङ्गीणविकासः लभ्यते । शिक्षा एका व्यवहारिकप्रक्रिया इति सर्वैः मन्यते । व्यवहारदृष्ट्या अपि योगदर्शनं सर्वेषां कृते अत्यन्तमुपयोगी । अतः शिक्षायाः उपरि अस्य प्रभावः नूनं भविष्यति भवति च।

**********

# न्यायवैशेषिकदर्शने धर्मविचारः

प्रो. नवीनः होळ्ळ

अध्यक्षः, न्यायविभागः

वैशेषिकदर्शनस्य प्रवर्तकः महर्षिकणादः 'अथातो धर्मं व्याख्यास्यामः' इति प्रथमसूत्रेण धर्मव्याख्यानं प्रतिज्ञाय 'यतोऽभ्युदयनिश्श्रेयससिद्धिः स धर्मः' इति सूत्रेण धर्मं निरूपयामास । सूत्रस्यास्य निवृत्तिधर्मलक्षणपरत्वं धर्मसामान्यलक्षणपरत्वञ्च उपस्कारकृता शङ्करमिश्रेण प्रत्यपादि । तत्त्वज्ञानद्वारकात्यन्तिकदुःखनिवृत्तिकारणं निवृत्तिधर्मः, सुखदुःखाभावान्यतरकारणं धर्मः इति सूत्रार्थः विवक्षितः । तत्राद्ये अभ्युदयपदं तत्त्वज्ञानपरं, निश्श्रेयसपदम् आत्यन्तिकदुःखनिवृत्तिपरम् । द्वितीये अभ्युदयपदं सुखपरं, निश्श्रेयसपदं दुःखाभावपरम् । निवृत्तिधर्माणाञ्च चित्तशुद्धिविविदिषादिद्वारा तत्त्वज्ञानोपयोगित्वमक्षतमेव , 'विविदिषन्ति यज्ञेन तपसाऽनाशकेन' इत्यादिश्रुतेः । 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रजायते' इत्यादिस्मृतेश्च । श्रुत्यादिविहितानि अदृष्टजनकानि यानि कर्माणि वीतरागेण आचर्यमाणानि तत्त्वज्ञानाय भवन्ति तानि निदर्शयति सूत्रकारः 'अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय' ( वै.सू.6.2.2) इति । अत्र अभिषेचनं गङ्गादिस्नानम् । दिङ्नियमः नक्षत्रनियमः मन्त्रनियमः कालनियमः इति प्रत्येकम् अन्वयः । सुखदुःखाभावान्यतरनिरूपितालौकिककारणतावत्त्वमिति धर्मसामान्यलक्षणम् । सुखस्य दुःखनिवृत्तेः वा लौकिककारणे भोजनभेषजपानादौ अतिव्याप्तिनिरासाय अलौकिकत्वदलं निवेशितम् । सुखमात्रफलके ज्योतिष्टोमादौ दुःखनिवृत्तिमात्रफलके प्रायश्चित्तादौ च अव्याप्तिनिरासाय अन्यतरत्वनिवेशः । धर्मे अनुमानं प्रमाणं प्रादर्शि वृत्तिकृता - देवदत्तशरीरादिकं भोक्तृविशेषगुणप्रेरितभूतपूर्वकं कार्यत्वे सति तद्भोगसाधनत्वात् तन्निर्मितस्रग्वत् इति । अत्रानुमानेन यद्यपि


ISSN: 2320-740X

यागादिजन्यम् अदृष्टमेव सिद्ध्यति तथापि सूत्रकारस्य यागादिकर्म-तज्जन्यादृष्टोभयसाधारणं धर्मलक्षणमभिप्रेतमिति प्रतीयते ।

न्यायभाष्ये वात्स्यायनेन धर्मस्याधर्मस्य च प्रत्येकं दशविधत्वं प्रादर्शि । '**अथ शुभा - शरीरेण दानं परपरित्राणं परिचरणञ्च, वाचा सत्यं, हितं प्रियं स्वाध्यायञ्चेति, मनसा दयाम् अस्पृहां श्रद्धाञ्चेति । सेयं धर्माय । दोषैः प्रयुक्तः शरीरेण प्रवर्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति, वाचा अनृतपरुषसूचनाऽसम्बद्धानि, मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यञ्चेति । सेयं पापात्मिका प्रवृत्तिरधर्माय' इति (१.१.२,१७)** । सोऽयं दशधा विभागः मनुस्मृतौ उपलभ्यते[1] । 'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः' इति न्यायसूत्रे तद्व्याख्याने उपदर्शितभाष्ये च प्रवृत्तिशब्दः प्रवृत्तिसाध्यकर्मपरः । 'प्रवृत्तिफले धर्माधर्मौ अस्मिन् सूत्रे प्रवृत्तिरित्युच्यते, कस्मात्? तत्साधनत्वात् अन्नं वै प्राणिनः प्राणा इति यथा' (न्यायवार्तिकम्) प्रशस्तपादभाष्ये न्यायकन्दल्याञ्च अदृष्टलक्षणगुणस्य धर्मत्वव्यवस्थापनं, विस्तरेण धर्मविचारश्च उपलभ्यते । **धर्मः पुरुषगुणः कर्तुः प्रियहितमोक्षहेतुः अतीन्द्रियः अन्त्यसुखसंविज्ञानविरोधी पुरुषान्तःकरणसंयोगविशुद्धाभिसन्धिजः वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः । तस्य तु साधनानि श्रुतिस्मृतिविहितानि वर्णाश्रमिणां सामान्यविशेषभावेन अवस्थितानि द्रव्यगुणकर्माणि ।** (प्र. भा.)

यागादिकर्मणः क्षणिकस्य कालान्तरभाविस्वर्गादिफलसाधनत्वं श्रूयते 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति । विनष्टाच्च कारणात् कार्यं नोत्पद्यते । अतः फलोत्पत्त्यनुगुणः कालान्तरस्थायी धर्माभिधो व्यापारः कल्प्यते । यद्द्वारेण कर्मणां श्रुता फलसाधनता निर्वहति । सोऽयं धर्मः आत्मनो गुणः। न तु कर्मसामर्थ्यम् । विनष्टे यागादिकर्मणि निराश्रयस्य सामर्थ्यस्य अवस्थानाऽसम्भवात् । अनागते

---

[11] शुभाशुभफलं कर्म मनोवाग्देहसम्भवम् । कर्मणो गतयो नृणामुत्तमाधममध्यमाः ॥
तस्येह त्रिविधस्यापि व्यधिष्ठानस्य देहिनः । दशलक्षणमुक्तस्य मनो विद्यात्प्रवर्तकम् ॥ (मनुस्मृतिः १२.३)

स्वर्गादिफलेऽपि तस्यावस्थानासम्भवात् । वस्तुभूतस्य कार्यस्य निराश्रयतापि नोपपद्यते । तस्मादात्मसमवेतस्यैव धर्मस्योत्पत्तिरभ्यनुज्ञेया । अतो न तत्कर्मसामर्थ्यम् । अन्यसामर्थ्यस्य अन्यत्र असमवायात् । प्रीतिसाधने चन्दनादौ प्रीतिशब्दप्रयोग इव धर्मसाधने यागादौ धर्मशब्दप्रयोगो लाक्षणिकः। धर्मः कर्तुः प्रियहितमोक्षहेतुः, क्वचिद् अन्यस्य । पुत्रेण कृतस्य श्राद्धस्य पितृगामितृप्तिफलश्रवणात् । वृष्टिकामेन कारीर्यां कृतायां तदन्यस्यापि समीपदेशवर्तिनो वृष्टिफलसम्बन्धदर्शनात् ।

धर्मः अयोगिभिः केनचिदपि इन्द्रियेण न गृह्यते इत्यतीन्द्रियः । कार्यत्वाच्चास्य अवश्यविनाशित्वम् । विनाशश्च अन्त्यसुखेन फलीभूतेन । अत एव फलोत्पत्तिकालं यावद् अवतिष्ठते धर्मः। फलञ्च धर्मस्य कस्यचिद् अनेकसंवत्सरसहस्रोपभोग्यम् । तत्र प्रथमोपभोगादपि धर्मस्य नाशे कालान्तरे फलानुत्पादप्रसङ्गः । न चैकस्य निर्भागस्य भागशो नाशः सम्भाव्यते । तस्मादन्त्यस्यैव फलस्य धर्मनाशकत्वम् । सम्यग्विज्ञानेन आत्मतत्त्वसाक्षात्कारलक्षणेनापि धर्मो विनाश्यते ।

धर्मः आत्ममनस्संयोगजन्यः आत्मविशेषगुणत्वात् सुखादिवत् । दम्भादिरहितात् सङ्कल्पविशेषात् धर्मो जायते । प्रतिवर्णं प्रत्याश्रमञ्च अधिकृत्य विहितैः साधनैरपि धर्मो जन्यते ।

**तत्र सामान्यानि - धर्मे श्रद्धा, अहिंसा, भूतहितत्वं, सत्यवचनम्, अस्तेयं, ब्रह्मचर्यम्, अनुपधा, क्रोधवर्जनम्, अभिषेचनम्, शुचिद्रव्यसेवनम्, विशिष्टदेवताभक्तिः, उपवासः, अप्रमादश्च ।**

श्रुतिस्मृतिभ्यां सर्वेषां वर्णाश्रमिणां विहितानि धर्मसाधनानि कथ्यन्ते । धर्मे मनःप्रसादः धर्मसाधनम् । भूतानाम् अनभिद्रोहसङ्कल्पः धर्मसाधनम् । प्रतिषिद्धस्य अभिद्रोहस्य निवृत्त्या अधर्मो न भवति, न धर्मो भवति । अनभिद्रोहसङ्कल्पस्तु विहितत्वात् धर्मसाधनं भवति । भूतानामनुग्रहः , यथार्थवचनञ्च धर्मसाधनम् । 'अशास्त्रपूर्वकं परस्वग्रहणं मया न कर्तव्यम्' इति सङ्कल्पः स्त्रीसेवापरिवर्जनं


ISSN: 2320-740X

सङ्कल्परूपं भावशुद्धिः अपि धर्मसाधनम् । विशुद्धेन अभिप्रायेण कृतानां कर्मणां धर्मसाधनत्वमस्ति । क्रोधपरित्यागः सङ्कल्पात्मकः, स्नानं, शुचीनां तिलादिद्रव्याणां क्वचित् पर्वणि नियमेन सेवनं, त्रयीसम्मतायां देवतायां भक्तिः, एकादश्यादिभोजननिवृत्तिसङ्कल्पः, नित्यनैमित्तिकानां कर्मणाम् अवश्यम्भावेन करणम् इत्येतानि सर्वेषामेव समानानि धर्मसाधनानि ।

दृष्टप्रयोजनं लाभपूजादि अनुद्दिश्य यदा एतानि साधनानि क्रियन्ते तदा एतानि साधनानि भावशुद्धिञ्च अपेक्ष्य आत्ममनसोः संयोगाद् धर्मोत्पत्तिर्भवति ।

प्रत्यहं दुःखैरभिहन्यमानस्य तत्त्वतो विज्ञातेषु दुःखैकनिदानेषु विषयेषु विरक्तस्य आत्यन्तिकं दुःखवियोगमिच्छतः संन्यस्य सर्वकाम्यकर्माणि समाधिमनुष्ठातुमिच्छतः तत्प्रत्यनीकभूयिष्ठं ग्रामं परित्यज्य वनमाश्रितस्य यमनियमाभ्यां कृतात्मसंस्कारस्य समाध्यभ्यासात् निवर्तको धर्मो जायते । तस्मादस्य प्रकृष्टः समाधिः, ततोऽन्यः प्रकृष्टतरो धर्मः, तस्मादप्यन्यः प्रकृष्टतमः समाधिरित्यनेन क्रमेण अन्त्ये जन्मनि स तादृशः समाधिविशेषः परिणमति, यो द्वन्द्वेनाप्यभिभवितुं न शक्यते । दृष्टो हि किञ्चिदभिमतं विषयमादरेणानुचिन्तयतः तदेकाग्रीभूतचित्तस्य सन्निहितेषु प्रबलेष्वपि विषयेषु सम्बाधः । यथा इषुकारः इषौ लब्धलक्ष्याभ्यासः गच्छन्तमपि राजानं न बुद्ध्यते । आह च भगवान् ‘अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते’ इति । पतञ्जलिः अपि ‘अभ्यासवैराग्याभ्यां तन्निरोधः’ इति । एवं परिणते समाधौ आत्मस्वरूपसाक्षात्कारिविज्ञानमुदेति । अत आत्मज्ञानार्थिना यतिना योगसाधनमनुष्ठीयते ।

स्वरूपतस्तावद् आत्मा न कर्ता, न भोक्ता, किन्तूदासीन एव । तत्र देहेन्द्रियाद्युपाधिसम्बन्धकृतः ‘अहं ममेति’ कर्तृत्वभोक्तृत्वप्रत्ययः यद्यपि मिथ्या अतस्मिन् तदितिभावात् तथापि दृढतरः एषः प्रत्यक्षावभासः परोक्षावभासेन श्रौतात्मज्ञानेन न शक्यते निषेद्धुम् । न हि शतशोऽपि प्रमाणान्तरावगते गुडस्य माधुर्ये दुष्टेन्द्रियजः तिक्तप्रतिभासः तत्कृतश्च दुःखावगमो निवर्तते, तस्मात् आत्मनः प्रत्यक्षज्ञानार्थं समाधिरुपासितव्यः । प्रचिते समाधौ तत्सामर्थ्यात् कर्तृत्वभोक्तृत्वपरिपन्थिनि आत्मतत्त्वे स्फुटीभूते समाने

विषये विद्याविद्ययोः विरोधात् अहङ्कारममकारवासनोच्छेदे सन्नपि प्रपञ्चो नात्मानं स्पृशति । तथा च कापिलैरुक्तम् -

**तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्तौ ।**

**प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः ॥ इति ।**

तेन तत्त्वज्ञानेन सता निवृत्तप्रसवां निवृत्तोपभोगजननसामर्थ्यां ज्ञानधर्मवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्येभ्यः सप्तरूपेभ्यो विनिवृत्तां प्रकृतिं पुरुषः प्रेक्षकवदुदासीनः स्वस्थः रजस्तमोवृत्तिकलुषितया बुद्ध्या असम्भिन्नः (सर्वथा असम्बद्धः) पश्यतीत्यर्थः । यद्यप्यनादिरियं मोहवासना आदिमांश्च तत्त्वसाक्षात्कारः, तथाप्यनेन सा निरुद्ध्यते, तत्त्वावग्रहो हि धियां परमं बलम् ।

**अधर्मोऽपि आत्मगुणः कर्तुः अहितदुःखहेतुः अतीन्द्रियोऽन्त्यदुःखसंविज्ञानविरोधी । तस्य साधनानि शास्त्रे प्रतिषिद्धानि धर्मसाधनविपरीतानि हिंसाऽनृतस्तेयादीनि विहिताकरणं प्रमादश्चैतानि दुष्टाभिसन्धिं चापेक्ष्य आत्ममनसोः संयोगाद् अधर्मस्योत्पत्तिः ।** (प्र. भा.)

**अविदुषो रागद्वेषवतः प्रवर्त्तकाद् धर्मात् प्रकृष्टात् स्वल्पाधर्मसहिताद् ब्रह्मेन्द्रप्रजापतिपितृमनुष्यलोकेषु आशयानुरूपैरिष्टशरीरेन्द्रियविषयसुखादिभिर्योगो भवति । तथा प्रकृष्टादधर्मात् स्वल्पधर्मसहितात् प्रेततिर्यग्योनिस्थानेष्वनिष्टशरीरेन्द्रियविषयदुःखादिभिर्योगो भवति। एवं प्रवृत्तिलक्षणाद् धर्मादधर्मसहिताद् देवमनुष्यतिर्यङ्नारकेषु पुनः पुनः संसारबन्धो भवति ।** (प्र.भा.)

यः 'कर्ता भोक्तास्मि' इत्यात्मानमभिमन्यते, परमार्थतो दुःखसाधनञ्च बाह्याध्यात्मिकविषयं सुखसाधनमित्यभिमन्यते सोऽविद्वान् । स च स्वोपभोगतृष्णापरिप्लुतः सुखसाधनत्वारोपिते विषये रज्यते, तदुपरोधिनि च द्विष्टो भवति । तस्य प्रवर्तकाद् धर्माद् 'देवो वा स्याम्, गन्धर्वो वा स्याम्' इति पुनर्भवप्रार्थनया कृताद् धर्मात् प्रकृष्टात् फलातिशयहेतोः आशयानुरूपैः कर्मानुरूपैः इष्टशरीरादिभिः सम्बन्धो भवति, ब्रह्मेन्द्रादिस्थानेऽपि मात्रया दुःखसम्भेदोऽस्ति । न च अधर्मादन्यत् दुःखस्य कारणमतः


ISSN: 2320-740X

स्वल्पाधर्मसहित एव प्रकृष्टधर्मः ब्रह्मेन्द्रादिलोकगतानां जीवानाम् । यस्य प्रकृष्टधर्मः तस्य प्रकृष्टानि, प्रकृष्टतरः यस्य तस्य प्रकृष्टतराणि, प्रकृष्टतमो धर्मः यस्य तस्य प्रकृष्टतमानि शरीरादीनि भवन्ति । तथा प्रकृष्टादधर्माद् प्रेतयोनीनां तिर्यग्योनीनाञ्च स्थानेषु अनिष्टैः शरीरादिभिर्योगो भवति । प्रेतादिस्थानेऽपि मनाक् सुखमस्ति, तच्च धर्मस्य कार्यम् इति ।

**********

## अधिकरणस्वरूपविवेकः

**प्रो. सूर्यनारायणभट्टः**

**अध्यक्षः, मीमांसाविभागः**

**विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।**

**श्रेयःप्राप्तिनिमित्ताय नमस्सोमार्धधारिणे ॥**

अधिकरणमिति पदं यदा श्रूयते झटित्येव व्याकरणशास्त्रे प्रतिपादितमधिकरणकारकं गृह्यते । कारकत्वेन लोकप्रसिद्धमधिकरणकारकं मीमांसाशास्त्रेऽपि कारकनिरूपणावसरे विचार्यत एव । साक्षात् परम्परया वा क्रियाश्रयः, स च कर्तृकर्मद्वारकफलव्यापाराधारः । यथा - गृहे स्थाल्यामोदनं पचति इत्यादि। **आधारोऽधिकरणम्, सप्तम्यधिकरणे च** इत्यादिस्मृत्या आधारभूतमधिकरणकारकं सप्तम्या अनुभाव्यते। इदं तु अधिकरणमिति प्रतीतिसाक्षिकस्स्वरूपसम्बन्धविशेषः । व्याकरणे तु अधिकरणं कर्त्रादिव्यवहितक्रियाधारः । तच्च अधिकरणत्वशक्तिमत् । सा शक्तिः कर्तृकर्मद्वारा यः क्रियाश्रयः तन्निष्ठा। तदधिकरणं त्रिविधम् । औपश्लेषिकम्, वैषयिकम्, अभिव्यापकं चेति । अभिव्यापकमेव मुख्यमधिकरणमाहुः वैयाकरणाः इत्यादिविचारा अधिकरणकारकसम्बन्धिनः । परं पूर्वोत्तरमीमांसयोः

वेदवाक्यार्थतात्पर्यनिर्णयात्मकविविधावयवोपेतविचारपद्धतिरेव अधिकरणपदेन व्यपदिश्यते । अत्राधिकरणं पञ्चाङ्गं, यथाहुः -

**विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।**

**सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं विदुः ॥ इति ।**

क्वचिच्च **प्रयोजनं सङ्गतिश्च शास्त्रेऽधिकरणं स्मृतमिति** षडङ्गान्यपि अधिकरणस्य अवलोक्यन्ते ।

अधिकरणे तावत् विशिष्टया प्रणाल्या विवक्षितार्थः प्रतिपाद्यते । मुख्यतः न्यायेन पूर्वपक्षं समुत्थाप्य सप्रमाणं तं खण्डयित्वा स्वपक्षस्थापनाख्यः सिद्धान्तः क्रियते । ताभ्यामेव विषयावगमस्तु भवति। तथापि एताभ्यामेव विवक्षितार्थस्य स्पष्टं स्वरूपं नैवावगम्यते । अत इतरेऽप्यवयवाः समग्रविषयावगतौ सहकारिणो भवन्तीति पञ्चावयवविशिष्टमधिकरणं द्वयोरपि मीमांसाशास्त्रयोः महत्त्वपूर्णं स्थानं भजते । अनयोः पूर्वोत्तरमीमांसयोः महर्षिभ्यां जैमिनिबादरायणाभ्यां यानि सूत्राणि प्रणीतानि, तानि परवर्तिभिस्सर्वतन्त्रस्वतन्त्रैर्भाष्यकारैरधिकरणशरीरेण व्याख्यातानि । अतस्सूत्रानन्तरं अधिकरणस्वरूपं तु भाष्यमवलोक्यैवावगन्तुं शक्यते । तत्र अधिकरणस्वरूपं यद्विन्यस्तं तत्किञ्चित् प्रस्तूयते ।

**"स्वाध्यायोऽध्येतव्य"** इत्यध्ययनविधिः । अनेन विधिना वेदाध्ययनान्तरं गुरुकुल एव अवस्थाय वेदार्थविचारः कर्तव्य इति सिद्धे तममुमेवार्थं मनसि निधाय भगवान् जैमिनिराचार्यः **अथाऽतो धर्मजिज्ञासा** इति शास्त्रारम्भसूत्रं प्रणिनाय । **अथ** वेदाध्ययनानन्तरम् **अतः** अध्ययनस्य अर्थज्ञानफलकत्वेन अध्ययनवत् वेदार्थविचारस्यापि वैधत्वात् **धर्मजिज्ञासा** वेदार्थविचारः कर्तव्य इति तदर्थः पर्यवस्यति । अत्र धर्मजिज्ञासा कर्तव्यत्वेन प्रतिज्ञायत इति इदं जिज्ञासाधिकरणमिति व्यपदिश्यते । तथा हि – विषयो विशयश्चैवेत्यादिवचनसिद्धं विषयादिपञ्चकम् अधिकरणाङ्गम् । तत्र सर्वस्याप्यधिकरणस्य किमपि वेदवाक्यं विषयः । तद्वाक्यं कस्यार्थस्य बोधकमिति सन्देहः । सयुक्तिका एकतरनिरासकोटिः पूर्वपक्षः । सप्रमाणं पूर्वपक्षकोटिनिरासपूर्वकस्वपक्षस्थापनं सिद्धान्तः । अधिकरणस्य


ISSN: 2320-740X

पञ्चस्ववयवेष्वाद्योऽवयवः सङ्गतिः – यदा शास्त्रग्रन्थेषु तत्र तत्र सम्बद्धा विषया निरूपणीया भवन्ति । तेषां निरूप्यमाणानां विषयाणां पूर्वोत्तरभावेन सम्बन्धोऽपरिहार्यतया वक्तव्यः । विना सम्बन्धं विषयो विवक्षितार्थं नैव प्रकाशयितुं क्षमः , असम्बद्धप्रलाप एव सः । तादृशसम्बन्धबोधकश्शब्दोऽधिकरणावयव एव सङ्गतिरित्युच्यते, तल्लक्षणन्तु **अनन्तराभिधानप्रयोजक-जिज्ञासाजनकज्ञानविषयकस्मरणानुकूलसम्बन्धस्सङ्गतिरि**ति । सा च सङ्गतिः षड्विधेति नैयायिकाः,यथा -

**सप्रसङ्ग उपोद्घातो हेतुकावसरस्तथा ।**

**निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते** ॥इति॥

मीमांसकास्तु

**शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा ।**

**शास्त्रादिविषये ज्ञाते तत्तत्सङ्गतिरूह्यताम्**॥ इति कथयन्ति ।

शास्त्रे प्रतिपाद्यमानस्य विषयस्य सर्वत्र सम्बन्धबोधिका शास्त्रसङ्गतिः । धर्मो मीमांसाशास्त्रे प्रतिपाद्यमानः प्रधानविषयः । सर्वेष्वप्यध्यायेषु साक्षात् परम्परया वा स एव प्रतिपाद्यते इति शास्त्रसङ्गतिः । धर्मो द्वादशलक्षण्या इत्यादिना ग्रन्थारम्भे सङ्गतिं प्रदर्श्य समग्रे ग्रन्थे तस्याः समन्वयोऽपि उपवर्णितः । एकत्रिंशदलौकिकप्रमाणगम्यो धर्म इति सर्वेष्वप्यध्यायेषु धर्मपरतया एव विचाराः प्रवर्तन्त इति अध्यायसङ्गतिः । तथा हि प्रथमं प्रमाणाध्यायं निरूप्य द्वितीये कर्मभेदाध्याये मानाधीनस्य प्रमेयभूतस्य धर्मस्य द्वितीये भेद उच्यत इति पूर्वोत्तरयोस्सङ्गतिः । अनेन प्रथमद्वितीययोरध्याययोः पूर्वोत्तरभाव उपपादितः । ययोरुपजीव्योपजीवकभावरूपसङ्गतिः । इत्थमेव सर्वत्र विभिन्नाः अध्यायसङ्गतयः ऊह्याः । तथा च द्वादशलक्षण्यां प्रथमाध्यायः प्रमाणाध्यायः, तत्र चत्वारः पादाः । तदुक्तं - **विध्यर्थवादस्मृतयो नाम चेति चतुर्विधम् । प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम्** इति । एवं च प्रथमाध्यायगतेषु चतुर्षु

अपि पादेषु धर्मप्रमाणान्येव निरूप्यन्ते । अध्यायगतेषु सर्वेष्वपि पादेषु सङ्गतिर्युज्यत इति इत्थं पादसङ्गतिर्योजनीया । एवं त्रिधा सङ्गतिं प्रदर्श्य अध्यायान्तर्गतपादेषु नैकानि अधिकरणानि समाविष्टानि । तेषां निरूपणावसरे पूर्वोत्तरसङ्गतिर्नितरामपेक्षते । अतो विभिन्नास्सङ्गतय व्युत्पादनीया भवन्ति । पूर्वाधिकरणसिद्धान्तमाश्रित्य अग्रिमाधिकरणे पूर्वपक्षी कथं विषयमुपस्थापयतीत्यत्र सङ्गत्या एव अधिकरणं निष्पादयितुं शक्यते । सा नैकविधा – उपोद्घात–प्रसङ्ग–दृष्टान्त–अपवाद–प्रत्युदाहरण–अवसर-आक्षेपादिभेदात् । तत्र यथाविषयं सङ्गतीः व्युत्पाद्य अधिकरणविन्यासः कर्तव्यः ।

सङ्गतीर्व्युत्पाद्य ततो विषयस्वरूपे वक्तव्ये **आपाततः प्रतीतस्सन्दिग्धऽर्थो विषय** इति तल्लक्षणम् । स एव विषयो भवति यस्यार्थस्सन्दिग्धस्स्यात् । अत्यन्ताज्ञातेऽप्यर्थे तद्विषयकज्ञानाभावात् सन्देहबुद्धिर्नोदेति । अत्यन्तज्ञातेऽप्यर्थे निर्णयस्य अधिगतत्वात् सन्देहो न जागर्ति । अतस्सामान्यतो ज्ञातो विशेषतोऽज्ञातश्चेद्विषयः, तदेव जिज्ञासा जायते । अत एव शाबरभाष्ये भाष्यकाराः **"धर्मः स्यात् प्रसिद्धो वा अप्रसिद्धः स चेत् प्रसिद्धः न जिज्ञासितव्यः अथाप्रसिद्धो नतरामिति** प्राहुः । अत्र वार्त्तिककारा अपि

**प्रसिद्धश्शक्यते ज्ञातुं प्रसिद्धत्वात्तु नेष्यते ।**

**अप्रसिद्धत्वशक्यत्वात् नतरामित्यतोऽब्रवीत् ।।**

**जिज्ञास्यस्संशयाद्धर्मश्श्रेयस्करतयापि च ।**

**असन्दिग्धो ह्यजिज्ञास्यो यो वा स्यान्निष्प्रयोजनः ॥** इत्याहुः।

अतोऽधिकरणस्थो विषयस्तादृशस्स्यात् यश्च ज्ञातोऽपि सन्दिग्धस्स्यात् । तादृश एव उक्तलक्षणलक्ष्यो भवति । एवं शास्त्रेऽस्मिन् सर्वत्रापि अधिकरणेषु सन्दिग्धमेकैकं वेदवाक्यं विषयो भवति । तमाश्रित्य विचारः प्रवर्तते ।


ISSN: 2320-740X

**संशयः – एकस्मिन् धर्मिणि विरुद्धनानाकोटिकं ज्ञानम्** । स्थाणुर्वा पुरुषो वेति । स्थाणुपुरुषयोस्समानं धर्मम् आरोहपरिणाहौ पश्यन् तयोर्विशेषं बुभुत्समानः किमिदमिति नावधारयति । तादृशानवधारणज्ञानमेव संशयप्रकृतिरिति कथ्यते । अत एव वस्तुस्वरूपानवधारणात्मकः प्रत्ययः संशयः। एवमधिकरणरचनावसरेऽपि यो विषयस्स्वीकृतः स च सन्दिग्धः, अत एव तत्र संशयो जायते इति संशयस्यापि अधिकरणावयवत्वं सिद्ध्यति ।

**पूर्वपक्षः** – शास्त्रीयसंशयनिरासार्थं प्रश्नरूपः अधिकरणावयवविशेषः । सिद्धान्तविरुद्धकोटिर्वा । अथवा प्रकृतार्थविरोधितर्कोपन्यासरूपाधिकरणाङ्गविशेषः । प्रायस्सर्वत्र युक्त्या पूर्वपक्ष उपस्थाप्यते । क्वचित् प्रमाणमपि प्रदर्श्यते । अतो युक्त्या प्रदर्शितः पक्षः प्रबलप्रमाणेन प्रत्याख्यातुं शक्यते इति पूर्वपक्षः अस्थायी भवति । यत्र पूर्वपक्षस्थापने प्रमाणं प्रदर्श्यते तत् प्रमाणं दोषयुक्तं वा बाधितम्, गुरुभूतं वा यदि भवेत् तर्हि तदवश्यम् अस्वीकार्यम् भवतीति पूर्वपक्षः प्रत्याख्यायत इति अस्थायी सः । यदि पूर्वपक्षः न भवति तदा स्वसिद्धान्तस्थापनस्य विषयमुपस्थापयितुं विस्तारं कर्तुं च सामग्री नोपलभ्यत इति पूर्वपक्षोऽपि अधिकरणाङ्गं भवति ।

**सिद्धान्तः – सप्रमाणं पूर्वपक्षकोटिनिरासपूर्वकस्वीकरणीयकोटिप्रतिष्ठापनम्** । सिद्धान्तः अबाधितो भवति । अत एव प्रामाणिकविधया प्रतिपादितोऽर्थः अभ्युपगम्यते । अत्र शास्त्रसिद्धार्थो निर्णीयत इति पूर्वापेक्षया वैलक्षण्यम्, अयं च निर्णीतश्शास्त्रसिद्धार्थस्स्थायी तिष्ठतीति अधिकरणावयवत्वम् सिद्धान्तस्य फलति । क्वचित् वेदवत् अधिकरणमपि षडङ्गमिति प्रयोजनमपि अधिकरणाङ्गं प्राहुः प्राञ्चः इति अवलोक्यते । इत्थमेतैरवयवैरधिकरणमारच्यते ।

इह मीमांसाशास्त्रे प्रथमाधिकरणं जिज्ञासाधिकरणं, ग्रन्थे प्रतिपादितं तदधिकरणं प्रदर्श्यते ।

धर्माधर्मनिरूपणं शास्त्रसङ्गतिः । प्रमेयभूतस्य धर्मस्य प्रमाणं विना स्वरूपं निर्णेतुं न शक्यत इति आदौ प्रमाणं निरूपणीयमिति प्रमाणनिरूपणमध्यायसङ्गतिः । तत्र प्रमाणान्तरनिरपेक्षस्य स्वतः प्रमाणभूतस्य विधेः धर्मे प्रामाण्यं स्थापयितुं चोदनायाः प्रामाण्यं निरूप्यते इति चोदनायाः प्रामाण्यनिरूपणं पादसङ्गतिः । अधिकरणसङ्गतिस्तु औपोद्घातिकीति ज्ञेया ।

**'स्वाध्यायोऽध्येतव्य'** इति वेदवाक्यं विषयः । स्वस्य अध्यायः स्वाध्यायः । अत्र स्वशब्दः आत्मकुलगुरुपरम्परावाचकः । अध्यायशब्दः शाखावच्छिन्नवेदपरः । अध्येतव्य इत्यत्र इङ् धातोरध्ययनमर्थः । अध्ययनं गुरुमुखोच्चारणपूर्वकशिष्यानूच्चारणम् । तेन वाक्येन यदध्ययनं विधीयते तदध्ययनं स्वर्गार्थमुत अर्थज्ञानार्थम् । यदि स्वर्गार्थं तर्हि विचारो न वैधः । यद्यर्थज्ञानार्थं तर्हि विचारं विना अर्थज्ञानासम्भवात् स वैधः । अत इदं विचारशास्त्रं नारम्भणीयमुत विधिप्रयुक्त्या आरम्भणीयमिति सन्देहः।

**पूर्वपक्षः** - स्वर्गार्थमेव वाध्ययनं नत्वर्थज्ञानार्थम् । अर्थज्ञानार्थमध्ययनमिति विधिरङ्गीक्रियते भारताध्यनादौ क्लृप्तत्वात् विधिवैयर्थ्यम् । किञ्च वेदाध्ययनानन्तरं गुरुकुलेऽवस्थाय विचारशास्त्राध्ययनं क्रियते । तदा **अधीत्य स्नायादिति** शास्त्रविरोधः । अतो विचारशास्त्राध्ययनस्य अवैधत्वात् इदं गुरुकुलेऽवस्थाय नारम्भणीयम् इति पूर्वपक्षसंक्षेपः ।

**सिद्धान्तः**- अर्थज्ञानार्थमेवाध्ययनम्, यद्यपि भारतादौ विधिं विना अध्ययनं क्लृप्तम् । तथापि लिखितपुस्तक-वृद्धप्रवचनादिभिरपि भारताद्यर्थज्ञानमिव वेदार्थज्ञानं मा भूदिति वेदाध्ययनेनैव युक्तमर्थज्ञानं सम्पादयितुं नियम आश्रीयते । तदा च दृष्टं फलं सिद्ध्यति । **दृष्टे सम्भवति सति अदृष्टकल्पनाया अन्याय्यत्वात्** इति न्यायात् । अधीत्य स्नायादिति शास्त्रविरोधोऽपि पूर्वोत्तरभावमाश्रित्य परिहर्तुं शक्यते। अतो वेदार्थज्ञानस्य क्रत्वनुष्ठानद्वारा स्वर्गादिफलोपभोगः नैवं भारतार्थज्ञानस्येति उपायान्तरेण भारतार्थज्ञानं


ISSN: 2320-740X

न दोषाय भवति । अतो विधिप्रयुक्त्या इदं विचारशास्त्रमारम्भणीयमिति सिद्धान्तः । इत्थं पञ्चावयवविशिष्टमधिकरणं शास्त्रेषु (मीमांसा) निरूप्यत इति सर्वं सुमङ्गलम् ।

**आकरग्रन्थाः**

जैमिनीयन्यायमालाविस्तरः

वैयाकरणसिद्धान्तकौमुदी

मीमांसादर्शनम्

मीमांसाश्लोकवार्त्तिकम्

न्यायकोशः

**********

## नादब्रह्म

**डा. गणेश ईश्वर भट्टः**

**अध्यक्षः, अद्वैतवेदान्तविभागः**

**भगवतो वेदस्य अनेकविद्यास्थानोपबृंहितस्य सर्वार्थप्रकाशकत्वात् साङ्गः स्वाध्यायः अध्येतव्यः ज्ञेयश्च ।** ऋग्यजुस्सामाथर्वभेदेन चतुर्धा विभक्तस्य वेदस्य क्रमेण आयुर्वेदधनुर्वेदगान्धर्ववेदार्थशास्त्राणि उपवेदाः भवन्ति । तत्र सङ्गीतशास्त्रनाम्ना प्रसिद्धं गान्धर्वशास्त्र आबालवृद्धं मनो रञ्जयत् अद्यापि लोके पामरानपि जनान् प्रीणाति । किन्तु सङ्गीतशास्त्रस्य लक्ष्यं न मनोरञ्जनम्, अपि तु तत् आत्मतत्त्वसाक्षात्कारस्य साधनम् । भरतमुनिना प्रणीतं नाट्यशास्त्रम्, मतङ्गमुनिरचिता बृहद्देशी, शार्ङ्गदेवविरचितः सङ्गीतरत्नाकरः- इत्यादयः ग्रन्थाः सङ्गीतशास्त्रस्य आधरभूताः भवन्ति ।

**नादः तथा सङ्गीतम्**

सङ्गीतशास्त्रम् अधिजिगीषुणा नादस्वरूपम् अवश्यं ज्ञातव्यम् । नादरूपेण गीतेन सह यदा वाद्यस्य मेलनं जायते, तदा सः अतिशयेन मनो रञ्जयति । नृत्यं तु वाद्यगीते अनुकरोति । अतः एतानि त्रीण्यापि नादाधीनानि । नादरूपी शिवः सकलजगत्कारणम् । नाद एव परम्परया व्यवहारहेतुरपि । उक्तं च-

**गीतं नादात्मकं वाद्यं नादव्यक्त्या प्रशस्यते ।**

**तद्द्वयानुगतं नृत्तं नादाधीनमतस्त्रयम् ॥**

**नादेन व्यज्यते वर्णः पदं वर्णात्पदाद्वचः ।**

**वचसो व्यवहारोऽयं नादाधीनमतो जगत् ॥** इति ।

मतङ्गमुनिरपि जगाद-

**न नादेन विना गीतं न नादेन विना स्वराः ।**

**न नादेन विना नृत्तं तस्मान्नादात्मकं जगत् ॥** इति ।

सङ्गीतमपि अध्यात्मविद्यायाः साधनम् । नादस्य स्वरूपं ज्ञात्वा तदनुसन्धानं यः करोति, सः अन्ते आत्मसाक्षात्कारमपि प्राप्तुमर्हति । अत एव सङ्गीतशास्त्रस्य प्राचीनभारतीयग्रन्थानां प्रारम्भः अध्यात्मविषयाणां निरूपणेन भवति । यथा- सङ्गीतरत्नाकरे ग्रन्थकारः प्रस्तोष्यमाणान् विषयान् प्रदर्श्य, तालरागादिविषयाणां प्रतिपादनात् प्राक् पिण्डोत्पत्तिप्रकरणम् आरेभे । तत्र शरीररचना, शरीरे आत्मनः संस्थितिः, शरीरे स्थितानि षट्चक्राणि- एतेषां विषयाणां विस्तरेण निरूपणं कृतम् । नादस्य निरूपणे प्रवृत्तस्य शरीरादिनिरूपणेन किमिति जिज्ञासा जायते । तत्रेदं समाधानम्- शरीरं हि नादस्य आधारः । शरीरं च पाञ्चभौतिकं जीवकर्माधीनम् । अतः भूतानि भौतिकं शरीरम्, तदभिमानी शारीरः एतत्सर्वं ज्ञातव्यम् ।

**नादानुसन्धाने मनुष्या एव अधिकारिणः**


ISSN: 2320-740X

जीवानां मध्ये मनुष्य इतरेभ्यो विशिष्यते ।तैत्तिरीयश्रुतौ **अन्नात् पुरुषः** इति पुरुषस्यैव सृष्टिः दर्शिता, न प्राण्यन्तरस्य । तत्र भाष्यकारैः हेतुरुक्तः- **सर्वेषामप्यन्नरसविकारत्वे ब्रह्मवंश्यत्वे च अविशिष्टे, कस्मात्पुरुष एव गृह्यते? प्राधान्यात् । किं पुनः प्राधान्यम्? कर्मज्ञानाधिकारः । पुरुष एव हि शक्तत्वादर्थित्वादपर्युदस्तत्वाच्च कर्मज्ञानयोरधिक्रियते, 'पुरुषे त्वेवाविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीक्षतीत्येवं संपन्नः; अथेतरेषां पशूनामशनायापिपासे एवाभिविज्ञानम्' इत्यादि श्रुत्यन्तरदर्शनात्** इति । इममर्थं मनसि निधाय सङ्गीतरत्नाकरग्रन्थे कथितम्- **ततो नादोपयोगित्वान्मानुषं देहमुच्यते** इति। न हि पशुपक्षिकीटादयः नादस्य स्वरूपं ज्ञातुं प्रभवन्ति ।

अयं च जीवः न ब्रह्मभिन्न इति सङ्गीतशास्त्रस्यापि प्रतिपाद्यो विषयः । अतः स्वस्वरूपभूतं ब्रह्म साक्षात्कृत्यैव जीवः कृतकृत्यो भवति । यथोक्तम्-

**अस्ति ब्रह्म चिदानन्दं स्वयञ्ज्योतिर्निरञ्जनम् ।**

**ईश्वरं लिङ्गमित्युक्तमद्वितीयमजं विभुम् ॥**

**निर्विकारं निराकारं सर्वेश्वरमनश्वरम् ।**

**सर्वशक्ति च सर्वज्ञं तदंशा जीवसंज्ञकाः ॥** इति ।

अत्र वेदान्तप्रतिपाद्यस्य ब्रह्मण एव निर्देशः कृतः । निर्गुणब्रह्मसाक्षात्कारे असमर्थान् उद्दिश्य शास्त्रं सगुणोपासनमपि उपदिशति ।अत एव श्रुतिस्मृतिपुराणेषु बहुविधानि सगुणोपासनानि निरूपितानि । तर्हि सगुणध्यानस्यैव सर्वेषां साधनत्वात् किं नादनिरूपणेन ? किं लोकप्रसिद्धेन सङ्गीतेन? इत्याकाङ्क्षायामुक्तम्-

**ध्यानमेकाग्रचित्तैकसाध्यं न सुलभं नृणाम् ।**

**तस्मादत्र सुखोपायं श्रीमन्नादमनाहतम् ॥**

**गुरूपदिष्टमार्गेण मुनयः समुपासते ॥**

ISSN: 2320-740X

**सोऽपि रक्तिविहीनत्वान्न मनोरञ्जको नृणाम् ।।**

**तस्मादाहतनादस्य श्रुत्यादिद्वारतोऽखिलम् ।**

**गेयं वितन्वतो लोकरञ्जनं भवभञ्जनम् ॥** इति ।

ध्यानं चित्तस्य ऐकाग्रम्य् अपेक्षते । यः एवं चित्तं निग्रहीतुं न शक्नोति, सः सङ्गीतं साधनतया स्वीकर्तुमर्हति। सङ्गीतद्वारा नादानुसन्धाने प्रवेष्टुं प्रभवति । सङ्गीतम् आहतनादात्मकम् । अतः अत्र जनाः स्वेच्छया प्रवर्तन्ते । आहतनादं स्वीकृत्य अनाहतनादे प्रवेष्टव्यम् । अनेन लोकरञ्जनेन सह भवबन्धस्य निवृत्तिरपि भवितुमर्हति ।

**नादस्य स्वरूपम्**

**आहतोऽनाहतश्चेति द्विधा नादो निगद्यत** इति वचनानुसारम्, नादः द्विविधः आहतः अनाहतश्चेति । द्वयोः वस्तुनोः घर्षणेन उत्पद्यमानः शब्दः आहत इत्युच्यते । एवंविधं घातं विना यः शब्दः स्वयमेव अनुभूयते, सः अनाहतनादः । अस्य केन्द्रं भवति हृदयम् अथवा अनाहतचक्रम् । नादशब्दस्य यद्यपि ध्वनिः स्वरः इत्यर्थः । किन्तु सूक्ष्मदृष्ट्या विचार्यमाणे ध्वनिवर्णौ भिन्नौ । अर्थप्रत्यायकः ककारादिः वर्णः । ध्वनिः वर्णानाम् अभिव्यञ्जकः, अत एव ततो भिन्नः । यथाऽऽहुः भगवत्पादाः- **कः पुनरयं ध्वनिर्नाम ? यो दूरादाकर्णयतो वर्णविवेकमप्रतिपद्यमानस्य कर्णपथमवतरति प्रत्यासीद तश्च पटुमृदुत्वादिभेदं वर्णेष्वासञ्जयति** इति । एकोऽपि नादः हृदय-कण्ठ-मूर्धरूपस्थानभेदात् क्रमेण मन्द्र-मध्य-तारसंज्ञाः प्राप्नोति । स च त्रिविधः नादः एकैकः द्वाविंशतिभेदान् सम्प्राप्य श्रुतिः इत्युच्यते । श्रुतिभ्यः षड्जादयः स्वरा उत्पद्यन्ते ।

**नादस्य निष्पत्तिः**

नादस्य उत्पत्तिस्थानम् मूलाधारचक्रम् । मतङ्गमुनिः अवोचत्-

**यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रन्थिश्च यः पुनः ।**

**तन्मध्ये संस्थितः प्राणः प्राणाद् वह्निसमुद्भवः ॥**


ISSN: 2320-740X

**वह्निमारुतसंयोगान्नादः समुपजायते ॥** इति ।

अर्थात् मूलाधारस्थब्रह्मग्रन्थौ विद्यमानात् प्राणात् यदा वह्निः प्रजायते, तदा नादः निष्पद्यते । अत एव ध्वनिरयं नाद इति कथ्यते। नादाभ्यां प्राणाग्निभ्यां जात इति नाद इति नादशब्दस्य व्युत्पत्तिः । नादशब्दे विद्यमानौ **न द** वर्णौ क्रमेण प्राणाग्निवाचकौ । अयं नादः पञ्चविधः सूक्ष्म-अतिसूक्ष्म-व्यक्त-अव्यक्त-कृत्रिमभेदात् । एते च नादाः क्रमेण बुद्धिगुहा- हृदय-कण्ठ-तालु-मुखप्रदेशेषु भवन्ति ।

**नादस्य चैतन्यरूपत्वम् उपासनं च**

यथा ब्रह्मस्वरूपभूतं चैतन्यं सर्वार्थप्रकाशकम्, तथैव स्फोटाख्यः नादः सर्वार्थप्रकाशकः, शब्दस्य अर्थप्रकाशकत्वात् । **भूतं भवद्भविष्यदिति सर्वमोङ्कार एव ओङ्कार एवेदं सर्वम्** इति अभिधानाभिधेययोः ऐक्यं विवक्षित्वा ओंकारस्य सर्वात्मकतामाह । तथा च प्रणवानुसन्धानपूर्वकं प्राणं चित्तं च निगृह्णाति, तदा प्रसन्ने चेतसि आत्मा विविक्ततया प्रकाशते । अत्रायं विशेषः- वैयाकरणेन भर्तृहरिणा शब्दब्रह्मवादः समारब्धः । शब्दब्रह्मैव स्फोट इति महास्फोट इति वा व्यपदिश्यते । तदर्थप्रकाशकः प्रसिद्धो ह्ययं श्लोकः-

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**

**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥** इति ।

अयं च शब्दः परा, पश्यन्ती, मध्यमा तथा वैखरी इति चतुर्विधः । यद्यपि भर्तृहरिः परा पश्यन्ती इतीमौ भिन्नौ इति न मेने । तथापि शास्त्रेषु इमे प्रसिद्धाः भेदाः । एतेषु अन्तिमावस्था अर्थात् वैखरी एव मनुष्यैः व्यवह्रियते । एतेषां शब्दभेदानां स्थानानि यथा-

**परा वाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।**

**हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥** इति ।

यद्यपि भर्तृहरिः नादशब्दः स्फोटापरपर्याय इति नावोचत् । यतः प्राकृतः वैकृतश्चेति नादः द्विविधः । स्फोटः प्राकृतः नादः । ध्वनिः अर्थात् वर्णः वैकृतः । विष्णुपुराणे स्मर्यते-

**द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।**

**शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति** ॥ इति ।

नागेशमतानुसारम्, बिन्दोः अर्थात् त्रिगुणात्मकात् अव्यक्तात् शब्दब्रह्म उत्पद्यते । तदुक्तम्-

**बिन्दोस्तस्माद्भिद्यमानाद् रवोऽव्यक्तात्मकोऽभवत् ।**

**स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते ॥** इति ।

यद्यपि भर्तृहरिप्रवर्तितः स्फोटवादः वेदान्तिभिः निराकृत एव । तथापि नादब्रह्मनिरूपणं न दोषमावहति । यतः नेदं दर्शनशास्त्रम्, अपि तु आत्मदर्शनसाधनभूतनादब्रह्मोपासनप्रपञ्चनपरम् । रजस्तमोगुणाभ्यां विक्षिप्तस्य मनसः सात्त्विकत्वापादने यद्यदुपकरोति, तत् खलु साधकेन उपादेयम् । अत एव याज्ञवल्क्यस्मृतौ सङ्गीतशास्त्रस्य मोक्षानुकूलत्वम् अभिहितम्-

**वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।**

**तालज्ञश्चाप्रयासेन मोक्षमार्गं स गच्छति ॥** इति ।

तथा च इदमत्र सिद्धं चैतन्यानन्दस्वरूपब्रह्मदृष्ट्या नादः उपासनीय इति । ब्रह्मदृष्ट्या उपास्यमानः शब्दः नादो वा शब्दब्रह्म इति नादब्रह्म इति वा कथ्यते । नादब्रह्मण उपासनेन ब्रह्मादयः देवा अपि उपासिता भवन्ति, तेषां परब्रह्माभिन्नतया उपास्यमानात् नादाभिन्नत्वात् । तदुक्तं सङ्गीतरत्नाकरे-

**चैतन्यं सर्वभूतानां विवृत्तं जगदात्मना ।**

**नादब्रह्म तदानन्दमद्वितीयमुपास्महे ॥**

**नादोपासनया नूनं ब्रह्मविष्णुमहेश्वराः ।**

**भवन्त्युपासिता नूनं यस्मादेते तदात्मकाः** ॥इति ।

अनेनैव अभिप्रायेण शार्ङ्गदेवः **वन्दे नादतनुम्** इति शङ्करं नमस्करोति ।

**औपनिषदं नादानुसन्धानम्**


ISSN: 2320-740X

नादबिन्दूपनिषदि अन्यासु कासुचित् उपनिषत्सु योगशास्त्रीयग्रन्थेषु च नादोपासनविधिः श्रूयते । अयं सङ्गीतशास्त्रोक्तात् नादोपासनात् विलक्षणः । नादानुसन्धानं नाम अनाहतध्वनेः अनुचिन्तनम् । यावत् चित्तं न लीयते तावदात्मा विविक्ततया न प्रकाशते । चित्तलयः प्राणलयसापेक्षः । अस्य चित्तलयस्य सम्पादनाय नादानुसन्धानम् उपकरोति । अस्य लययोग इत्यपि नामान्तरम् । **न नादसदृशो योगः** इत्युक्तं हठयोगप्रदीपिकायाम् । शिवसंहितायामपि **न नादसदृशो लयः** इति । योगतारावल्याम् अभ्यधायि-

नादानुसन्धान नमोऽस्तु तुभ्यं त्वां मन्महे तत्त्वपदं लयानाम् ।
भवत्प्रसादात् पवनेन साकं विलीयते विष्णुपदे मनो मे ॥ इति ।

बाह्यविषयेषु आसक्तं मनः नादे रममाणं तत्रैव लीयते । अतः गुरूपदेशम् अवलम्ब्य सिद्धासने उपविश्य योगी अङ्गुष्ठाभ्यां कर्णौ बद्ध्वा अन्तर्गतं नादं शृणुयात् । आदौ स्थूलतया श्रूयमाणः अयं नादः क्रमेण रूपान्तरतां भजमानः क्षीणो भवति । अतः आदौ स्थूलशब्दं गृहीत्वा ततो सूक्ष्मसूक्ष्मतरसूक्ष्मतमतां गते शब्दे अन्तःकरणं प्रविलाप्य उपासकः अन्ते स्वस्वरूपे ब्रह्मणि तिष्ठति । यथोक्तम्-

सिद्धासने स्थितो योगी मुद्रां सन्धाय वैष्णवीम् ।
शृणुयाद्दक्षिणे कर्णे नादमन्तर्गतं सदा ॥
सिद्धासने स्थितो योगी मुद्रां सन्धाय वैष्णवीम् ।
शृणुयाद्दक्षिणे कर्णे नादमन्तर्गतं सदा ॥
श्रूयते प्रथमाभ्यासे नादो नानाविधो महान् ।
वर्धमाने तथाऽभ्यासे श्रूयते सूक्ष्मसूक्ष्मतः ॥
आदौ जलधिजीमूतभेरीनिर्झरसम्भवः ।
मध्ये मर्दलशब्दाभः घण्टाकाहलजस्तथा ॥
अन्ते तु किङ्किणीवंशवीणाभ्रमरनिःस्वनः ।

इति नानाविधाः शब्दाः श्रूयन्ते सूक्ष्मसूक्ष्मतः ॥

सर्वचिन्तां समुत्सृज्य सर्वचेष्टाविवर्जितः ।

नादमेवानुसन्दध्यान्नादे चित्तं विलीयते ॥

ब्रह्मप्रणवसंलग्ननादो ज्योतिर्मयात्मकः ।

मनस्तत्र लयं याति तद्विष्णोः परमं पदम् ॥ इति

**हठयोगप्रदीपिकायां प्रतिपादितं नादानुसन्धानम्**

सदाशिवोक्तेषु सपादलक्षसङ्ख्याकेषु चित्तलयप्रकारेषु नादानुसन्धानं मुख्यम् । आरम्भ-घट-परिचय-निष्पत्तिभेदेन अस्य चतस्रः अवस्थाः भवति । यदा प्राणायामाभ्यासैः अनाहतचक्रस्था ब्रह्मग्रन्थिः भिद्यते, तदा आत्मा चित्ते आनन्दम् अनुभवति । तदा योगी अनेकविधम् अनाहतनादं शृणोति । इयमारम्भावस्था । ततः प्राणः अपानेन सह नादबिन्दुकला (अनुरणनं नादः, अनुस्वारोत्तरभावी ध्वनिः, बिन्दुः नादैकदेशः) एकीकृत्य कण्ठस्थानं प्राप्नोति । तदा विष्णुग्रन्थेः भेदनं भवति । सा घटावस्था । परिचयावस्थायां रुद्रग्रन्थिभेदनात् प्राणः भ्रूमध्यदेशं गच्छति । तदा मर्दलशब्दाभं ध्वनिं शृण्वन् योगी चित्तवृत्तिप्रयुक्तान् आनन्दान् तिरस्कृत्य स्वानन्दमनुभवति । प्राणे ब्रह्मरन्ध्रगते निष्पत्त्यवस्था भवति । अस्य राजयोग इति नामान्तरम् । तदा चित्तमेकत्वेन तिष्ठति । नादानुसन्धानयोगी अयमस्यामवस्थायाम् ईश्वरतुल्यो भवति । एवमध्यात्मशास्त्रे योगशास्त्रे च नादः स्थानं लभते । तदेवं सङ्क्षेपेण नादस्य तदुपासनस्य तदनुसन्धानस्य च स्वरूपं यथामति निरूपितमित्योम् ॥

आधारग्रन्थाः-

१. ब्रह्मसूत्रभाष्यम्, भाष्यरत्नप्रभा-भामती-न्यायन्निर्णयोपेतम्

२. दशोपनिषदः शाङ्करभाष्यसहिताः

३. सङ्गीतरत्नाकरः


ISSN: 2320-740X

४. बृहद्देशी

५. सङ्गीतदामोदरः

६. हठयोगप्रदीपिका

७. योगतारावली

८. अष्टोत्तरशतोपनिषदः

९. वाक्यपदीयम्

१०. परमलघुमञ्जूषा

**********

## अर्धतृतीया इत्यत्र समासविचारः

**डा. चन्द्रशेखरभट्टः**

**अध्यक्षः, व्याकरणविभागः**

अनेकमन्यपदार्थे[1] इति सूत्रभाष्ये इदं विचारितम्।अथ अर्धतृतीया आनीयन्तामित्यत्र अर्धतृतीयेति कोऽयं समासः? बहुव्रीहिः। कोऽस्य विग्रहः? द्वौ द्रोणौ, अर्धद्रोणश्च। अर्धं तृतीयमेषाम् अर्धतृतीया द्रोणा इति। नैतदस्ति। एवं हि समासार्थो नोपपद्यते। बहुव्रीहिरयम् अन्यपदार्थप्रधानः[2]। स च वर्तिपदार्थव्यतिरिक्तो भवेत्। इह तु अर्धेन तृतीयस्य पूरणं भवति इति अन्यपदार्थस्य द्वित्वमेव। अतो न बहुवचनं युज्यते। बहुवचनोपपत्तये वर्तिपदार्थोऽपि यदि गृह्येत तर्हि नासावन्यपदार्थो भवति। अन्यस्यैव योऽर्थः सः अन्यपदार्थः न तु स्वपदस्यापि।

[1] पा.सू २.२.२४ म,भा.द्वितीयाह्निकम्, पृ.४२४

[2] बहुव्रीहेरिदं सामान्यलक्षणम्

अथ अर्धं तृतीयमनयोः द्रोणयोः इत्यस्तु विग्रहः इति चेन्नैतदस्ति। अत्र चार्थे षष्ठ्यर्था[1]नुपपत्तिः। न चावयवावयविभावसम्बन्धोऽत्रेति वाच्यम्; श्रूयमाणस्यार्धपदार्थस्य तृतीयसम्बन्धित्वेन द्वाभ्यां तस्य अवयवावयविभावलक्षणस्य सम्बन्धस्याभावात्।स्वस्वामिभावसम्बन्धो यद्यपि वक्तुं शक्यस्तथापि तस्य प्रतिपिपादयिषितत्वाभावाद् अनभिधानमेव इति कैयटः[2]। यदि कश्चित् सम्बन्धः तत्र स्यात् तर्हि एतयोः कार्षापणयोरिदमर्धम्, एतयोर्माषयोरिदमर्धम् इति प्रतीयेत। तथाऽनुभवाभावात् सम्बन्धाभावनिर्णयः। इह द्विवचनापत्तिस्तु नोक्ता समासस्यैव दुष्टत्वे तस्याप्रसङ्गात्। अत्रोच्यते देवदत्तस्य भ्राता इतिवदत्र षष्ठ्यर्थोपपत्तिः। तथा हि देवदत्तस्य भ्राता इत्यत्र स्वस्वामिभावादिः षष्ठीप्रयोजकः सम्बन्धो नास्ति मातापितृभ्यामेव तयोः जन्यजनकभावसम्बन्धः। तथापि समानोदरशायित्वमाश्रित्य सम्बन्धः कल्प्यते । एवमर्धतृतीया इत्यत्रापि अर्धस्य द्वाभ्यां सह एकप्रदेशावस्थितिप्रयोज्यः सम्बन्धो भविष्यति। उक्तं च भाष्ये[3] 'अथेह देवदत्तस्य भ्राता इति कः षष्ठ्यर्थः? एकस्मात्प्रादुर्भाव इति। एतच्च वार्तम्[4]। तद्यथा सार्थिकानामेकप्रतिश्रये उषितानां प्रातरुत्थाय प्रतिष्ठमानानां न कश्चित् परस्परमभिसम्बन्धो भवति। एवं जातीयकं भ्रातृत्वं नाम। यद्यत्र षष्ठ्यर्थो युक्तः तर्हि अर्धतृतीयेऽपि' इति। न चैवमपि अर्धतृतीया आनीयन्तामित्युक्ते अन्यपदार्थयोः द्वयोरेव आनयनं प्राप्नोति न त्वर्धस्य इति वाच्यम्; तद्गुणसंविज्ञानबहुव्रीह्याश्रयणात्। नैतदस्ति। तद्गुणातद्गुणसंविज्ञानबहुव्रीह्योरयं विषयविभागः यत्र संयोगसमवायलक्षणे सम्बन्धे बहुव्रीहिः तत्र आद्यः, यत्र तु स्वस्वामिभावादिके सम्बन्धे तत्र अन्त्यः। एवञ्च प्रकृते तद्गुणसंविज्ञानस्य वक्तुमशक्यतया द्विवचनप्रसङ्गाच्च अयुक्तोऽयं पक्षः।

एवं तर्हि अर्धं तृतीयमेषामित्याद्यपक्ष एवाश्रयित्व्यः। अस्मिन्पक्षे बहुवचनानुपपत्तिस्तु परिहर्तव्या। तत्रावयवार्थेन वाक्यमाश्रीयते। अवयवार्थश्च वर्तिपदार्थः। अर्धस्य द्वयोश्च समुदायः समासार्थः। यद्यपि समासार्थस्य समुदायस्य एकत्वात् एकवचनमेव प्राप्तं तथापि समुदायावयवानां भेदविक्षया

---

[1] षष्ठ्यर्थः सम्बन्धः

[2] पा.सू २.२.२४ म.भा.२.आ.२ पृ.४५४

[3] पा.सू २.२.२४ म.भा.२.आ.२ पृ.४५५

[4] असारवाची वार्तशब्दः।


ISSN: 2320-740X

बहुवचनोपपत्तिः। समुदायस्य अवयवानां च कदाचिद्भेदविवक्षा कदाचिदभेदविवक्षा च दृष्टा। तद्यथा ब्राह्मणानां सङ्घः, सङ्घीभवन्ति[1] ब्राह्मणाः इति। असङ्घो ब्राह्मणाः सङ्घः सम्पद्यते इत्यर्थे सङ्घीभवन्ति ब्राह्मणा[2] इति प्रयुज्यते। इह समुदायः अन्यपदस्यैवार्थः न तु समस्यमानपदस्य। स चात्र अवयवेभ्यो भिन्नः एव। तत्र अवयवगतबहुत्वस्य अन्यपदार्थभूते समुदाये आरोपात् बहुवचनं क्रियत इत्याशयः।

नन्वेवं समुदायः समासार्थ इति स्वीकारे 'असिद्वितीयोऽनुससार पाण्डवम्', 'सङ्कर्षणद्वितीयस्य बलं कृष्णस्य वर्धताम्' इत्यादिप्रयोगा न निरुह्येरन्। द्वयोः पूरणो हि द्वितीयः। स च द्व्यात्मकस्य समुदायस्य अवयवो भवति। तस्य च समुदायस्य समासेनाभिधानात्  पूर्ववदुद्भूतावयवभेदः समूहः समासार्थ इति अर्धतृतीयेत्यत्र बहुवचनमिव इह द्विवचनप्रसङ्गः। अत्रोच्यते – अयं द्वितीयशब्दोऽस्ति तीयप्रत्ययान्तः पूरणार्थे। अव्युत्पन्नोऽसहायवाची द्वितीयः। तद्योऽसहायवाची तस्येदं ग्रहणम् असिद्वितीय इत्यत्र ।

न च अर्धतृतीया इत्यत्र एकवचनप्रसङ्गः, शतम्, वनम्, यूथम् इत्यादाविव समुदायस्यास्य एकार्थत्वात् इति वाच्यम्; उद्भूतावयवभेदस्य समुदायस्य समासार्थत्वात्। त्रयाणां पूरणं तृतीयम् इति तृतीयशब्दस्य व्युत्पादनात् त्रित्वसंख्यापरिच्छिन्न एवान्यपदार्थो न्याय्य इति तत्प्रत्यायनाय बहुवचनस्यैव प्रयोक्तव्यत्वात्। यथा वृक्षा इति बहुत्वसंख्यायुक्तः पदार्थः प्रतीयते, यथा च धवखदिरपलाशा इति तथैव अर्धतृतीया इत्यपि बहुत्वसंख्यायुक्तः प्रतीयते इति बहुवचनं न्याय्यम्। शतशब्दस्तु अवयवसंख्याविवक्षायामपि स्वभावतः एकवचनान्त एव शतं ब्राह्मणा इति। तदत्र अर्धं तृतीयमेषामिति विग्रहो न्याय्यः।

**********

---

[1] वाक्ये सङ्घस्य कर्तृत्वम्।च्व्यन्तवृत्तौ प्रकृतेः कर्तृत्वेन तदाश्रयसंख्यामादाय बहुवचनम्।

[2] आन्महतः समानाधिकरणजातीययोः६.३.४६ म.भा.पृ.२४०

## काव्यलिङ्गालङ्कारः

**डा. राघवेन्द्रभट्टः**

**अध्यक्षः, साहित्यविभागः**

काव्यपोषकसामग्रीषु अन्यतमा भवन्ति अलङ्कराः । यैः काव्यस्य शोभातिशयः क्रियते ते अलङ्काराः उच्यन्ते । शब्दगताः अर्थगताश्च  ते काव्यमुपकुर्वन्ति। शब्दगताः अनुप्रासादयः शब्दालङ्काराः इति, अर्थगताः उपमादयः अर्थालङ्काराः इति च प्रसिद्धाः। अर्थालङ्कारेषु सादृश्यमूलाः विरोधमूलाः शृङ्खलामूलाः न्यायमूलाश्च अलङ्कारा भवन्ति। तत्र न्यायमूलः काव्यलिङ्गालङ्कारः। न्यायः तर्कनियमः मूलमिति हेतोः अस्य न्यायमूलत्वम्।  काव्याभिमतं लिङ्गम् काव्यलिङ्गम्। लिङ्गं हेतुः। ननु काव्यलिङ्गं नाम काव्यहेतुः  प्रतिभादिः इति न शङ्कनीयम्। अत्र न काव्यनिर्मितेः कारणार्थकः लिङ्गशब्दः। किन्तु विवक्षितस्य अर्थस्य उपपादकतया स्वीक्रियमाणः अर्थः इति लिङ्गपदार्थः। तस्य च सौन्दर्यवत्तया अलङ्कारत्वम्।  ननु  काव्यलिङ्गमिव काव्योपमा काव्यरूपकम् इत्येवं कुतो न व्यवह्रियते? वस्तुतः काव्यधर्माणाम् उपमादीनामपि काव्यालङ्कारतया तथा व्यवहारः कर्तुं शक्यः । तथापि लिङ्गस्य न्यायशास्त्रप्रसिद्धस्य तथात्वेन अत्र ग्रहणं न इति स्पष्टतार्थं काव्यपदपूर्वकनिर्देशः, अन्यत्र उपमादिस्थले न तथा ।

अत्र पञ्च विषयाः मुख्यतया निरूपणीया भवन्ति।

- काव्यलिङ्गालङ्कारस्य स्वरूपम्
- अर्थान्तरन्यासात् काव्यलिङ्गालङ्कारस्य वैलक्षण्यम्
- हेत्वलङ्कारात् काव्यलिङ्गस्य वैलक्षण्यम्
- अनुमानालङ्कारात् काव्यलिङ्गस्य वैलक्षण्यम्


ISSN: 2320-740X

- काव्यलिङ्गालङ्कारस्य दोषाभावरूपताविचारः

**काव्यलिङ्गस्य स्वरूपम्**

अनुमितिकारणत्वेन सामान्यविशेषभावाभ्याञ्च अनालिङ्गितः प्रकृतार्थोपपादकत्वेन विवक्षितोऽर्थः काव्यलिङ्गम्। प्रकृतार्थस्य उपपादकत्वेन वक्तुमिष्टः अर्थः काव्यलिङ्गम् इत्युच्यते। सः अर्थः अनुमितिज्ञानं प्रति कारणत्वेन उपपद्यमानं न भवेत्। सामान्यविशेषभावेन अनापन्नश्च भवेत्। अर्थात् अनुमितिसाधकं लिङ्गम् अत्र न विविवक्षितमित्यर्थः । किञ्च साध्यसाधनयोरर्थयोः सामान्यविशेषभावः न भवेत्। एवं काव्यलिङ्गं नाम अनुमित्यकारणं सामान्यविशेषभावानालिङ्गितः प्रकृतार्थनिश्चयकारी अर्थः इति सिद्ध्यति। यथा

भो दोषा युष्माभिर्वस्तुं स्थानान्तराणि मृग्यन्ताम् ।
लभ्योऽत्र नावकाशो मय्यघकूलंकषो वसति कश्चित् ॥

आत्मनि दोषलेशमात्रमपि अनिच्छतः विष्णुभक्तस्य देवदत्तस्य दोषान् प्रति उक्तिरियम्। सः दोषान् प्रति वदति- भोः दोषाः! यूयं स्थातुं अन्यदेव स्थानं मृगयध्वम्। मयि तावत् सर्वदोषहरो हरिर्वसति इति । अत्र देवदत्ते दोषाणां अवकाश-अलाभरूपः अर्थः प्रकृतः । तस्य उपपादकतया सकलदोषहरणक्षमस्य श्रीहरेः तत्सान्निध्यरूपः अर्थः उपात्तः। स च प्रकृतार्थोपपादकत्वेन उक्तः अर्थः न अनुमितिजनकः यतस्तस्य व्याप्यत्वं पक्षधर्मता वा नास्ति। सकलदोषनाशकस्य भगवतः विष्णोः, देवदत्तस्य अन्तरङ्गे सान्निध्यरूपः हेतुः विशेषरूपः, दोषाणां स्थानालाभस्य विशेषरूपस्य प्रकृतार्थस्य समर्थकः इत्यतः सामान्यविशेषभाव-अनालिङ्गितत्वं हेतोः। एवं काव्यलिङ्गलक्षणसमन्वयः।

उदाहरणान्तरम्

विनिन्द्यान्युन्मत्तैरपि च परिहार्याणि पतितैः
अवाच्यानि व्रात्यैः सपुलकमपास्यानि पिशुनैः।
हरन्ती लोकानामनवरतमेनांसि कियतां

कदाप्यश्रान्ता त्वं जगति पुनरेका विजयसे॥

जगन्नाथः इत्थं गङ्गां स्तौति। हे मातः! उन्मत्तैरपि विनिन्द्यानि, पतितैरपि त्याज्यानि, व्रात्यैः - संस्कारहीनैरपि अकीर्तनीयानि, पिशुनैरपि दूरीकरणीयानि अनेकलोकानां पापानि सततं हरन्ती – नाशयन्ती, पुनः कदापि न श्रान्ता त्वं जगति अद्वितीया सती, विजयसे- सर्वोत्कर्षेण वर्तसे इति तदर्थः।

अत्र 'त्वं जगति पुनरेका विजयसे' इति भगवत्या भागीरथ्या सर्वोत्कृष्टत्वं प्रतिपादितम्। तत् आपाततः न घटते इति, तदुपपादनाय 'निरन्तरसर्वपापहरणेनापि श्रमाभावः' इति हेतुः निर्दिष्टः। एवञ्च भागीरथ्या सर्वोत्कृष्टत्वम् इति प्रकृतः अर्थः निरन्तरपापहरणेनापि श्रमाभावरूपेण अर्थेन उपपादितः ।

**काव्यलिङ्गस्य भेदाः**

सुबन्तार्थरूपं तिङन्तार्थरूपञ्चेति प्रथमं काव्यलिङ्गं द्विविधम्। सुबन्तार्थरूपं शब्दान्तरार्थविशेषितशरीरं शुद्धैकसुबन्तार्थरूपञ्चेति पुनः द्विविधम्। तत्र शब्दान्तरार्थविशेषितशरीरं - साक्षात् परम्परया वा वाक्यार्थविशेषितम्, सुबन्तार्थमात्रविशेषितञ्चेति पुनः द्विविधम्। तिङन्तार्थरूपमपि साक्षात् परम्परया वा वाक्यार्थविशेषितम्, सुबन्तार्थमात्रविशेषितञ्चेति द्विविधम्। तिङन्तार्थभेदे शुद्धभेदः न सम्भवतीत्यतः शुद्धैकसुबन्तार्थरूपेण सह साकल्येन पञ्चविधं काव्यलिङ्गम्।

1) साक्षात् परम्परया वा शब्दान्तरार्थविशेषितशरीरं सुबन्तार्थरूपम्।

2) शुद्धैकसुबन्तार्थरूपम्।

3) सुबन्तार्थमात्रविशेषितं सुबन्तार्थरूपम्।

4) साक्षात् परम्परया वा शब्दान्तरार्थविशेषितं तिङन्तार्थरूपम्।

5) सुबन्तार्थमात्रविशेषितं तिङन्तार्थरूपम्। इति।


ISSN: 2320-740X

'भो दोषाः' इत्यत्र अघकूलङ्कषो वसति इति सुबन्तार्थमात्रविशेषितं तिङन्तार्थरूपं काव्यलिङ्गम्। 'विनिन्द्यान्युन्मत्तैरपि च परिहार्याणि पतितैः' इत्यत्र तु सुबन्तार्थमात्रविशेषितं सुबन्तार्थरूपं काव्यलिङ्गम्। एवमन्येऽपि भेदाः सम्भवन्ति। प्राचीनैः पदार्थहेतुकवाक्यार्थहेतुकभेदेन काव्यलिङ्गं द्विधोक्तम्।

**अर्थान्तरन्यासात् काव्यलिङ्गालङ्कारस्य वैलक्षण्यम्**

ननु काव्यलिङ्गे अर्थान्तरन्यासे च समर्थ्यसमर्थकभावः समानः। एकः अर्थः समर्थकः अपरश्च समर्थ्यो भवति । अतः अर्थान्तरन्यासात् काव्यलिङ्गं न भिद्यते इति। तत्र अर्थान्तरन्यासस्य लक्षणम् उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः। सामान्यविशेषयोरुक्तिः अर्थान्तरन्यासः इति। अत्र सामान्यः कश्चिदर्थः कश्चिच्च विशेषार्थः। तयोरेकः प्रस्तुतः अपरश्च अप्रस्तुतः । प्रस्तुतस्य सामान्यस्य अप्रस्तुतेन विशेषेण, प्रस्तुतस्य विशेषस्य अप्रस्तुतेन सामान्येन, एवमेव प्रकारान्तरेण समर्थनम् अर्थान्तरन्यासः।

हनुमानब्धिमतरत् दुष्करं किं महात्मनाम् इति उदाहरणम्। अत्र हनुमतः अब्धितरणं प्रस्तुतः विशेषार्थः महात्मनामसाध्यं न किमपीति अप्रस्तुतेन सामान्येन समर्थ्यते इत्यतः अर्थान्तरन्यासः।

**अत्र शङ्का**- अयं काव्यलिङ्गाद् न अतिरिच्यते। तथा हि प्रस्तुतस्य विशेषस्य अथवा सामान्यस्य अप्रस्तुतेन सामान्येन विशेषेण वा समर्थनं, अप्रस्तुतस्य विशेषस्य अथवा सामान्यस्य प्रस्तुतेन विशेषेण वा सामान्येन वा समर्थनम् इति यदुच्यते तत्र प्रस्तुताप्रस्तुतभावः कीदृशः? प्रस्तुताप्रस्तुतभावे निर्णीते एव वैलक्षण्यं अस्तिव नवेति विचारः कर्तुं शक्यते।

अप्रस्तुतप्रशंसायामिव इति तु वक्तुं न शक्यते। अप्रस्तुतप्रशंसायां तु अप्रस्तुतः प्रस्तुतस्य व्यञ्जको भवति। अपस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया। एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते। अत्र अप्रस्तुतात् शकुन्तवृत्तान्तात् प्रस्तुतस्य वरयाचकवृत्तान्तस्य व्यञ्जनं भवति। अर्थान्तरन्यासे तु द्वयोरपि वृत्तान्तयोः वाच्यत्वम्। किञ्च प्रस्तुतस्य समर्थकतया एव अप्रस्तुतस्य उपादानम्। अतः अप्रस्तुतप्रशंसायामिव अत्र प्रस्तुताप्रस्तुतभावः इति वक्तुं न शक्यते।

**केचित्पक्षस्य समाधानम्** – समर्थनसापेक्षस्य अर्थस्य समर्थने काव्यलिङम् निरपेक्षस्यापि प्रतीतिवैभवात् समर्थने अर्थान्तरन्यासः इति केचिदभिप्रयन्ति ।

किन्तु इदमपि समाधानं न भवति। यतो हि अर्थान्तरन्यासेऽपि सामान्यस्य विशेषेण समर्थनम् अपेक्ष्यते एव। यथा बहूनामप्यसाराणां संयोगः कार्यसाधकः। इति सामान्यस्य तृणैरारभ्यते रज्जुस्तया नागोऽपि बध्यते इति विशेषस्य कथनं विना बुद्धौ प्रतिष्ठितत्वमेव न भवति। किञ्च काव्यलिङ्गेऽपि अर्थः नियमेन समर्थनसापेक्षः इति नास्ति।

समर्थननिरपेक्षस्यापि समर्थनं दृश्यते। यथा

न विषेण न शस्त्रेण नाग्निना न च मृत्युना।
अप्रतीकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः॥

इत्यत्र समर्थनसापेक्षत्वं न वर्तते। स्त्रीणां विषादिना अनिर्मितत्वम् प्रसिद्धमित्यतः समर्थनं नापेक्ष्यते। तथापि स्त्रीभिरेव स्त्रियः कृताः इति तत् समर्थितम् । अतः समर्थनसापेक्षस्य अर्थस्य समर्थने काव्यलिङम् निरपेक्षस्यापि प्रतीतिवैभवात् समर्थने अर्थान्तरन्यासः इति समाधानं न भवति। तर्हि को भेदः अर्थान्तरन्यासकाव्यलिङ्गयोः इतिचेत् समर्थ्यसमर्थकयोः सामान्यविशेषभावसम्बन्धे अर्थान्तरन्यासः तदितरसम्बन्धे काव्यलिङ्गम् इत्येव विभागः समीचीनः।

**हेत्वलङ्कारात् काव्यलिङ्गस्य वैलक्षण्यम्**

हेतोर्हेतुमता सार्धं वर्णनम् हेतुरुच्यते। कारणस्य कार्येण सह वर्णनम् हेतुरिति। असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम्। चन्द्रोदयरूपकारणस्य सुभ्रूमानच्छेदरूपेण कार्येण सार्धं वर्णनात् हेत्वलङ्कारः। जितोऽसि मन्दकन्दर्प मच्चित्तेऽस्ति त्रिलोचनः इत्यादौ काव्यलिङ्गेऽपि कार्यकारणयोः निरूपणस्य तुल्यत्वात् अनयोरलङ्कारयोः वैलक्षण्यम् किम् इतिचेत् कारणस्य कार्येण सह प्रतिपादनम् अत्र हेत्वलङ्कारे भवति । किञ्च अत्र कारकहेतुः तत्र ज्ञापकहेतुः।


ISSN: 2320-740X

**अनुमानालङ्कारात् काव्यलिङ्गस्य वैलक्षण्यम्**

अनुमानस्य स्थलं भिन्नं काव्यलिङ्गस्य स्थलञ्च भिन्नम्। अनुमाने व्याप्तिविशिष्टपक्षधर्मताज्ञानम् अपरिहार्यम्। हेतुरनुमितिजन्यज्ञानसाधको भवति। हेतोः व्याप्तिविशिष्टत्वं पक्षधर्मताज्ञानञ्च अपेक्ष्यते। (हेतोः पक्षवृत्तित्वं पक्षधर्मता, तज्ज्ञानम् पक्षधर्मताज्ञानम्) पर्वतो वह्निमान् धूमात् इत्यत्र व्याप्तिपक्षधर्मताविशिष्टस्य धूमस्य पर्वते वह्नेः साधकतया हेतुत्वम्। तस्मात् अनुमितिकारणम् इति अनुमानालङ्कारस्य लक्षणम् उच्यते।

अनुमानालङ्कारस्य उदाहरणम्

निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः॥

अत्र पक्षिनिलीयमानत्वादिना सूर्यास्तगमनं साध्यते । 'अयं कालः सूर्यास्तङ्गमनवान् पक्षिनिलीयमानताद्याश्रयत्वात्।' इति अनुमानाकारः भवति। अत्र साध्यसाधनभाववत्तया काव्यार्थः प्रतिपन्न इत्यतः अस्य अलङ्कारत्वम् ।

एवं च व्याप्यत्वपक्षधर्मत्वाभ्यां ज्ञायमानम् अर्थसाधकं लिङ्गम् अनुमाने वर्तते। काव्यलिङ्गे तु स्वरूपेण ज्ञायमानं प्रकृतार्थोपपादकं लिङ्गमिति उभयोः भेदः स्फुटः।

- अर्थात् वह्निनिरूपितव्याप्तिविशिष्टतया पर्वतवृत्तित्वेन ज्ञायमानः धूमः पर्वते वह्नेः साधकः भवतीति अनुमानस्थलम्। (सूर्यास्तङ्गगमननिरूपितव्याप्तिविशिष्टतया कालवृत्तित्वेन ज्ञायमानं पक्षिनिलीयमानत्वादिकं काले सूर्यास्तङ्गमनसाधकम्)
- अर्थः केवलं स्वरूपेण- व्याप्यत्वपक्षधर्मत्वाभ्यां विना प्रकृतार्थोपपादकश्चेत् तत् काव्यलिङ्गमिति।

**पुनः शङ्कते-** ननु स्वरूपेण प्रकृतार्थोपपादको हेतुश्चेत् काव्यलिङ्गम् इत्युक्ते तेन काव्यलिङ्गस्य न वैलक्षण्यसिद्धिः। यतः उपपादकं नाम किम्? यस्य अर्थस्य ज्ञानेन प्रकृतार्थस्य निश्चयो भवति सः अर्थः

तमर्थं प्रति उपपादकः इत्युच्यते। तदेव खलु! प्रकृतार्थोपपादकं लिङ्गम्। इदञ्च उपपादकं युक्तिसत्त्वे एव भवति। युक्तिस्तु साध्याभाववद्वृत्तित्वरूपव्यभिचारज्ञाने पक्ष-अवृत्तित्वज्ञाने वा सति न तिष्ठति। युक्तिर्नास्ति चेत् उपपादकत्वमपि न सम्भवति। यथा उक्तकाव्यलिङ्गोदाहरणे 'कदाप्यश्रान्ता त्वं जगति पुनरेका विजयसे' इतिस्थले, 'यत्र यत्र अनवरतसकललोकपापहरणसमानाधिकरणः श्रमाभावः तत्र सर्वोत्कर्षः' इति व्याप्तिगृहीत-श्रमाभाव-उत्कर्षयोः अव्यभिचारज्ञानस्य, 'तादृशश्रमाभावो गङ्गावृत्तिः' इत्याकारकस्य पक्षवृत्तित्वज्ञानस्य च सत्त्वे एव तादृशश्रमाभावः गङ्गायां सर्वोत्कर्षस्य उपपादको भवति। अनयोः ज्ञानयोरसत्त्वे तु गङ्गायां सर्वोत्कर्षः न सिद्ध्यति। अतः, हेतोः सर्वत्र उपपाद्यस्य (साध्यस्य) अव्यभिचारज्ञाने एव उपपत्तिः भवति। अतः काव्यलिङ्गतया निगद्यमानः उपपत्तिर्वा समर्थनं वा भवतु, सः अनुमानात् अनतिरिक्त एव । तस्मात् काव्यलिङ्गम् अनुमानादभिन्नमेव इति पूर्वपक्षस्य आशयः।

**पुनः एवं न शङ्कनीयम्**- काव्यलिङ्गस्थ- समर्थनस्य उपपत्तेर्वा अनुमितिः इति नार्थः इति । यतो हि लिङ्गत्वेन अभिमतादर्थात् दृढज्ञानं भवति, गङायां सर्वोत्कर्षज्ञानं दृढज्ञानं- ज्ञानविशेषः। स च इन्द्रियसन्निकर्षाभावात् न प्रत्यक्षसिद्धः, न वा शाब्दः अनुमितिसामग्र्याः बलीयस्त्वात्। तद्बलवत्वादेव न मानसोऽपि। तस्मादपि कारणात् काव्यलिङ्गम् अनुमानमेव इति च तदाशयः (पूर्वपक्षस्याशयः)।

**सिद्धान्तः** सत्यम्। प्रकृतार्थोपपादकः अर्थः काव्यलिङ्गत्वेन अभिमतः। तेन जायमाना उपपत्तिः अनुमितिरेव। किन्तु काव्यानुमितेः विलक्षणत्वमस्ति। वस्तुतः काव्यलिङ्गे हेतुः कविकल्पितः भवति। अतः व्यभिचरितः एव भवति। कल्पनाप्रधानः खलु काव्यप्रपञ्चः! कथं तर्हि हेतुत्वेनाभिमतात् व्यभिचरिताद् अर्थात् साध्यस्य ज्ञानं भवति इति चेत् 'भो दोषाः युष्माभिर्वस्तुम्' 'कदाप्यश्रान्ता त्वं जगति पुनरेका विजयसे' इत्यादिकाव्यवाक्यश्रवणे सति तत्काले, हेतोः व्यभिचारस्फूर्तिः न भवति। अतः तदा व्यभिचारज्ञानं नास्तीति कृत्वा न दोषः । तथा व्यभिचार-अस्फूर्तौ कविप्रयुक्तत्वम् तन्मयीभवनं वा कारणम्। एवमेव अनुमानालङ्कारस्थलेऽपि। तर्हि उभयोरपि तदानीं व्यभिचारस्फूर्त्यभावः इति


ISSN: 2320-740X

समानयोगक्षेमकारणात् अनयोरुभयोः अन्यतरस्मिन् अन्यतरस्य अन्तर्भावः वक्तुं शक्यः खलु इति चेत् अत्र सूक्ष्मतरं विशेषमुररीकृत्य वैलक्षण्यम् उपपादनीयं भवति। एकं वैलक्षण्यं काव्यलिङ्गस्य अनुमानालङ्कारस्य च इदं भवति। अनुमानालङ्कारे श्रोतुः एतल्लिङ्गकानुमितिर्जायतां इति, कवेः अनुमितिबुबोधयिषा वर्तते। अर्थात् कवेः काव्यात्मकव्यापारस्य विषयीभूता या अनुमितिः तस्याः करणम् अनुमामानालङ्कारः। अत एव पञ्चम्यन्ततया तसिलन्ततया तृतीयान्ततया वा हेतोर्निर्देशः तेन कृतो भवति। यथा पूर्वोक्ते -निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः। विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः॥ इत्यस्मिन् श्लोके निलीयमानैः विहगैः इत्यादिः हेतुः तृतीयान्ततया निर्दिष्टः। काव्यलिङ्गे तु श्रोतुः काव्यलिङ्गज्ञानजन्य-अनुमितिबुबोधयिषिता कवेः न भवति। श्रोता अमुं पदार्थं हेतुत्वेन जानातु इति इच्छा कवेः न भवतीत्यर्थः। अत एव तत्र हेतुत्वस्य निर्देशः कविना न क्रियते। श्रोता स्वयमनुमितिज्ञानं प्राप्नोति । यथा 'जितोऽसि मन्दकन्दर्प मच्चित्तेऽस्ति त्रिलोचनः' इत्यत्र भो दोषा युष्माभिर्वस्तुं स्थानान्तराणि मृग्यन्ताम् । लभ्योऽत्र नावकाशो मय्यघकूलंकषो वसति कश्चित्' ॥ इत्यत्र वा पञ्चम्यादिना हेतोः निर्देशः नास्ति। अतः अत्र हेतुः कवेः काव्यात्मकव्यापारविषयीभूतः न । श्रोता कारणज्ञानस्य सहकारेण स्वयमेव तादृशानुमितिं करोति इति काव्यलिङ्गम्। एवञ्च काव्यलिङ्गस्य 'अनुमितिकारणत्वेन सामान्यविशेषभावाभ्याञ्च अनालिङ्गितः प्रकृतार्थोपपादकत्वेन विवक्षितोऽर्थः' इति लक्षणे अनुमितिकारणत्वेन अनालिङ्गितः इत्युक्तं सङ्गच्छते। एवम् एकं वैलक्षण्यम् ।

**अन्यच्च वैलक्षण्यं** - कविना निबद्धः अनुमितिकर्ता चेत् तत्र अनुमितिः अनुमानालङ्कारप्रयोजिका, अनुमितिः श्रोतृनिष्ठा चेत् काव्यलिङ्गम् इति। तथा च उक्तस्थले निलीयमानविहगादिहेतुना सूर्यास्तगमनम् अनुमिनोति देवदत्तः अनुमाने। त्रिलोचनवृत्तित्वहेतुना कन्दर्पपराजयरूपं अर्थम् अनुमिनोति श्रोता-सहृदयः काव्यलिङ्गे ।

अन्यदपि वैलक्षण्यं काव्यलिङ्गे समर्थकहेतुः अनुमाने ज्ञापकहेतुः इत्यपि वदन्ति।

**काव्यलिङ्गालङ्कारस्य दोषाभावरूपताविचारः**

अत्र वदन्ति इति उक्त्वा रसगङ्गाधरकारः काव्यलिङ्गस्य अनलङ्कारत्वपक्षम् उपास्थापयत्। तस्य अयमभिप्रायः 'काव्यलिङ्गं नालङ्कारः, कविप्रतिभानिर्मितत्वप्रयुक्तचमत्कारविशेषात्मकविच्छित्तिविरहात् हेतुहेतुमद्भावस्य लोकसिद्धत्वात्, श्लेषादिसंमिश्रणजन्यस्तु चमत्कारः श्लेषप्रयुक्तत्वात्तदंशस्यैवालङ्कारतां कल्पयति न तु काव्यलिङ्गस्य । तत्प्रयोज्यकचमत्कारान्तरविरहात्' इति ।

**अत्र समाधानम्** - अलङ्कारमणिहारे उक्तम् 'नेदं युक्तं, लौकिकत्वेऽपि कविप्रतिभामात्रगम्यतया चमत्काराधायकत्वात् 'इमं तं मामम्ब त्वमथ करुणाक्रान्तहृदये पुनाना सर्वेषामघमथनदर्पं दलयसि' इत्यादौ काव्यलिङ्गस्थले हेतुहेतुमद्भावस्य लोकसिद्धत्वाभावाच्च । न हि 'सुखालोकोच्छेदिनि मोक्षनामनि महामोहे' इत्यादौ सुखालोकोच्छेदादीनां महामोहतादात्म्यादिहेतुत्वं क्वचित्सिद्धम् । किंच एवमप्युपमादेरप्यलंकारता न स्यात् । सादृश्यस्य वास्तवत्वेन कविप्रतिभाकल्पितत्वविरहात् । न च तत्राप्युपमाप्रयोजकसाधारणधर्माभेदांशे तत्कल्पितत्वमेवेति वाच्यं, रमणीयत्वादिनिमित्तधर्मस्यापि लोकप्रसिद्धत्वात् चमत्कारस्य लौकिकस्याप्यलंकारत्वे बाधकाभावात् । अन्यथा सर्वालंकारोच्छेदापत्तेश्च' इति ॥

काव्यलिङ्गस्य दोषाभावरूपता उद्भाविता

गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते॥


ISSN: 2320-740X

अत्र विमोक्ष्ये शस्त्र! त्वामहमपि इति शस्त्रमोचने हेतुः नोक्तः इति निर्हेतुत्वदोषः भवति। जितोऽसि मन्दकन्दर्प इत्यत्र तु हेतुरुक्तः इत्यतः निर्हेतुत्वं न वर्तते। नाम दोषाभावः वर्तते। अतः काव्यलिङ्गस्य दोषाभावरूपता। 'निर्हेतुरूपदोषाभावः काव्यलिङ्गम् इत्यपि वदन्ति' इति रसगङ्गाधरे काव्यलिङ्गप्रकरणस्य अन्ते उक्तम् । इत्थम् काव्यलिङ्गम् रसगङ्गाधरकुवलयानन्दादिग्रन्थदिशा निरूपितम् ।

**********

## ध्वनिलक्षणे महिमभट्टेनोद्घाटिताः दश दोषाः

**डा. चन्द्रकला कोण्डि**

सहाचार्या, साहित्यविभागः

यद्यपि काव्यशास्त्रे षट् प्रस्थानानि सन्ति, तथापि रसस्य काव्यात्मस्थानं सुप्रतिष्ठितं प्रश्नातीतं च वर्तत इति तु सर्वाङ्गीकृतो विचारः । यतः काव्यस्य सकलप्रयोजनमौलिभूतं प्रयोजनं विगलितवेद्यान्तरानन्दरूपं रसास्वादसमुद्भूतमेव भवति, न तु वक्रोक्त्यादिसमुद्भूतम्। किन्तु तादृशं प्रयोजनं कथं निर्वर्तयति रस इत्यस्मिन् विषये विवदन्ति आलङ्कारिकाः। विभावानुभावव्यभिचारिणां संयोगात् सहृदयहृदये 'उत्पद्यते' रस इति केचन, 'अनुमीयते' इत्यन्ये, 'भुज्यते' इत्यपरे, 'अभिव्यज्यते' इति बहवश्चाभिप्रयन्ति। एतान्येव मतानि क्रमात् उत्पत्तिवादः, अनुमितिवादः, भुक्तिवादः अभिव्यक्तिवादश्चेति नाम्ना प्रथितानि सन्ति साहित्यशास्त्रे । एतेषां मतानां प्रवर्तकाः क्रमात् भट्टलोल्लटः, श्रीशङ्कुकः, भट्टनायकः अभिनवगुप्तपादाश्च। एतदतिरिक्ततयाऽपि अनेकानि मतानि सन्ति यद्यपि, तथापि एतानि चत्वारि मतानि विद्वत्सु बहुधा चर्चाविषयीकृतानि। अन्तिमरूपेण अभिनवगुप्तपादैः प्रतिपादितोऽभिव्यक्तिवाद एव समादृतः बाहुल्येन ।

उपर्युक्तेषु चतुर्षु मतेषु अनुमितिवादः विशिष्यते । यतः बाहुल्येनाङ्गीकृतोऽभिव्यक्तिवादः उत्पत्तिवादिना भुक्तिवादिना वा न सप्रमाणं खण्डितः, न वा स्वसिद्धान्तः सप्रमाणमुपस्थापितः, न वा ग्रन्थरूपेण स सिद्धान्तः विदुषां पुरत उपन्यस्तः । किन्त्वनुमितिवादः महिमभट्टनामकेन विदुषा "व्यक्तिविवेक" नामके ग्रन्थे, अभिव्यक्तिवादस्य मूलतत्त्वानि-ध्वनिः, व्यङ्ग्यः, व्यञ्जकः, व्यञ्जनाव्यापारः इत्यादीनि-सप्रमाणं खण्डयित्वा, तदनन्तरं "रसोऽनुमीयते" इत्येष सिद्धान्त उप-स्थापितः सप्रमाणम् ।

अनुमानेन रसास्वादः भवतीत्येष सिद्धान्तः काव्यशास्त्रिभिरत्यन्तमेवानादृतः । यदि वह्निधूमयोरिव शब्दार्थयोरपि साध्यसाधनभावोऽङ्गीक्रियते तर्हि तद्वदिदमपि नीरसं भवेत्, विगलितवेद्यान्तरानन्दरूपं परमप्रयोजनं काव्यस्य निर्वर्तितं न स्यात्। धूमाद् वह्निसाधने को वा रसास्वादः? यद्यपि शब्दः वाच्यार्थो वा साधनीयस्यार्थान्तरस्य साधनं भवतीति शब्दार्थयोरपि साध्यसाधनभावः बाह्यरूपेण वक्तुं शक्यते, तथापि तावतैव तस्य (साध्यसाधनभावस्य) काव्यानन्ददायकत्वं न सिद्ध्यति । काव्यगतः शब्दार्थयोः साध्यसाधनभावः विभावानुभावव्यभिचारिसंयोगविशेषेण लौकिकं स्तरमतिक्रम्य सहृदयहृदये परमानन्दस्य स्रोतं निर्माति । तदा तस्य स्वरूपं धूमाग्न्योः, शब्द-वाच्यार्थयोः साध्यसाधनभावम् अतिक्रम्य तिष्ठति । तादृश्यां स्थितौ स साध्यसाधनभावः अन्यदेव स्वरूपं प्राप्नोति । तदा लौकिकसाध्यसाधनभावेन तस्य समानतां वक्तुं न शक्यते । तदेव स्वरूपं लौकिकसाध्यसाधनभावाद्भिन्नं व्यङ्ग्यव्यञ्जकभाव इत्युक्तमानन्दवर्धनाचार्येण । एवं लौकिकः साध्यसाधनभावः काव्ये विभावादिभिः संयुक्तः सन् सहृदयानां हृदये परमानन्दं प्रवाहयन् व्यङ्ग्यव्यञ्जकभावनाम्ना अलौकिकतां प्राप्नोति । अत एव तार्किकरीत्या प्रतिपाद्यमानः साध्यसाधनभावः काव्ये नाङ्गीक्रियते विद्वद्भिः ।


ISSN: 2320-740X

तथापि व्यङ्ग्यव्यञ्जकभावं खण्डयित्वा साध्यसाधनभावस्यैव प्रतिष्ठापनार्थं महिमभट्टेन आनन्दवर्धनाचार्योक्ते ध्वनिलक्षणे प्राधान्येन दश दोषा उद्घाटिताः । आचार्यानन्दवर्धनोक्तं ध्वनिलक्षणमेवमस्ति-

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।**

**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥** [1]

इति । अर्थः उपसर्जनीकृतस्वः, शब्दश्च उपसर्जनीकृतस्वार्थः । एवं सन्तौ उभावपि काव्यविशेषभूतमन्यमर्थं व्यङ्क्तः । स एव ध्वनिः इति विद्वद्भिः कथितः इति अस्यार्थः । अत्र दश दोषाः एवमुक्ताः महिमभट्टेन-

**अर्थस्य विशिष्टत्वं शब्दस्सविशेषणस्तदः पुंस्त्वम् ।**

**द्विवचनवाशब्दौ च व्यक्तिर्ध्वनिर्नाम, काव्यवैशिष्ट्यम् ॥**

**वचनश्च कथनकर्तुः कथिता ध्वनिलक्ष्मणीति दश दोषाः ।**

**ये त्वन्ये तद्भेदप्रभेदलक्षणगता न ते गणिताः ॥** [2]

इति । तेषु,

**१. अर्थस्य विशिष्टत्वम् (अर्थस्य 'उपसर्जनीकृतत्व'विशेषणम्)**

ध्वनिकाव्ये वाच्यार्थापेक्षया व्यङ्ग्यार्थस्यैव सर्वात्मनाऽपि प्राधान्यम् । तं रमणीयं चमत्कारकञ्च व्यङ्ग्यार्थम् अभिव्यञ्जयितुं शब्द-वाच्यार्थौ आत्मानौ गुणीकुरुतः इत्युक्तम् आनन्दवर्धनाचार्येण । तत्र अर्थस्य अर्थान्तरं प्रति गुणीभावः ध्वनिलक्षणे न वक्तव्यः इति महिमभट्टः । यतः अव्यभिचरितस्य वचनेन किं प्रयोजनम्? यत्र अर्थान्तरमेव मुख्यतया प्रतिपाद्यम्, तत्र वाच्यार्थः अव्यभिचरितत्वेन उपसर्जनत्वं

[1] ध्वन्यालोके प्रथमोद्योते ।

[2] व्यक्तिविवेके प्रथमविमर्शे ।

प्राप्नोत्येव। कदापि प्रतिपाद्यं तमर्थं (अर्थान्तरं) गुणीकृत्य स्वयं प्राधान्यं न प्राप्नोति । एवं सति तस्य उपसर्जनत्ववचनं न वक्तव्यम् ।

**ध्वनिवादिनः**- समासोक्त्यादौ वाच्यार्थः अर्थान्तरं प्रति आत्मानं न गुणीकरोति । अर्थान्तरापेक्षया स्वयमेव प्राधान्यं प्राप्नोति । अतः तत्र 'अर्थान्तरं प्रति वाच्यार्थः सर्वत्र स्वात्मानं गुणीकरोती'त्यस्य नियमस्य व्यभिचारः खलु ?

**महिमभट्टः**- तत्र अर्थान्तरं प्रति वाच्यार्थस्य प्राधान्यम् अर्थान्तरमुद्दिश्य न, किन्तु प्राकरणिकत्वादेव। वक्त्रा प्रधानतया प्रतिपिपादयिषितं प्रतीयमानार्थं प्रत्येव वाच्यार्थस्य अव्यभिचरितत्वेन उपसर्जनत्वम् । समासोक्त्यादौ आरोप्यमाणव्यवहाररूपेऽर्थान्तरे(प्रतीयमाने) न विवक्षा वक्तुः। अतः सः प्रतीयमानस्तत्र प्राधान्येन प्रतिपाद्यो न । 'उपोढरागेण ---' इत्यादौ पद्ये निशा-शशिनोः निसर्गसिद्धघटनायां नायिकानायकव्यवहारसमारोपो वर्तते। निशाशशिनोरेव वृत्तान्तोऽत्र वर्ण्यविषयः, न तु नायिकानायकव्यवहारः प्रतिपाद्यः । अतः प्राकरणिकत्वं वाच्यार्थस्येति तस्य प्राधान्यम् । अतः न व्यभिचारः ।

**ध्वनिवादिनः**- तथापि एतादृशस्थले कथञ्चिदपि वाच्यार्थस्य प्राधान्यं तु अस्त्येव खलु? तदर्थमेवास्माभिः तत्र ध्वनिलक्षणस्य व्यभिचारवारणाय अर्थस्योपसर्जनीकृतत्वमुक्तम् ।

**महिमभट्टः**- अस्तु तर्हि । तथा व्यभिचारनिवारणेऽपि वैयर्थ्यरूपदोषः वर्तत एव । यतः चारुत्वातिशयः वाच्यार्थस्य उपसर्जनीकरणेनैव भवतीति नास्ति नियमः । गुणीभूतव्यङ्ग्येऽपि चारुत्वमस्ति। भवद्भिरेव ध्वन्यालोके गुणीभूत-व्यङ्ग्यकाव्यं बहुधा प्रशंसितं वर्तते । तस्मिन् काव्ये चारुत्वं न वाच्यार्थगुणीभावजम् । तर्हि भवद्भिः दत्तं 'वाच्यार्थस्य गुणीभाव'रूपं विशेषणं व्यर्थमेव ।

अपि च 'सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' अर्थात् सम्भवव्यभिचाराभ्यां विशेष्यविशेषणभावः सार्थको भवति । न केवलं तयोः द्वयोरप्यभावे, किन्तु अन्यतरस्याभावेऽपि सः न

 ISSN: 2320-740X

भवति । अत्र अर्थान्तरं प्रति वाच्यस्यार्थस्य गुणीकृतत्वस्य सम्भव एव वर्तते, किन्तु तस्य व्यभिचारः नास्ति। अतः अर्थ-उपसर्जनीकृतत्वयोः विशेषणविशेष्यभावः न भवत्येव । तेन तद्विशेषणं न देयम् ।

२. **शब्दः**

ध्वनिलक्षणे 'शब्द' इति न वक्तव्यम् । यत्र शब्दः स्वस्य सङ्केतितार्थमप्रधानीकृत्य रमणीयं व्यङ्ग्यार्थं व्यञ्जनाव्यापारेण व्यञ्जयति तत्र ध्वनिरिति आनन्दवर्धनाचार्यमतम् । किन्तु महिमभट्टस्य मते त्रिभिः हेतुभिः 'शब्द'स्य निवेशः नोचितः । तदेवम्-

अ) शब्दस्य अभिधा एकैव व्यापारः

स्वस्य सङ्केतितार्थस्य अभिधानं विना शब्दस्य अन्यत्कार्यमेव नास्ति । शब्दस्य 'अभिधा' एक एव व्यापार इति तस्य सदापि वाचकत्वमेव, अतः तस्य व्यञ्जकत्वं न सम्भवति । । अतः व्यञ्जनया व्यञ्जयतीत्येतन्नैव सङ्गच्छते । लक्षणा-व्यञ्जने अर्थस्य वृत्ती, न तु शब्दस्य । अतः अर्थान्तरव्यञ्जने शब्दस्य न किमपि पात्रम्।

आ) यदि शब्दः लक्षणे निविश्यते तर्हि अभिधाऽपि निवेशनीया, यद्यभिधा न निवेश्यते तर्हि शब्दस्यापि निवेशः मास्तु, अर्थस्य निवेशेन अलम् ।

'शब्द'स्य निवेशे, 'अभिधा'या अपि निवेशः करणीय एव । अन्यथा दीपकालङ्कारे उपमाध्वनिः अङ्गीकर्तुं न शक्यते। तत्र प्रस्तुताप्रस्तुतानाम् एकधर्मान्वयात् सादृश्यं प्रतीयत इति उपमाध्वनिः, स च अभिधाया माहात्म्यादेव । तत्र प्रस्तुताप्रस्तुतानामेकधर्मान्वय एव वक्तुरिष्टः, नोपमाध्वनिरिति वक्तुं न शक्यम्, उपमाध्वनिविवक्षयैव वक्त्रा दीपकालङ्कारप्रयोगः क्रियत इति हेतोः । वाच्यापेक्षया प्रतीयमानस्यैव रमणीयतरत्वात्, ध्वनिव्यवहारस्य प्रतीयमानस्यैव हेतुत्वाच्च दीपकालङ्कारे उपमाध्वनेः प्रतिषेध एव न सिद्ध्यति । एतत्सर्वमभिधाया माहात्म्यादिति ध्वनिलक्षणे अभिधाया अपि निवेश आवश्यक एव ।

इ) अभिधां विहाय अन्ये व्यापारा अर्थस्यैव सम्भवन्ति, न तु शब्दस्य । अतः अर्थान्तरव्यञ्जकत्वम् अर्थस्यैव इति, 'यत्र अर्थः स्वम् उपसर्जनं कृत्वा अर्थान्तरं व्यञ्जयति तत्र ध्वनिः' इत्यनेन अलम् ।

अभिधाया निवेशः नावश्यक इति ध्वनिवादिनः एवं प्रतिपादयेयुः-शब्दश्रवणसमनन्तरमर्थप्रतीतेः कारणम् अभिधैव । अतः अभिधाया अनङ्गीकारेऽर्थप्रतीतिरेव न भवतीति अन्यथाऽनुपपत्त्या एव अभिधा तत्रावगम्यते । शब्दार्थयोः उपसर्जनीकृतस्वार्थत्वविशेषणस्य सामर्थ्यादेव अभिधाया उपसर्जनत्वं वेद्यते । यतोऽभिधायाः प्राधान्ये शब्दार्थयोरुपसर्जनभावः न भवत्येव । तेन ध्वनिलक्षणेऽभिधाया निवेशो नावश्यक इति ।

तदेवं निराकरोति महिमभट्टः-भवदुक्तन्यायेनैव अर्थात् 'शब्दार्थयोरुपसर्जनत्ववचनेनैव अभिधाया उपसर्जनत्वं सिद्ध्यती'त्यनेनैव न्यायेन शब्दनिवेशस्यापि वैयर्थ्यं वक्तुं शक्यते-'अर्थस्य उपसर्जनत्ववचनेनैव शब्दस्याप्युपसर्जनत्वं सिद्ध्यति, तस्य निवेशस्यावश्यकता नास्ती'ति ।

उक्तं वृथैव शब्दस्योपादानं लक्षणे ध्वनेः ।
न हि तच्छक्तिमूलेष्टा काचिदर्थान्तरे गतिः ॥ [1]

ध्वनिलक्षणे 'शब्द'पदं व्यर्थमेव । यतः अनुमेयार्थः वाच्यार्थेन तदनुमितार्थेन वा प्रकाश्यते । अर्थादर्थशक्तिमूलतयैव तस्य प्रकाशः, न तु शब्दशक्तिस्तत्र कारणम् । अतः शब्दशक्तिमूलत्वेन अर्थान्तरस्यावगतिः न भवति ।

### ३. शब्दस्य 'उपसर्जनीकृतत्व'विशेषणम्

ध्वनिलक्षणे शब्दस्य 'उपसर्जनीकृतस्वार्थत्व'विशेषणं दत्तम्। तन्न देयम्। यतः शब्दार्थयोर्मध्ये अर्थस्य साध्यत्वम्, शब्दस्य च साधनत्वम् । तेन शब्दादपि अर्थस्य प्राधान्यं वर्तत एव । कदापि सः (शब्दः)

[1] व्यक्तिविवेके प्रथमविमर्शे ।


ISSN: 2320-740X

स्वस्यार्थमप्रधानीकृत्य स्वयं प्रधानः न भवति, साधनभूता घटाः साध्यभूतानि जलादीनि यथा न अप्रधानीकुर्वन्ति तथा । केवलमनुकरणस्थल एव अर्थापेक्षया शब्दस्य प्राधान्यम्, अन्यत्र सर्वत्रापि शब्दस्य अर्थं प्रत्युपसर्जनीभावः अव्यभिचरित एव ।

'सम्भव-व्यभिचाराभ्याम् स्याद्विशेषणमर्थवत्' इति न्यायः । तदनुसारम् 'अर्थं प्रति शब्दस्य प्राधान्य'स्य सम्भवाभावात्, 'अर्थं प्रति शब्दस्य उपसर्जनीकृतत्व'स्य व्यभिचाराभावाच्च, उभयरीत्यापि तद्विशेषणं व्यर्थम् । अनेन ध्वनिलक्षणेऽसम्भवदोषः सञ्जातः ।

यदि असम्भवात् व्यभिचाराभावाच्च लक्षणं दुष्टमिति वक्तुं न शक्यते इति वदेम चेदपि पुनरुक्तिर्दोषः । अर्थान्तराभिव्यञ्जनार्थमुपयुज्यमानयोः शब्दार्थयोः उपसर्जनीकृतत्वस्यानिवार्यतया वाचकानां(सहृदयानां) तत् स्वयं वेद्यम्। अनुक्तमपि यद्वेद्यते तस्य वचनं 'पुनरुक्त'दोषग्रस्तमेव । ध्वनेः स्वरूपावगमनार्थं तद्विशेषणं दत्तमित्यपि वक्तुं न शक्यते, स्वरूपज्ञानार्थं कृतस्य अनुवादस्यापि पुनरुक्तिप्रकारत्वात् ।

**४. तदः पुंस्त्वम्**

ध्वनिलक्षणे 'तम् अर्थम्' इत्यत्र तच्छब्दस्य पुल्लिङ्गनिर्देशः असाधु । यतः तच्छब्दः अनन्तरप्रक्रान्तार्थम् अर्थान्निकटपूर्वमर्थं परामृशति । तादृशः पुल्लिङ्गनिर्दिष्टः कोऽप्यर्थः निकटपूर्वतया न प्रतिपादितः, परन्तु नपुंसकलिङ्गेनैव-'प्रतीयमानं पुनरन्यदेव', 'सरस्वती स्वादु तदर्थवस्तु' इत्यादिना । अतः 'प्रतीयमानः पुनरन्य एव, सरस्वतीस्वादुतमं तमर्थम्'-इति यदि समीक्रियते तर्हि दोषो न स्यात् । 'प्रतीयमान' इत्यादेः पूर्वमुक्तत्वात्तत्रैव समीकरणीयम् । तेन प्रक्रमभेददोषस्यापि परिहारः भवति । तथा अकृत्वा यदि ध्वनिलक्षणे तच्छब्दस्य नपुंसकलिङ्गप्रयोगः क्रियते तर्हि पुंस्त्वनिर्देशस्य दोष एव परिह्रियते, प्रक्रमभेददोषस्तथैव तिष्ठति ।

**५. 'वा' शब्दः**

ध्वनिलक्षणप्रयुक्तस्य 'वा' शब्दस्य विकल्पार्थ उत समुच्चयार्थ इति प्रश्नः । अर्थद्वयमपि अत्र न सङ्गच्छत इति व्यक्तिविवेककारः ।

अ) विकल्पार्थे स्वीकृते, 'यत्र शब्दः अर्थो वा (अन्यतरः) स्वमुपसर्जनीकृत्य तम् अर्थं व्यनक्ति तत्र ध्वनि'रिति तात्पर्यं भवति । तदा यत्र शब्दार्थावुभावपि गुणीकृतात्मानौ सन्तौ तमर्थं व्यङ्क्तः तत्र ध्वनिर्नास्तीति वक्तव्यम् आपतति । किन्तु तादृशस्थलेऽपि ध्वनिरङ्गीकृत एव । अपि च तदा 'व्यङ्क्तः' इति द्विवचनप्रयोगोऽसाधु भवति ।

आ) समुच्चयार्थोऽपि स्वीकर्तुं न शक्यते शब्दार्थयोः समुच्चयाभावात् । तथापि 'अव्ययानामनेकार्थत्वम्' इति न्यायात् समुच्चयार्थे स्वीकृते, 'यत्र शब्दार्थावुभावपि स्वात्मानौ गुणीकृत्य तमर्थं व्यङ्क्तः तत्र ध्वनि'रिति ध्वनिलक्षणस्य तात्पर्यं पर्यवस्यति। तदा यत्र शब्दार्थयोरन्यतर एव व्यञ्जकः, तत्र ध्वनिरङ्गीकर्तुं न शक्यते । तेन शब्दशक्तिमूलध्वनिः, अर्थशक्तिमूलध्वनिरिति च ध्वनिविभागः न सङ्गच्छते ।

**६. 'व्यङ्क्तः' इति द्विवचनप्रयोगः**

'वा' शब्दस्य सामान्यतया विकल्पार्थ एव भवति । 'चैत्रः मैत्रो वा गच्छती'त्यत्र 'गच्छतः' इति प्रयोगः असाधु । तथैव 'अर्थः शब्दो वा' इत्युक्तत्वात् ध्वनिलक्षणे, 'व्यनक्ती'ति एकवचनप्रयोग एव करणीय आसीत् । अथवा 'शब्दार्थौ व्यङ्क्तः' इति वक्तव्यम् । अतः ध्वनिलक्षणे 'व्यङ्क्तः' इति द्विवचनप्रयोगोऽसाधुरेव महिमभट्टमते ।

**७. व्यक्तिः**

'व्यङ्क्तः' इत्यस्य 'व्यञ्जनाव्यापारेण अवगमयतः' इत्यर्थः । अर्थात् शब्दार्थयोः व्यञ्जकत्वम् । किन्तु शब्दस्य अभिधा एकैव व्यापारः । अतः तस्य व्यञ्जकत्वं न सम्भवति । अर्थस्य लिङ्गत्वमेव सङ्गच्छते, न तु व्यञ्जकत्वम् । "सतोऽसत एव वाऽर्थस्य प्रकाशमानस्य सम्बन्धस्मरणानपेक्षिणा प्रकाशकेन सहैव


ISSN: 2320-740X

प्रकाशविषयतापत्तिः" इति महिमभट्टोक्तम् अभिव्यक्तिलक्षणं वाच्य-प्रतीयमानयोर्न समन्वेतीति तयोर्व्यङ्ग्यव्यञ्जकभावो नास्ति । अतः 'व्यक्तिः' इति यदुच्यते तत्त्वसमीचीनमेव ।

**८. ध्वनिरिति नाम**

ध्वनेः काव्यसामान्यत्वात्, काव्यविशेषस्यानुपपत्तेः, 'ध्वनिः','ध्वनिः' इति संज्ञया किमपि साधितं न भवति। यदुक्तमन्यैरालङ्कारिकैः तदेवोक्तमानन्दवर्धनेन 'ध्वनि'रिति नाम्ना । यदि ध्वनिर्नाम किमपि अस्तीति सिद्धं चेदपि तत्तु न वक्तव्यम्, विशेषलक्षणादेव तदवगतेः । अतः 'ध्वनि'रिति नाम्ना अवाच्यवचनदोषः भवति ।

काव्यस्यात्मनि सञ्ज्ञिनि रसादिरूपे न कस्यचिद्विमतिः ।
सञ्ज्ञायां सा केवलमेषाऽपि व्यक्त्ययोगतोऽस्य कुतः ॥ [1]

सञ्ज्ञी=रसः, स एव काव्यस्यात्मा इत्यत्र कस्यापि विमतिर्नास्ति । किन्तु स आत्मा 'व्यञ्जन'या व्यज्यते, तस्य 'ध्वनि'रिति नाम इत्यादि यदुच्यते तत्रैव, अर्थात् 'व्यञ्जना', 'ध्वनिः' इत्यादिसञ्ज्ञायामेव विमतिरस्माकम् । यतः रसेन सह व्यञ्जनायाः ध्वनेश्च कोऽपि सम्बन्ध एव नास्ति । रसः यत्र व्यञ्जनाव्यापारेण व्यज्यते तदा ध्वनिरित्युच्यते इत्यादिविचारा न सङ्गच्छन्ते, व्यञ्जनायाः असम्भवः, रसस्य अनुमानविषयत्वञ्च सप्रमाणमस्माभिः साधितमिति हेतोः । अतः 'ध्वनि'रितिसञ्ज्ञा न युक्ता ।

**९. काव्यविशेषः**

न चोपसर्जनत्वेन तयोर्युक्तं विशेषणम् ।
यतः काव्ये गुणीभूतव्यङ्ग्येऽपीष्टैव चारुता ॥ [2]

---

[1] व्यक्तिविवेके प्रथमविमर्शे ।

[2] व्यक्तिविवेके प्रथमविमर्शे ।

ISSN: 2320-740X 

यत्र शब्दार्थयोः उपसर्जनीकरणेन काव्यविशेषरूपमर्थान्तरमवगम्यते तत्रैव सौन्दर्यमस्तीति नास्ति । यत्र अर्थान्तर एव उपसर्जनीकृतः वाच्यश्च प्रधानः तादृशे गुणीभूतव्यङ्ग्यकाव्येऽपि सौन्दर्यमस्त्येव । अतः शब्दार्थयोरुपसर्जनत्वेनैव काव्ये चारुत्वं भवतीति कथमुच्यते भवद्भिः ?

अत एव विशेषस्योपादानमपि नार्थवत् ।

सञ्ज्ञासम्बन्धमात्रैकफलं तदिति गम्यते ॥ [1]

गुणीभूतव्यङ्ग्ये चारुत्वं वाच्यस्य, न तु अप्रधानस्य व्यङ्ग्यस्य इति हेतोः ध्वनिलक्षणे 'विशेष'पदमपि नोपादेयम्, प्रयोजनाभावात् । केवलं ध्वनिवादिना प्रतिपिपादयिषिताया 'ध्वनि'रूपसञ्ज्ञायाः सम्बन्ध एव तस्य पदस्य फलम् । अर्थाद्विशेषो नाम अस्मिन् काव्ये ध्वनिरेव, नालङ्कारादयः इति सूचनं विशेषशब्दस्य प्रयोजनं, तावदेव ।

तदा चातिप्रसङ्गः स्यात् सञ्ज्ञायां यस्य कस्यचित् ।

यद्वाक्यवर्तिनोऽन्यस्य विशेषस्य तदाप्तितः ॥ [2]

एवं ध्वनिरेव काव्यविशेष इत्युक्तत्वात् यत्र यत्र वाक्येषु ये ये विशेषा भवन्ति तेषु सर्वेष्वपि ध्वनेः अतिव्याप्तिः भवति । तेषां सर्वेषामपि ध्वनिनाम्नैव व्यवहारः करणीयो भवति । उदाहरणार्थम्, प्रहेलिकायाम् उत्तररूपेण यद्भवति तत्तु वाच्यं न, किन्तु व्यङ्ग्यमेव । यथा-

वृक्षस्याग्रे फलं दृष्टं फलाग्रे वृक्ष एव च ।

अकारादिः सकारान्तः यो जानाति स पण्डितः ॥

[1] व्यक्तिविवेके प्रथमविमर्शे ।

[2] व्यक्तिविवेके प्रथमविमर्शे ।


ISSN: 2320-740X

इत्यत्र 'अननस' इत्युत्तरं ध्वन्यते, न तूच्यते । एष एव विशेषोऽत्र । स विशेषोऽपि ध्वनिरित्येव वक्तव्यम् आपतति । किन्तु प्रहेलिकादयः काव्यपङ्क्तौ नैव गणिताः। तथा सति ध्वनिसञ्ज्ञा नान्वेतीति वक्तव्यं किम्? अतः ध्वनिरेव विशेष इति न वक्तव्यम् ।

अ) ध्वनिः काव्यसामान्य एव, न तु काव्यविशेषः । काव्यस्य रसात्मकत्वात्, नीरसस्य काव्यत्वाभावात्, ध्वनिव्यपदेशस्य रसात्मकत्वप्रयुक्तत्वात् सर्वस्यापि काव्यस्य ध्वनिव्यपदेश एवाभिमतः भवेत् ।

आ) रसानां वैशिष्ट्ये तदात्मनः काव्यस्य विशिष्टत्वमित्यपि वक्तुं न शक्यम् । यतः निर्दिष्टरसात्मन एव ध्वनिकाव्यत्वाभिधानत्वापत्तेः अव्याप्तिः । शृङ्गाररसे सम्भोग-विप्रलम्भरूपेण विशेषः, वीररसे धर्मवीर-युद्धवीरादि तथा । तदा अन्यरसात्मनः काव्यस्य ध्वनिव्यपदेशः न भवति । किन्तु काव्यस्य नवरसरुचिरत्वम् निर्बाधम् । सर्वरसानामपि तत्रावश्यकता अस्तीति हेतोः न रसे वैशिष्ट्यम्, तेन काव्येऽपि वैशिष्ट्याभावः ।

इ) वस्तुमात्रादीनां विभावादिरूपतया तेषां रसाभिव्यक्तिहेतुत्वोपगमात् तेषामाधारेणापि काव्यविशेषव्यपदेशो न शक्यते ।

ई) व्यञ्जकानां वैचित्र्यादपि व्यङ्ग्यस्य विशेषोऽङ्गीकर्तुं न शक्यः, गोः नानावर्णरूपव्यञ्जकाः भवन्ति चेदपि गोत्वे कोऽपि विशेषः यथा न सम्भवति, तथैव व्यञ्जकैः काव्ये कोऽपि विशेषो न भवति । विभावादिभिः व्यञ्जकैः विशेषो यद्यङ्गीक्रियते तर्हि विभावादिरूपाणां वस्तुमात्रादीनां व्यङ्ग्यत्वात् प्रहेलिका अपि काव्यं स्यात् ।

उ) काव्ये रसः अङ्गी, न त्वङ्गम् । अतः अनुमेयार्थः वस्त्वलङ्काररूप इत्येव वक्तव्यम्, तयोः अङ्गत्वसङ्गतेः । किन्तु तत्र रसः अनुमेयार्थस्य प्रकारत्वेन न कल्पनीयः । यतः आत्मभूतो रस एवानुमेयार्थः । आत्मनः रसस्य रस एव प्रकारः कथं भवति ?

ISSN: 2320-740X

ऊ) रसात्मकं यदस्ति तत्तु मुख्यवृत्त्यैव काव्यं भवति । 'गौणमुख्ययोर्मुख्ये सम्प्रत्यय' इति नियमात् मुख्ये सति अमुख्यद्वारा व्यपदेशः न भवति । अतः काव्ये रसस्यैव प्राधान्यात् रसद्वारैव काव्यव्यपदेशः भवेत् । नीरसमपि काव्यत्वेन परिगणय्य काव्यविशेष इति वक्तुं नोचितम् । मेघदूतादिषु काव्यविशेषव्यपदेशः तत्प्रतिपाद्यार्थविशेषसमारोपकृतः, न तु मुख्यः ।

अतः काव्यविशेष इत्येष असाधु ।

ध्वनि-गुणीभूतव्यङ्ग्य-चित्रनामकेषु सर्वेष्वपि 'काव्य'पदेन व्यवहारोऽस्तीति आनन्दवर्धनाचार्यः 'ध्वनिः काव्यविशेष' इत्युक्तवान् । तदभिप्राये तत्तु सङ्गच्छत एव ।

**१०. कर्तृनिर्देशः**

'सूरिभिः कथितः' इति कर्तृनिर्देशो यः कृतः सः कर्तृमात्रपक्षे, कर्तृविशेषपक्ष इत्युभयपक्षेऽप्यसमीचीनः । यतो हि कर्तृमात्रपक्षे वक्तव्यस्यावश्यकता नास्ति, क्रियाया कर्त्रव्यभिचारात्। कर्तारं विना क्रियाऽनिष्पत्तेः । घटः कुलालेन कृत इति वक्तव्यस्यावश्यकता यथा नास्ति तथा ।

कर्तृविशेषविवक्षायामपि कर्तृनिर्देशोऽनुचित एव । व्यापारविशेषसम्बन्धेनैव कर्तृविशेषस्य ज्ञानं भवति। 'योऽश्वमारूढः स पुरुषो राजा' इति अश्वारूढत्वरूपविशेषलक्षणेन राज्ञः ज्ञानं यथा भवति तथैव व्यापारविशेषेणैव (ध्वनेः व्यापारेण अर्थात् व्यञ्जनया) कर्ता ज्ञायत एव । अत्र महिमभट्टेन अवाच्यवचनदोषो दर्शितः ।

एवं ध्वनिलक्षणे दश दोषा ये दर्शिताः महिमभट्टेन ते प्राधान्येनैव, न तु एत एव दोषाः इति तात्पर्यम् । यतः इतोऽपि बहवो दोषास्तत्र दर्शयितुं शक्यन्ते इति कारिकान्ते तेनैवोक्तम्- **ये त्वन्ये तद्भेदप्रभेदलक्षणगता न ते गणिताः** इति । तेषु ये दोषाः लक्षणदोष इत्येव अपरिगणिताः अव्याप्त्यतिव्याप्त्यसम्भवाः तेऽपि तेन दर्शिताः ध्वनिलक्षणे ।

इति शम् ।

**********


ISSN: 2320-740X

## वाच्यार्थविचारः

**डा. वेङ्कटरमणभट्टः**

**सहाचार्यः, शिक्षाशास्त्रविभागः**

इदम् अन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।

यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ।।[1]

वाचामेवप्रसादेन लोकयात्रा भविष्यति इत्यभियुक्तवचनानुसारेण वाचः अनुग्रहेणैव जनानां लोकव्यवहारः सम्पत्स्यते । यदि परस्परं वाग्व्यापारः न जायते चेत् लोकानां व्यवहारः नैव शक्यते । वदेयुः केचित् सङ्केतमाध्ययेन लोकाः पूर्वं व्याहार्षुरिति । आस्तां तावत् वादोऽयम् । शब्दरूपं ज्योतिः यदि न प्रकाशते इदं भुवनत्रयमपि अन्धकारमयं भवति । तमसा आवृतस्य प्रपञ्चस्यास्य व्यवहारलेशोऽपि न सम्भवति । लोके तमः अज्ञानप्रतीकमिति मन्यते । ज्ञानरूपं ज्योतिः शोशुभ्यते ।ज्योतीरूपस्य ज्ञानस्य तमोरूपस्य अज्ञानस्य च विवक्षा श्लोकेऽस्मिन् कृता अस्ति ।

शब्दानामभावे लोकव्यवहारः सर्वथा न शक्यते । शब्दोच्चारणसमये अस्माकं मस्तिष्के काश्चित् अन्तःक्रियाः जायन्ते । अन्तःक्रियाः अन्तरा व्यवहारो न जायते । अर्थं विज्ञायैव कश्चित् शब्दं प्रयुङ्क्ते । अर्थबोधनद्वारा एव शब्दप्रयोगः क्रियते । शब्दार्थयोः सम्बन्धः कीदृशः इत्याकाङ्क्षा उत्पद्यते । शब्दार्थयोः सम्बन्धः नित्य इति संविद्रते सर्वेऽपि लोकाः । शब्दार्थयोः सम्बन्धः नितान्तं घनिष्टः वरीवर्ति । यथा -

वागर्थाविव सम्प्रक्तौ वागर्थःप्रतिपत्तये ।

जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।।[2]

---

[1]काव्यादर्शः४.परिच्छेदः.प्र.

[2]रघु.स.प्र.वं.

सुप्रसिद्धकवेः कालिदासस्य वचनमिदम् वर्तते । अत्र पार्वती वाक् शिवश्च अर्थःविवक्षितः । वाक् शब्दस्य स्त्रीलिङ्गनिर्देशात् पार्वती वाचा अभिधीयते । अर्थशब्देन शिवः व्यपदिश्यते पुंस्त्वात् । समग्रस्यापि विश्वस्य मातापितरौ पार्वतीपरमेश्वरौ इत्यनेन मातुः स्थानं पार्वत्याः कृते प्रादायि कविना । पितुः स्थानञ्च ईश्वरस्य कृते समसूचि कविना । वाचः अर्थस्य च व्यञ्जनाय पार्वतीपरमेश्वरौ वन्दे इति फलितोऽर्थः । शिवस्य शरीरार्धं पार्वत्या व्यापृतमिति हेतोः तस्य अर्धनारीश्वर इत्यपि नाम सार्थक्यं भजते।

किञ्च वाक् इत्युक्तौ शब्दः। शब्देन अर्थः प्रतिपाद्यः। शब्दः अवश्यमेकम् अर्थं बोधयति। अतः शब्दस्य अर्थप्रतिपादनक्षमत्वात् तस्य शब्द इति नाम ।च्शब्दार्थयोः ज्ञानम् अवश्य प्रयोक्तुः भवेदेव । अर्थबोधनपुरस्सरमेव कश्चन प्रयोक्ता शब्दं प्रयुङ्क्ते ।

वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः ।
अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः ।।[1]

वर्णानां समूहः पदं भवति। 'सुप् तिङन्तं पदमिति '[2]वैयाकरणाः । सुबन्तञ्च तिङन्तञ्च पदसंज्ञं स्यादिति तस्यार्थः । शक्तं पदमिति नैयायिकाः । वर्णाः नाम अक्षराणां समूहः भवति । यथा घटः घ् अ ) प्रयोगार्हाः इत्यस्य प्रयोक्तुं योग्याः इत्यर्थः। प्रयोक्तुं योग्याः वर्णाः इति विवक्षितोऽर्थः।केवलं (ट् अ प्रातिपदिकस्य प्रयोगानर्हत्त्वात् प्रयोगार्हाः इति पदप्रयोगः कृतः ।' न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः '[3] इति वचनात् प्रकृतेः प्रत्ययस्य च प्रयोगासम्भवात् प्रकृतिप्रत्यययोः व्यवच्छेदः क्रियते । प्रातिपदिकस्यापि प्रयोगः नास्ति । अर्थत्रैविध्यमत्र सूचितमस्ति। वाच्यार्थः लक्ष्यार्थः व्यङ्ग्यार्थश्चेति त्रयः अर्थाः प्रकीर्तिताः । अभिधया वृत्त्या वाच्यार्थः बोध्यते । लक्षणया वृत्त्या लक्ष्यार्थः बोध्यते। व्यञ्जनया

[1]सा२.प.द्वि.दर्प.

[2]अष्टाध्यायी१४.४.१.

[3]महाभाष्यम्पस्प,

 ISSN: 2320-740X

वृत्त्या व्यङ्ग्यार्थः बोध्यते। वाच्यार्थे वाचकः शब्दः । लक्ष्यार्थे लाक्षणिकः शब्दः । व्यङ्ग्यार्थे व्यञ्जकः शब्दः । तदेवोच्यते यत्

वाच्यार्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः ।

व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः[1] ।।

पदप्रतिपाद्यत्वम् अर्थवत्त्वम् । उच्यते असाविति वाच्यः । लक्ष्यते असाविति लक्ष्यः । व्यज्यते असाविति व्यङ्ग्यः । अर्थत्रैविध्यमेवेति ज्ञापयितुं त्रिधा इति उक्तम् । अभिधाजन्यबोधविषयत्वं वाच्यार्थत्वं लक्षणाजन्यबोधविषयत्वं लक्ष्यार्थत्वं व्यञ्जनाजन्यबोधविषयत्वं व्यङ्ग्यार्थत्वमिति फलितम् । प्राधान्येन वाच्यार्थस्य विचारः क्रियते । अभिधया वृत्त्या वाच्यार्थस्य प्रतीतिर्जायते । वाच्यार्थः नाम मुख्यार्थः । अत्र वाचकः शब्दः । अभिधायाः शक्तिरिति नामान्तरम् । नैयायिकानां मतमस्ति यत् ‘ ‘आप्तवाक्यं शब्दः आप्तस्तु यथार्थवक्ता अस्मात् पदात् अयमर्थो बोद्धव्यः इति ईश्वरसङ्केतः शक्तिः’[2] । वृत्तिम् आलङ्कारिकाः शक्तिरिति कथयन्ति । नैयायिकास्तु वृत्तिपदेनैव व्यवहरन्ति । उभयोरपि नाम्नः एव भेदः । प्रक्रियायां भेदो नास्ति । अस्मिन् जगतीतले सर्वस्यापि वस्तुनः कश्चिदर्थः भगवता सूचितः । इतीश्वरसङ्केतः शक्तिः इत्यनेन वचसा तदेव प्रतीयते । अयं घटः इति वाक्येन घटत्वरूपः अर्थ एव प्रतीयते । घटत्वरूपः अर्थः अयं पटः इति वाक्येन  न बोध्यते । किमर्थं घटशब्दस्य घटत्वरूपः अर्थः इति चेत्  भगवता तस्मिन्नेवार्थे सः शब्दः सङ्केतितः। स एव ईश्वरसङ्केतः ।

तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा ।

सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च ।।[3]

---

[1]सा३.प.द्वि.दर्प.

[2]तर्कसंग्रहः शब्दखण्डः,

[3]सा४.परिच्छेद.दर्प द्वि.

तत्र इत्युक्तौ तिसृषु शक्तिषु इत्यभिप्रेतः। सङ्केतो नाम इच्छाविशेषस्तद्विषयः सङ्केतितः । सङ्केतः स्वाभाविको व्यापार इति मीमांसकाः । सङ्केतितार्थ इत्युक्तौ मुख्यार्थः। लक्षणव्यङ्ग्यापेक्षया प्रथमोपस्थितत्वात् अस्य मुख्यार्थत्वम् । तथा च तिसृषु शक्तिषु मध्ये सङ्केतितार्थस्य कोशोपमानव्याकरणादिप्रसिद्धस्य मुख्यार्थस्येत्यर्थः। शाब्दबोधजननाद्धेतोः अग्रिमा प्रथमा शक्तिरभिधा नामेत्यर्थः। इत्थं मुख्यार्थबोधकशक्तित्वमभिधात्वमित्यभिधालक्षणं पर्यवसितम् ।

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यात् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ।।[1]

सङ्केतस्य ग्रहः पूर्वं वृद्धस्य व्यवहारतः ।
पश्चादेवोपमानाद्यैः शक्तिधीपूर्वकैरसौ ।।[2]

उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य गामानय इत्युक्ते तं गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य सास्नादिमानर्थः आनयनपदस्य च आहरणमर्थः इति सङ्केतमवधारयति । अत्र कश्चन प्रयोगः प्रवर्तते । सैद्धान्तिकं ज्ञानमन्यत् प्रायोगिकञ्च ज्ञानमन्यत् । सैद्धान्तिकरूपेण अध्यापितस्य अधीतस्य वा ज्ञानं सुदृढं न तिष्ठति । प्रायोगिकपक्षमवलम्ब्य प्राप्तं प्रदत्तं वा ज्ञानं सुदृढं तिष्ठतीति सर्वेषामपि अनुभववेद्यम् । प्रयोगेऽस्मिन् प्रयोजकः उत्तमवृद्धः वर्तते । प्रयोज्यस्तु मध्यमवृद्धः अस्ति । येन प्रयोगः क्रियते सः प्रयोक्ता अथवा प्रयोजकः । यस्य उपरि प्रयोगः क्रियते सः प्रयोज्यः यथा 'प्रयोज्यनियोज्यौ शक्यार्थे '[3] प्रयोक्तुं शक्यः प्रयोज्यः । समुत्पन्नसङ्केतज्ञानः उत्तमवृद्धः प्रयोजको भवति । प्रयोज्योऽपि समुत्पन्नसङ्केतज्ञान एव । प्रश्नोऽसौ समुदेति अनयोः उत्तमत्वं मध्यमत्वं च कुतः इति । प्रयोज्यप्रयोजकभावं गृहीत्वैव उत्तमत्वमध्यमत्वयोः निर्णयोऽकारि । प्रयोज्यप्रयोजकयोः प्रयोजकस्यैव प्रायेणोत्कर्षात् इत्थं

[1]मुक्तावलीशब्दखण्डः,

[2]सा३२ सं.लक्ष्मीटीका पृ.दर्प.

[3]अष्टाध्यायी७ सूत्रसंङ्ख्या..३६८.


ISSN: 2320-740X

व्यवस्थापितम् । अनयोः प्रयोज्यप्रयोजकयोः प्रयोगं बालः निरीक्षते। बालस्तु अनुत्पन्नसङ्केतज्ञानः वर्तते । बालापेक्षया मध्यमवृद्धे किञ्चन ज्ञानाधिक्यं वर्तते ।

उत्तमवृद्धस्यापेक्षया मध्यमवृद्धे किञ्चित् न्यूनं ज्ञानं वर्तत इति हेतोः अस्य प्रयोज्यस्य मध्यमत्वं ज्ञेयम् । प्रयोजकः उत्तमवद्धः प्रयोज्यं मध्यमवृद्धं निर्दिशति गामानय इति । तत् वाक्यं श्रुत्वा प्रयोज्यः मध्यमवृद्धः गाम् उपसरति । प्रयत्नं करोति तां गां समानेतुम् । एतादृशं मध्यमवृद्धस्य व्यवहारं दृष्ट्वा बालः किञ्चित् किञ्चित् सङ्केतग्रहं प्राप्नोति । यद्यपि बालस्य अवयवार्थज्ञानं नास्ति । तथापि गामानय इति वाक्यं श्रुत्वा गवानयनप्रवृत्तं मध्यमवृद्धं तस्य प्रयत्नादिकञ्च दृष्ट्वा सः बालः अनुमाति । गोशब्दस्य सास्नादिमान् आनयनशब्दस्य च आहरणम् अर्थः इति तस्य प्रतीतिर्जायते । परन्तु बालः वाक्यगतप्रत्येकपदस्य कदा सङ्केतमवधारयति ? अनन्तरञ्च इत्यनेन पदेन साहित्यदर्पणकारस्य विश्वनाथस्य वचसा ज्ञायते यत् गां बधान अश्वमानय । गोपदस्य सास्नादिमान् प्राणी इति सङ्केतम् अवधारयति।बधान इति पदस्य बन्धनरूपक्रियायाञ्च स सङ्केतमवधारयति। अश्वपदस्य एकशफवत्वादिरूपप्राणिनि सङ्केतमवधारयति । आनयनपदस्य आहरणरूपक्रियायां सङ्केतमवधारयति । इत्थं गोर्बन्धने अश्वस्यानयने च प्रवृत्तं मध्यमवृद्धं दृष्ट्वा बालः व्युत्पित्सुः तत्तत्पदे पदार्थबोधजन्यं ज्ञानं प्राप्नोति । एवं वृद्धव्यवहारात् शक्तिग्रहः जायते।

लोके बोधनीयं कञ्चिदर्थं मनसि निधाय वक्ता कश्चित् शब्दान् प्रयुङ्क्ते । वक्ता तु मनसि अर्थं सुविचिन्त्यैव शब्दान् प्रयुङ्क्ते इति निश्चयः । तान् अर्थान् श्रुण्वन्तो जनाः यदि तद्भाषायामभिज्ञाः तर्हि तेषामर्थमवगन्तुं शक्नुवन्ति । यद्यनभिज्ञाः तद्भाषायाञ्चेत् नावगच्छन्तीति अनुभवसिद्धम् । शब्दान् शृण्वन्ति चेदपि तेषामर्थावगमने न समर्थाश्चेत् वृत्तिज्ञानस्य विरहादित्येवोत्तरम् । वृत्तिर्नाम शक्तिः । वाक्यश्रवणानन्तरं झटिति यः अर्थः बोध्यते सोऽर्थः वाच्यार्थःयश्च अर्थः अभि ,धया बोध्यते । लोके चोक्तं वाच्यार्थमवलोक्यैव व्यवहरामः । वाच्यार्थं विना अन्यमेवार्थंद् यदि गृह्णीमः चेत् व्यवहारः दुष्करः । अतः वाच्यार्थः सकारात्मकचिन्तनपरः । सुदृढसमाजस्य स्वस्थसमाजस्य च सर्जनाय वाच्यार्थस्य योगदानं

महद्वर्तते । वाच्यार्थमतिरिच्य लक्ष्यार्थः व्यङ्ग्यार्थश्चास्ति । परं लोकव्यवहारे वाच्यार्थस्य यत् स्थानं वर्तते तादृशं स्थानं लक्ष्यार्थव्यङ्ग्यार्थौ नाप्नुतः। सुभाषितकारोऽपि वक्ति यत् –

प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः।
तस्मात् तदेव वक्तव्यं वचने का दरिद्रता ॥[1] इति।

सन्दर्भग्रन्थाः

१साहित्यदर्पणः.

२रघुवंशः.

३अष्टाध्यायी.

४सिद्धान्तकौमुदी.

५तर्कसङ्ग्रहः.

६काव्यादर्शः.

७पातञ्जलमहाभाष्यम्.

८सिद्धान्तकौमुदी.

९मुक्तावली.

*********

[1]सुभाषितरत्नभाण्डागारः


ISSN: 2320-740X

# क्रियाविशेषणानां कर्मत्वक्लीबताविचारः

**डा. चिर्रावूरि कृष्णानन्तपद्मनाभम्**

**सहायकाचार्यः, व्याकरणविभागः**

क्रियाविशेषणां कर्मत्वं क्लीबता चेति वचनमभियुक्तैर्व्यवह्रियते। इदं चानुशासनं क्व वर्तत इत्यत्र स्पष्टता नास्ति। कर्तृविशेषणं यस्य भवति तत्र कर्तृगतसंख्या तद्गतलिङ्गं चाश्रीयते। एवमेव कर्मविशेषणस्य। क्रियाया विशेषणं भवति चेत् तत्र किं लिङ्गं कीदृशं कारकत्वं च तस्य भवतीति विचार्यते। इदं च वचनमिति पक्षेऽनेन वचनेन तत्र कर्मत्वं क्लीबता च भवति। शीघ्रं गच्छतीत्यत्र गमनक्रियाया विशेषणं, क्रियायाः स्वतः किमपि लिङ्गं नास्ति। क्रियायां संख्या च केति विचार्यम्।

चैत्रः पचति, चैत्रौ पचतः, चैत्राः पचन्ति इत्यादौ एकत्वद्वित्वत्रित्वानि सन्ति चेदपि ताः न क्रियायाः। किन्तु कर्तुरेव। एवमेव चैत्रेण ग्रामः गम्यते, चैत्रेण ग्रामौ गम्येते, चैत्रेण ग्रामाः गम्यन्ते इत्यादौ गम्यते गम्येते गम्यन्त इत्यादौ एकत्वादीनि कर्मगतानि न क्रियागतानि। क्रिया च एकैव प्रतीयते। क्रियाया एकत्वादेव एकवचनमेव नियमतः प्राप्नोति। अत एवाभियुक्तानां वचनेऽपि कर्मत्वं क्लीबता इत्येवोक्तम्। संख्याविषये तैर्नोक्तम्।

क्रिया इति पदं व्युत्पत्तिभेदेनानेकार्थकम्। क्रियतेऽनयेति व्युत्पत्त्या क्रियाशब्दः व्यापारापरपर्यायः प्रयुज्यते शास्त्रकारैः। क्रियतेऽसाविति व्युत्पत्त्या फलमिति लभ्यते। क्रियतेऽनेनेति व्युत्पत्त्या कृतिरपि बोध्येति वक्तुं शक्यं कृत्यापि कस्यचिदर्थस्य व्यापाररूपस्य क्रियमाणत्वेन शब्दलभ्यत्वात् तस्यार्थस्य, तथापि तत्रार्थे प्रयोगाभावेन व्यापारमात्रपरकत्वं ग्राह्यम्। एवमेव क्रियतेऽसाविति व्युत्पत्त्यापि कृतिरपि वाच्येति वक्तुं शक्यं कृतेर्मानसव्यापाररूपत्वेन मनो दधावित्यादौ तादृशार्थप्रतीतेस्सर्वानुभवसिद्धत्वात्। अत्रापि प्रामाणिकः प्रयोगश्शास्त्रकारैरकृत इति सोऽर्थोऽपि नाश्रयणीयः।

तथाच क्रियाविशेषणमित्यस्य व्यापारविशेषणम्, फलविशेषणमित्यर्थः फलति। व्यापारस्य विशेषणम् इत्यस्योदाहरणं तु पाकं पचति। पचधातोः विक्लित्त्यनुकूलः व्यापारोऽर्थः। पाकं पचतीत्यादौ पाकशब्देन फलमभिप्रेतम्। तथा च फलस्य विशेषणत्वे तस्य कर्मत्वं, क्लीबत्वम् इति पाकमिति लभ्यते। व्यापारस्य विशेषणत्वे तु तत्र कर्मत्वं न भवति। व्यापारविशेषणत्वे हि तस्य कर्तृत्वमेव भवति। तद्यथा फलस्य व्यपदेशिवद्भावेन फलाश्रयत्वात् कर्मत्वमिति पाठं पठति, पाकं पचतीत्यादौ कर्मत्वस्य सिद्धौ तदर्थमपूर्ववचनं न कार्यमिति नव्यानामाशयः।

अत एव तत्समानाधिकरणे फलविशेषणभूते स्तोकं पचतीत्यादौ स्तोकशब्दादपि द्वितीया सिद्ध्यति इति च अर्वाचीनानामभिप्रायः। अत्रेदं चिन्तनीयम्। फलस्य व्यपदेशिवद्भावेन फलाश्रयत्वात् कर्मत्वं यथा तथा व्यापारस्यापि व्यपदेशिवद्भावेन व्यापाराश्रयत्वात् कर्तृत्वम्। तदा पाकः पचति इति प्रयोगः सिद्ध्यति । यद्वा कारकं तस्य क्रियायामेवान्वयः, व्यापारे फले वेत्यन्यदेतत्। फलस्य व्यपदेशिवद्भावेन फलाश्रयत्वात् कर्मत्वे तद्विशेषणस्यापि कर्मत्वसिद्धिं संसाध्य क्रियाविशेषणानां कर्मत्वं क्लीबतेति वचनस्य सिद्धार्थानुवादकत्वमिष्यते नव्यैः।

प्राचीनानां दीक्षितप्रभृतीनां मते क्रियाविशेषस्य कर्मत्वं क्लीबतेति वचनमपूर्वतया कर्मत्वसाधकम् । किं च धात्वर्थे क्रियायां वा फले वान्वयमतिरिच्य तैः भावप्रत्ययार्थे धात्वर्थानुवादके सिद्धतया भासमानेऽर्थेऽन्वयोऽभ्युपगतः। अतस्तन्नये क्रियाविशेषणस्य प्रत्ययार्थेऽन्वये सति प्रत्ययार्थस्य भावस्य पुंस्त्ववैशिष्ट्येन तद्विशेषणस्यापि क्रियाविशेषणत्वाविशेषेण तद्भानाभ्युपगमेन प्रत्ययार्थभावस्य पुंस्त्ववत्त्वेन तद्विशेषणेऽपि तद्धर्मरूषितत्वं भवतीत्यतः स्तोकः पाकः इत्यपि प्रयोगो भवति इति दीक्षितादीनामाशयः। कृदभिहितो भावो द्रव्यवत्प्रकाशत इति भाष्यमेव तत्प्रयोगस्योपपत्तौ मूलमिति।

अत्र वदन्ति भावप्रत्ययो हि भावे भवति चेदपि न तत्र कारकाणामन्वयः। साध्यावस्थापन्नक्रियायामेव कारकाणामन्वयः। प्रत्ययार्थः क्रिया भवति चेदपि तस्याः साध्यत्वेन भानं न संभवि। सिद्धत्वेनैव क्रियायास्तत्र भानात्। कारकस्य सिद्धत्वेनैव भानमङ्गीक्रियते। घटो भविष्यतीत्यादौ


ISSN: 2320-740X

तस्य साध्यत्वेन न भानम्। सूक्ष्मरूपेण सिद्धतयैव स भासते। अन्यथा तद्वाचकस्य प्रातिपदिकत्वानापत्तिः। एवं च सिद्धतया भासमानस्य तस्य घटस्य अन्वयः साध्यतया भासमानायां क्रियायामेव न्याय्यः, सिद्धं साध्याय कल्पत इति न्यायात्। क्रियायाश्च धातुवाच्यायाः साध्यत्वेन भानादेव तस्याः सिद्धतया भासमानेन घटादिरूपेणार्थेनाकाङ्क्षोचिता। एवं चात्र पदार्थद्वययोरपि परस्पराकाङ्क्षायाः सत्त्वेन तयोरेवान्वयः न्याय्यः। सिद्धतया भासमानस्यार्थस्य सिद्धतया भासमाने पदार्थान्तरेऽन्वय इतरत्रापि न दृष्टचरः। अत एव कारकाणां परस्परमन्वयोऽव्युत्पन्न इत्यभियुक्ता वदन्ति। तथा च स्तोकः पाक इत्यादीनां प्रयोगाणां तदाभासकत्वमेवेति नव्यानामाशयः प्रतीयते। अत एव तिङन्तप्रयोगे क्रियान्तराकाङ्क्षा नोदेति कृदन्तप्रयोगे तूदेतीति चैत्र ओदनं पचतीति प्रथमवाक्ये तिङ्न्तात् क्रियान्तराकाङ्क्षा नास्तीति तत्र साध्यत्वेन क्रियाया भानम्, पाक इत्यादौ तु क्रियान्तराकाङ्क्षाया उदयेन सिद्धत्वेन भानम्। तिङन्तप्रयोगे सति "क्रिया क्रियया समवायं न गच्छति पचति पठति" इति भाष्यात् तिङन्ते तिङ्प्रकृतिधातुवाच्यक्रिया क्रियान्तरं नाकाङ्क्षतीति क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकत्वमिति लक्षणं भाष्यसंमतं मतमिति भट्टिजीदीक्षितानामाशयः। किन्तु पचति पठतीत्यादौ पाकक्रियायाः पठनरूपक्रियान्तरं नाकाङ्क्षाति चेदपि पचति भवतीत्यादौ देवदत्ताभिन्नैकर्तृका वर्तमानकालिकी विक्लित्त्यनुकूला या क्रिया तत्कर्तृका सत्ता इति बोधजनकतायाः भाष्यकृत्संमततया क्रियान्ताराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्त्वरूपलक्षणं भाष्यकृतामनभिप्रेतमिति लभ्यते।

किं च कर्तृकर्मेतरकारकाभाववत्त्वस्यैवासत्त्वरूपत्वं साध्यत्वं नव्यवैयाकरणैः परिष्कृतम्। अस्मिन्नर्थे प्रमाणं तु एओङ्सूत्रे भाष्ये "इदं विचार्यते – इमानि सन्ध्यक्षराणि तपराणि वोपदिश्येरन् 'एत्-ओत्-ङ् ऐत्-औच्-ङ् इति, अतपराणि वा यथान्यासम' इति" इत्येतस्मिन् वाक्ये कस्य पदर्थस्य किंकारकत्वेन कस्यां क्रियायाम् अन्वय इति विचारावसरे इदंपदार्थः तपरातपरसन्ध्यक्षरोपदेशो गृह्यते। स चोपदेशो विचारक्रियायां कर्मतयान्वेति इति कैयटः प्रदीपे प्रत्यपादयत्। किं च "विचार्यते" इत्यनेन उपस्थिता सा क्रिया साध्यत्वेन प्रतीयते। साध्यत्वेन भासमानस्यास्य क्रियारूपस्यार्थस्य क्रियान्तरे

ISSN: 2320-740X

कर्मतयान्वयः कथमिति शङ्का उदेति, तथापीदंशब्देन परामृष्टा सा क्रिया सत्त्वरूपतामापद्यते। अर्थाद्द्रव्यरूपत्वं प्राप्नोति। उपदिश्यत इति तिङन्तेन पदेनोपस्थापिता उपदेशनक्रिया च वस्तुतः साध्यस्वभावा न द्रव्यायमाणा सा तथापि बुद्ध्या परामृष्टत्वात् सत्त्वरूपतां प्राप्तेति विचार्यत इति तिङन्तान्तरेणोपस्थितायां विचारणक्रियायां कर्मतयान्वयः भवतीति न किञ्चिदनुपपन्नमिति। अत्रत्येन विचारेण साध्यक्रिया अन्यस्यां क्रियायाम् अन्वेतीति या अन्वयं प्राप्नोति सा साध्या कथमित्येव प्रश्नः। कारकत्वेन भासमानस्य व्यापारस्य इतरत्र कथमन्वय इत्येव प्रश्नः। किन्तु अन्वयस्तु अन्यस्यां साध्यत्वेन भासमानक्रियायामेव। एवं च साध्यक्रियायामेवान्वयः इति लभ्यते। किं च शतेन क्रीतः शत्य इत्यादौ तद्धितान्तेनोपस्थापिता क्रिया साध्यस्वभावा न भवतीति तत्र कारकस्यान्वयस्यैवाभावेन परिगणने तद्धितादीनामावश्यकता नास्तीति प्रत्याख्यातं भाष्ये। अत एव कृतपूर्वी कटमित्यत्रापि तद्धितोपस्थापिता क्रिया अधिका अस्तीति कृदन्तमात्रजन्योपस्थितिविषया क्रिया नास्तीति तत्राप्यतिप्रसक्तेरभावेन तद्धिते मा भूदित्यस्य आवश्यकतैव नास्तीति नव्यानामाशयः। एवमेव कर्तृकर्मणोः कृति इत्यत्र कर्तृसाहचर्येण कर्मापि धात्वर्थाद् भेदेनोपस्थितस्यैव कर्मत्वम् इत्यर्थ उपपादितः शेखरे। तेन स्तोकं पाक इत्यत्र स्तोकशब्दात् न षष्ठी इत्युक्तम्। स्तोकपदार्थस्य फलरूपक्रियाविशेषणस्य धात्वर्थाद् भेदेनोपस्थितिर्नास्तीति तत्र न षष्ठी। स्तोकं पाचक इत्यत्रापि न षष्ठी, तत्रापि स्तोकपदार्थस्य क्रियाविशेषणस्य भेदेनोपस्थित्यभावात्। तेनापि ग्रन्थेन स्पष्टं प्रतीयते तेषामपि साध्यत्वेन प्रतीयमानक्रियायामेवान्वेयः इति शम्।

**********

 ISSN: 2320-740X

# संस्कृतशिक्षणं किमर्थम्?

**डा. गणेश टि. पण्डितः**

**सहायकाचार्यः, शिक्षाशास्त्रविभागः**

संस्कृतशिक्षणं किमर्थम् इति प्रश्नः न केवलं सामान्यजनानां मनस्सु अपि तु संस्कृताध्येतृणां मनस्वपि क्वचित् उद्भवति। संस्कृतशिक्षणं विशिष्य भारतीयज्ञानपरम्परायाः परिरक्षणाय प्रसाराय विकासाय च अनिवार्यमस्ति । यद्यपि संस्कृतशिक्षणं नाम किञ्चन भाषाशिक्षणमिति भ्रमः बहुषु वर्तते। बहुभाषाभाषिणां भारते भाषाशिक्षणानि अनल्पानि सन्ति। सत्सु बहुषु शिक्षणेषु संस्कृतशिक्षणमपि अन्यतममिति तेषां मतम् ।

परं संस्कृतस्य शिक्षणं संस्कृतेन शिक्षणं वा केवलं संस्कृतभाषामात्रस्य प्रचाराय एव नास्ति।संस्कृताय शिक्षणं संस्कृतशिक्षणमिति अर्थपरिकल्पनमेव विवादभूमिरिति मे मतिः। संस्कृतभाषाप्रचारप्रसारार्थं संस्कृतशिक्षणमिति कथनेन बहवो हि संस्कृतविरोधिनः प्रादुर्भवेयुः। नैतत् कस्यचित् इष्टम्। अतः भारतीयज्ञानपरम्परायाः संरक्षणाय प्रसाराय विकासाय च संस्कृतशिक्षणमनिवार्यमिति वक्तव्यम् ।

भारतीयज्ञानपरम्परायाः स्रोतांसि संस्कृतवाङ्मये सन्निहितानि सन्ति। एकविज्ञानेन सर्वविज्ञानमिति नयेन संस्कृतवाङ्मयस्य आत्मसात्करणं प्रत्येकमपि भारतीयस्य आद्यं कर्तव्यं वर्तते।राष्ट्रियशिक्षानीतावपि परिचयखण्डे भारतीयविचारपरम्परायाः ज्ञानपरम्परायाः वा उल्लेखः वर्तते। पुरा भारते ज्ञानस्य प्रज्ञायाः सत्यस्य च गवेषणमेव शिक्षणस्य लक्ष्यमासीत् इत्यतः तदेव लक्ष्यं पुनरपि भवितव्यमिति उक्तमस्ति।अतः एव भारतीयशिक्षाप्रणाल्याः आमूलाग्रं परिवर्तनं शिक्षाविद्भिः कृतमस्ति ।

संस्कृतशिक्षणं पूर्वमपि आसीत् अधुनापि अस्ति अग्रेऽपि भविष्यति। तत्र कस्यापि सन्देहः नास्ति। परं परिस्थित्यनुरूपलक्ष्यविहीनस्य समग्रताविहीनस्य शिक्षणस्य प्रयोजनं किमिति राष्ट्रियशिक्षानीतिनिर्मातृणां विचारः। अतः समग्रशिक्षाक्षेत्रविकासाय संस्कृतशिक्षणमिति भावना उत्पादनीया । विशिष्य शिक्षकः एव आमूलाग्रं परिवर्तनं कर्तुं प्रभवति नान्यः। अतः संस्कृतशिक्षकैः संस्कृतशिक्षणस्य व्यापकलक्ष्यनिर्धारणाय प्रचाराय च मतिः कार्या। सीमितलक्ष्याणि अथवा सङ्कीर्णलक्ष्याणि भाषायाः प्रचारप्रसारादीनि भवितुमर्हन्ति । परं व्यापकलक्ष्याणि शिक्षकैः ज्ञातव्यानि। तानि कानि इति संस्कृतशिक्षणं किमर्थमिति ये पृच्छन्ति तैरपि ज्ञातव्यानि। अन्यथा संस्कृतशिक्षणं संस्कृतजगतः शिक्षणं न तु देशविकासाय पूरकशिक्षणमिति भावना उत्पद्यते।

नैकविषयिणी विद्या संस्कृतशिक्षकेण देया। अतः संस्कृतशिक्षणं किमर्थमिति ये पृच्छन्ति ते एनं सम्प्रत्ययं स्पष्टमवगच्छेयुः। प्राक्कालिकवैद्यवत् संस्कृतशिक्षकः स्वभूमिकां निभालयेत् इति अत्र तात्पर्यम्। सर्वविद्याधराः पेरुभट्टोपमाः शिक्षकाः अद्यत्वे अनिवार्याः । यथोक्तं रसगङ्गाधरे -

श्रीमज्ज्ञानेंद्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः<br>
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् ।<br>
देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं<br>
शेषाङ्कप्राप्तशेषामलभणितिरभूत्सर्वविद्याधरो यः ।।'

पुनश्च संस्कृतशिक्षणं यद्यपि कूपोदकवत् पवित्रमस्ति तथापि संस्कृतशिक्षणक्षेत्रं कूपोपमम् इति न वृभावनीयम् । संस्कृतक्षेत्रं प्रवहन्त्याः नद्याः तुलामधिरोहति। प्रवहन्त्यां नद्यां अनुक्षणं यथा नवजलाहरणं सम्भवति तथैव नवनवीनविचाराणाम् आदानप्रदानप्रक्रियाकेन्द्रमिव संस्कृतक्षेत्रं भवेत्।

सामान्यतः उच्चमाध्यमिकस्तरे विद्यमानैः विशिष्य किशोरावस्थायाः अन्तिमे चरणे वर्तमानैः किशोरैः प्राप्तयौवनैर्वा संस्कृतच्छात्रैः "संस्कृतक्षेत्रे उद्योगावसराः सन्ति वा न वा" इत्येतस्मिन् विषये


ISSN: 2320-740X

विविधाः शङ्काः असकृत् प्रकटीक्रियन्ते। संस्कृतक्षेत्रे कियता प्रमाणेन उद्योगावसराः उपकल्पिताः सन्ति भोः ? देहि दत्तांशान्; इति संस्कृतविरोधिनः अपि क्वचित् पृच्छन्ति। अमीषां तेषां च शङ्कासमाधानम् अवश्यमेव कर्तव्यम्। अन्यथा संस्कृतक्षेत्रस्य विषये तेषाम् आसक्तिः क्रमशः क्षीयेत पुनस्तेषाम् अनादरभावश्च अभिवर्धेत।

माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च वर्तमानाः छात्राः कक्ष्याशिक्षणेन सह व्यावसायिकप्रशिक्षणमपि प्राप्य कालान्तरे स्वावलम्बिनो भवन्तु इति केन्द्रसर्वकारेण राज्यसर्वकारेण च विविधाः व्यावसायिकपाठ्यक्रमाः परिकल्पिताः सन्ति। भाषायाः स्थाने ऐच्छिकरूपेण व्यावसायिकपाठ्यक्रमस्यापि अध्ययनं कर्तुं शक्यते इति विषयः यदा छात्रैः विज्ञातः तदा छात्राणां मनस्सु द्वैधीभावः समुत्पन्नः। मातृभाषाम् आङ्ग्लभाषां च परित्यक्तुं न वयं शक्नुमः इति कश्चन पक्षः। अतः बहुत्र राज्येषु संस्कृतभाषामेव न्यक्कृत्य व्यावसायिकपाठ्यक्रममेव छात्राः अहमहमिकया चेतुमारभन्त। पठितुमारभन्त। परन्तु संस्कृतभाषात्यागेन व्यावसायिकपाठ्यक्रमग्रहणेन च कोऽपि जीवने सफलः अभवत् इत्यत्र दृढीभूतं प्रमाणम् अद्यावधि नास्माभिः दृष्टम्। संस्कृतस्य त्यागेन एव अहं जीवने सफलः अभवम्! मत्कृते संस्कृतत्यागेन एव औद्योगिकावसराः लब्धाः इति एको वा सप्रमाणं वक्ष्यति तदानीमेव किमपि चिन्तयितुं शक्यते । अन्यथा उच्चमाध्यमिकस्तरे/ उच्चस्तरे संस्कृतभाषापाठ्यक्रमं परित्यज्य व्यावसायिकपाठ्यक्रमपठनं क्रियते चेत्तर्हि लाभाय कल्पते इति कथनं हास्यायतनमेव भविष्यति ।

सामान्यतः संस्कृताध्ययनरताः कालान्तरे उच्चशिक्षां प्राप्य (अनुसन्धानकार्याणि सम्पाद्य) स्पर्धात्मकपरीक्षाः (शिक्षकपात्रतापरीक्षाः) सम्मुखीकृत्य तत्र उत्तीर्णतां सम्पाद्य तदग्रे सहायकाचार्यपदवीमधिरोहन्ति स्म। इतः पूर्वं शिक्षकशिक्षा सर्वत्र अनिवार्या नासीत्। अधुना तु उच्चमाध्यमिकस्तरपर्यन्तं पाठयितुं प्रशिक्षितानामेव अवसरः न तु इतरेषाम्। स्वायत्तसंस्थासु अप्रशिक्षितानामपि शिक्षकाणां नियुक्तिः क्रियते । परं तादृशेषु उद्योगेषु स्थिरतायाः अभावः क्वचित्

अवलोक्यते। अन्ततोगत्वा एकेन वाक्येन वक्तव्यं चेत्तर्हि येन केन प्रकारेण केन्द्रसर्वकारीयं राज्यसर्वकारीयम् उद्योगं प्राप्य शिक्षकपदमलङ्कृत्य संस्कृतज्ञः धन्यतामनुभवति अनुभवेच्च इति भावना बहूनां संस्कृतमधीयानानां मनस्सु विद्यते। शिक्षणक्षेत्रमेकमेव संस्कृतच्छात्राणां कृते वर्तमानम् एकमेवाद्वितीयं क्षेत्रमिति भावना अद्यापि अस्ति। शिक्षकशिक्षामतिरिच्य नान्यः आजीविकाप्रदानक्षमः सुनिश्चितः व्यावसायिकपाठ्यक्रमः संस्कृतक्षेत्रे अद्यापि नास्ति इति भावना संस्कृतच्छात्रेषु वर्तते। यदि इयं भावना अग्रेऽपि स्थास्यति तर्हि यावन्तः बालाः तावन्तः संस्कृतशिक्षकाः सृष्टाः भवेयुः। एवं सृष्टानां संस्कृतशिक्षकाणां कृते उद्योगदानाय सृष्टिकर्ता अपि अशक्तो भवेत्। अतः मार्गान्तरं चिन्तनीयमेव। संस्कृतशिक्षणं किमर्थम् ? इति ये वदन्ति ते जानन्ति संस्कृतेः मूलं संस्कृतमेव इति। यथोक्तं सुभाषिते -

संस्कृतं संस्कृतेः मूलं
संस्कृते सकलाः कलाः।
संस्कृते सकलं ज्ञानं
संस्कृते किन्न विद्यते ।।

संस्कृतशिक्षणम् अवश्यमेव सर्वैः भारतीयैः आजीवनम् अध्येयमिति शिवम् ।

**परिशीलितग्रन्थसूची**

१.संस्कृतशिक्षणम् -२०११, डा।उदयशङ्करझा , सुरभारती प्रकाशन वाराणसी

२. संस्कृत साहित्य का विकास ,२००९, पद्मभूषण आचार्य बलदेव उपाध्याय,शारदा निकेतन , वाराणसी

३.संस्कृतशिक्षण ,२००६, डा।रामशकल पाण्डेय , श्री विनोद पुस्तक मन्दिर,आगरा -२

४. षड्दर्शनसारः -२०१२, डा.ए।वि।नागसम्पिगे,डा. शङ्करनारायण अडिग, पूर्णप्रज्ञसंशोधनमन्दिरम् , बेङ्गलूरु -२८

**********



ISSN: 2320-740X

# नित्यकर्मणामकरणस्य प्रत्यवायजनकत्वं नित्यकर्मणां प्रत्यवायाभावफलकत्वं च

**डा. एस्. वेङ्कटेशताताचार्यः**

सहायकाचार्यः, मीमांसविभागः

अपूर्वाधिकरणे[1] पूर्वपक्षे यागादिना स्वर्गादिफले जननीये यागादिध्वंसस्यैव अवान्तरव्यापारत्वमस्तु, अतश्च न अवान्तरव्यापारत्वेन अपूर्वकल्पनमपेक्षितमिति प्रतिपादिते, तत्खण्डनार्थं वार्तिके उक्तम् - नैवाभावस्य क्वचिदपि कारणत्वं दृष्टं, यदि तु सन्ध्यावन्दनाकरणादेः अभावात्मकस्य प्रत्यवायकारणत्वं दृष्टमिति उद्भाव्यते, तत् सन्ध्यावन्दनादिकालक्रियमाणस्य निमेषादिक्रियान्तरस्यैव प्रत्यवायजनकत्वाङ्गीकारेण अप्रयोजकमिति । उक्तं च -

**स्वकाले यदकुर्वंस्तु करोत्यन्यद्विचेतनः।**

**प्रत्यवायोऽपि तेनैव नाभावेन स जन्यते ॥ इति ।**

**न्यायसुधाकारेण चोक्तम्** – अभावस्य कारणत्वेऽपि भावसहकृतस्यैव तस्य कारणता, न शुद्धस्य, क्वचिदपि तथाऽदर्शनात् । अतः सन्ध्यावन्दनाकरणस्य विध्यवज्ञारूपभावान्तरसहकृतस्यैव प्रत्यवायजनकत्वमिति ।

अत्र **खण्डदेवाभिप्रायः** – अभावस्य न कारणतेति वक्तुं न शक्यते । अनुपलब्धेरभावात्मिकाया अभावज्ञानकारणत्वस्य अङ्गीकारात् । सन्ध्यावन्दनाकरणस्य अभावरूपस्य प्रत्यवायजनकत्वाच्च । यस्तु सन्ध्यावन्दनादिकालकृतक्रियान्तरस्य विध्यवज्ञासहकृताकरणस्य वा प्रत्यवायजनकत्वाङ्गीकारः, स नावश्यकः केवलस्यापि अभावस्य कारणत्वाङ्गीकारे बाधकाभावात् इति ।

[1] पूर्वमीमांसाधिकरणम् – २-१-३

अतः सिद्धान्ते कौस्तुभादौ युक्त्यन्तरैरेव अपूर्वं साधितं खण्डदेवाचार्यैः, न तु अभावस्य कारणत्वासम्भवयुक्त्या ।

ननु अभावस्य कारणत्वाङ्गीकारे विहितकालभिन्नकालेऽपि सन्ध्यावन्दनाद्यकरणस्य सत्त्वात् तस्मादप्यभावात् प्रत्यवायोत्पत्तिः स्यादिति चेन्न । सन्ध्यावन्दनादिकालकृतक्रियान्तरस्य प्रत्यवायजनकत्वमिति पक्षे यथा न शुद्धक्रियान्तरस्य प्रत्यवायजनकत्वं किन्तु सन्ध्यावन्दनाद्यर्थं विहितो यः कालः तत्कालकृतत्वरूपविशेषणविशिष्टस्यैव निमिषितादिक्रियान्तरस्य प्रत्यवायजनकत्वं स्वीक्रियते, अन्यथा कालान्तरकृतनिमिषितादिनापि प्रत्यवायापत्तेः, तथैव सन्ध्यावन्दनाद्यकरणस्य प्रत्यवायजनकत्वपक्षेऽपि सन्ध्यावन्दनाद्यर्थं विहितो यः कालः तत्कालवृत्तित्वविशिष्टस्यैव सन्ध्यावन्दनाद्यकरणस्य प्रत्यवायजनकत्वाङ्गीकारात् न कालान्तरे विद्यमानात् सन्ध्यावन्दनादिकृत्यभावात् प्रत्यवायापत्तिः । एवं अपूर्वाधिकरणकौस्तुभोक्तरीत्या अभावस्य कारणत्वं विचारितम् ।

**प्रत्यवायाभावस्य सन्ध्यावन्दनादिजन्यत्वविचारः –**

एवमभावस्य कारणत्वे विचारिते प्रसङ्गात् तस्य कार्यत्वमपि सम्भवति वा इति यावज्जीवाधिकरणस्थकौस्तुभग्रन्थमाधृत्य विचार्यते । तत्र हि सन्ध्यावन्दनादिनित्यकर्मणां करणस्य किं फलमिति विचारः एवं कृतः नित्यनैमित्तिकयोर्विधिः नित्यनैमित्तिकाकरणे प्रत्यवायं बोधयन् तत्र पुरुषप्रवृत्तिं भावयतीति प्रत्यवायपरिहार एव तत्र अनुष्ठानप्रयोजक इति निर्विवादम् । परन्तु "अहरहः सन्ध्यामुपासीत", यावज्जीवमग्निहोत्रं जुहोती"त्यादिवाक्ये अर्थभावनायां भाव्यत्वेन किञ्चित् फलमन्वेति उत नेति चिन्तायां अकरणे प्रत्यवायभियैव पुरुषप्रवृत्तिसिद्धौ भाव्यापेक्षाभावेन न किञ्चित् भाव्यत्वेन अन्वेति, अतः करणस्य न किञ्चित् फलमिति **प्राभाकराः** । भाट्टास्तु भावनास्वाभाव्येन भाव्यकरणेतिकर्तव्यताकांक्षाः भवन्त्येव । अतः अकरणे प्रत्यवायज्ञानस्यैव प्रवृत्तिप्रयोजकत्वेऽपि प्रवृत्तौ


ISSN: 2320-740X

अप्रयोजकमपि किञ्चिद्भाव्यं वक्तव्यमेवेत्याहुः । तत्र **"धर्मेण पापमपनुदति"**[1] इत्यादिश्रुतिपर्यालोचनया नित्यनैमित्तिककर्मणोः पापक्षयभाव्यकत्वं स्वीक्रियते वार्तिककारैः कौस्तुभकारैश्च । न्यायसुधाकृता "प्रत्यवायप्रागभावपरिपालनमेव भाव्यमिति यदुक्तं तत् कौस्तुभे एवं खण्डितम् - नित्यकर्मानुष्ठाने कदापि प्रत्यवायानुत्पत्तेः तदभावस्य प्रागभावत्वं न सम्भवतीति प्रत्यवायप्रागभावपरिपालनं फलमिति वक्तुं न शक्यते । प्रत्यवायात्यन्ताभावस्य तु नित्यत्वात् न फलत्वम् । प्रत्यवायप्रागभावपरिपालनं नाम प्रत्यवायरूपप्रतियोग्यनुत्पत्तिरेवेति कथनेऽपि अनुत्पत्तेः उत्पत्त्यभावरूपाया नित्यत्वेन फलत्वासम्भवः । अतः भाव्यान्तरासम्भवेन पापक्षयभाव्यकत्वमेव कल्पनीयमिति । एवं कौस्तुभे एव नित्यकर्मणां विश्वजिन्न्यायेन स्वर्गफलकत्वमपि निरस्तम् । "धर्मेण पापमपनुदति" इति श्रुत्या सामान्यतः "पूर्वां सन्ध्यां जपन् विप्रो नैशमेनो व्यपोहति" इति स्मृत्या "यद्रात्र्या पापमकार्षम्"[2] इति मन्त्रलिङ्गाच्च विशेषतश्च पापक्षयार्थत्वस्य प्रतीयमानत्वेन आर्थवादिकप्रतिष्ठाफलोपस्थितौ रात्रिसत्रस्येव नित्यकर्मणामपि स्वर्गफलकत्वकल्पनाया अयुक्तत्वात् ।

अत्रेदं वक्तव्यम् – "धर्मेण पापमपनुदति" इत्यादिदूरस्थवाक्योपस्थितपापक्षयानुरोधेन विश्वजिन्न्यायप्रवृत्त्यनङ्गीकारे विश्वजित्यपि तथैव पापक्षयभाव्यकत्वकल्पनापत्तिः । न च पापक्षयत्वापेक्षया विजातीयसुखत्वरूपस्वर्गत्वस्य लघुत्वात् कार्यतावच्छेदकलाघवेन विश्वजिति स्वर्ग एव फलमिति विश्वजिदधिकरणे[3] भाट्टदीपिकोक्तं युक्तम् नित्यकर्मणामपि तर्हि कार्यतावच्छेदकलाघवानुरोधेन स्वर्गफलकत्वापत्तेः । न च नित्यकर्मसु "धर्मेण पापमपनुदति" इति वाक्येन उपस्थितत्वात् गुरुभूतोऽपि पापक्षयः फलमिति स्वीक्रियत इति वाच्यम् । तत्र धर्मपदेन श्रुतनिमित्तककर्मणामेव ग्रहणमित्यत्र नियामकाभावेन विश्वजित्यपि तेन वाक्येन पापक्षयफलस्य उपस्थापयितुं शक्यत्वात् । वस्तुतस्तु

[1] तैत्तिरीयारण्यकम् १०/६ प्रपाठके

[2] तैत्तिरीयारण्यकस्य १०/६ प्रपाठके

[3] पूर्वमीमांसाधिकरणम् ४-३-७

पापक्षयवाक्यस्य दूरस्थत्वात् तद्वाक्योपस्थितफलानुरोधेन रात्रिसत्रवत् न स्वर्गफलकल्पनमिति कल्पना क्लिष्टैव, रात्रिसत्रे प्रतिष्ठायाः सन्निहितत्वेन वैषम्यात् ।

न च "पूर्वां सन्ध्यामि"[1] ति स्मृत्या "यद्रात्र्या" इति मन्त्रेण च विशिष्य सन्ध्यावन्दने पापक्षयस्य उपस्थितत्वात् तस्य भाव्यत्वोपपत्तिरिति वाच्यम् । तथा सति पूर्वोक्तवचनानुरोधेन रात्रिकृतपापमात्रक्षयस्य प्रातःसन्ध्यावन्दनभाव्यतापत्तेः । विशिष्य यत्रैतादृशं वचनं न श्रुतं तादृशस्य नित्यकर्मणः पापक्षयभाव्यकत्वासम्भवापत्तेश्च । न चात्र उद्देश्यविशेषणत्वेन पापे रात्रिसम्बन्धस्य अविवक्षा उपपादयितुं शक्या । स्मृतिमन्त्रानुरोधेन विशिष्टस्यैव फलत्वप्रतीतेः तदनुरोधेन रात्रिकृतपापक्षयं भावयेदित्येवं समस्तस्य भाव्यबोधकस्य पदस्य कल्पनेन उद्देश्यविशेषणविवक्षासम्भवात् । वस्तुतस्तु सूक्तवाकन्यायेन प्राशनाङ्गभूतस्य "यद्रात्र्या पापमि"ति मन्त्रवाक्यस्य लिङ्गेन प्राशनस्य रात्रिकृतपापक्षयरूपमानुषङ्गिकफलं सिद्ध्यति । तेन तदङ्गकस्य सन्ध्यावन्दनस्यापि "पूर्वां सन्ध्यामि"ति स्मृत्या नैशैनोव्यपोहकत्वेन स्तुतिः क्रियते ।

नित्यनैमित्तिककर्मसु निमित्तश्रवणबलात् प्रत्यवायाभावस्यैव भाव्यत्वं वक्तव्यम् । तत्र विधिना अकरणे प्रत्यवायानुमित्या प्रवृत्तिसिद्धिः इत्याश्रयणे पुनः भावनायाः भाव्यापेक्षा नैव जायते । यत्तु भावनास्वाभाव्येन आकाङ्क्षात्रयं भवत्येवेति , तन्न, स्वसिद्ध्यर्थं हि भावना अंशत्रयमपेक्षते, अकरणे प्रत्यवायभियैव आत्मलाभे नैव भावना भाव्यमाकाङ्क्षेत् । अतः विधिना नित्यकर्मणः प्रत्यवायपरिहारजनकत्वमेव अनुमीयते । अकरणे प्रत्यवायानुमितेर्वा करणे प्रत्यवायपरिहारे पर्यवसानम् । अतः प्रत्यवायपरिहार एव भाव्यः ।

ननु अत्यन्ताभावस्य प्रागभावस्य वा अजन्यत्वेन कथं तद्रूपस्य प्रत्यवायपरिहारस्य भाव्यत्वमिति चेदुच्यते – स्वरूपतः प्रत्यवायाभावस्य अजन्यत्वेऽपि सन्ध्यावन्दनादिविहितकालवृत्तित्वविशिष्टत्वेन तस्य

---

[1] मनुस्मृतिः अ- २- श्लो - १०२


ISSN: 2320-740X

जन्यत्वसम्भवात् । एवं रूपेण भाव्यलाभेन नित्यकर्मणां प्रयोगविधेरपि पर्यवसाने जाते, विश्वजिदधिकरणे भाट्टदीपिकोक्तरीत्या क्लृप्तप्रयोगविधीनां सर्वेषामेव कर्मणां विविदिषावाक्येन विविदिषासाधनत्वेन विनियोगः यथा क्रियते, तथा "धर्मेण पापमपनुदति" इति वाक्येन विश्वजित्काम्यदर्शपूर्णमासनित्यकर्मसाधारण्येन पापक्षयोद्देशेन विनियोगान्तरं क्रियते, न तु नित्यकर्मणामेवेति नित्यकर्मणां पापक्षयार्थत्वस्यापि न हानिः इति ।

**********

## सत् कारणम्

**कृ. वेङ्कटेशमूर्तिः**

समन्वयकः, मुक्तस्वाध्यायपीठम्

ब्रह्म जगत्कारणम्। ब्रह्म च सत्। तस्मात् सतः कारणात् तदभिन्नत्वेन कार्यं जगदिदमुत्पद्यते। उत्पत्तेः प्राक् कार्यं कारणात्मना अवर्तत इति सत्कारणवादिनो वेदान्तिनः अभिप्रयन्ति। वेदान्तिमते असत् कारणं न भवितुमर्हति। अभावकारणवादः वेदान्तिभिर्निराकृतः।

### अभावकारणवादखण्डनम्

असत्कार्यवादिनां मते असतः कारणात् (अभावमात्रात्) जगदिदमुदपद्यत। तदिदं छान्दोग्योपनिषदि पूर्वपक्षत्वेन इत्थमुक्तम् - "तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत"[1] इति। अर्थात् केचित् प्रागुत्पत्तेः जगदिदं सदभाव-मात्रम् एकमेवाद्वितीयम् आसीदित्याहुरित्यर्थः। अभावकारणवादिनो वैनाशिकाः बौद्धाः सदत्यन्ताभावमात्रं हि प्रागुत्पत्तेः

[1] छा०उ.

तत्त्वमङ्गीकुर्वन्ति, न तु तदभावप्रतिद्वन्द्वि वस्त्वन्तरम्।[1] इति। अभावकारणवादं खण्डयद्भिः वेदान्तिभिरुच्यते - प्रागुत्पत्तेः भावस्य यः अभावः तन्मात्रं तत्त्वम् अभ्युपगच्छतां वैनाशिकानां पक्षे प्रागुत्पत्तेः इदम् असत् एकमेव अद्वितीयं च आसीत् इति सङ्ख्यासम्बन्धस्य कालसम्बन्धस्य च उपन्यासः न युक्तः[2] |

ननु अन्यापोहस्य शब्दार्थत्वे सति अपोह्यवस्तुनः तदर्थत्वे वा असत् इति शब्दस्य अर्थसिद्धिः? आकृतेश्च मीमांसकप्रक्रियया शब्दार्थत्वे सति सृष्टेः प्राक् सर्वेषां वस्तूनाम् अभावेन आकारस्यापि अभावात् 'एकम्', 'अद्वितीयम्' इति पदयोः आकृतिवाचकत्वायोगात् वाक्यार्थस्यैव अनुपपत्तिः इत्याक्षिप्ते - नैष दोषः, सद्ग्रहणनिवृत्तिपरत्वात् वाक्यस्य। सदित्ययं तावच्छब्दः सदाकृतिवाचकः, एकमेवाद्वितीयम् इदमासीत् इत्येते शब्दाः सच्छब्देन समानाधिकरणाः। तत् नञ् सद्वाक्ये प्रयुक्तः सद्वाक्यमेव अवलम्ब्य सद्वाक्यार्थविषयां बुद्धिं निवर्तयति यथा अश्वारूढः अश्वावलम्बनः अश्वं तदभिमुखविषयात् निवर्तयति तद्वत्, न पुनः सद्भावमेव अभिधत्ते। अतः पुरुषस्य विपरीतग्रहणनिवृत्त्यर्थपरम् इदम् असदेवेत्यादिवाक्यं प्रयुज्यते। तस्मात् असतः सर्वाभावरूपात् विद्यमानम् अजायत **इति वैनाशिकाः**।

तत्रोच्यते सत्कारणवादिभिः **सिद्धान्तिभिः**— नैतद्युक्तम्, असतः सदभावाद् वा सज्जायत इत्यस्य प्रमाणाभावात् दृष्टान्ताभावात्। ननु बीजसत्तायां नाङ्कुरोद्गमः। विनष्टात् बीजादेव अङ्कुरः उत्पद्यते, विनष्टात् क्षीरात् दधि, विनष्टात् मृत्पिण्डाच्च घटः। एवं नानुपमृद्य प्रादुर्भावात् कूटस्थात् कारणात् कार्योत्पत्तिस्वीकारे अविशेषात् सर्वतः सर्वमुत्पद्येत। न तु एवं भवतीति स्वरूपोपमर्दमन्तरेण कस्यचित् कूटस्थस्य वस्तुनः कारणत्वासम्भवात् अभावग्रस्तेभ्यः बीजादिभ्यः अङ्कुरादीनाम् उत्पत्तिः स्वीकरणीया। तथा च अभावात् भावोत्पत्तिः इति चेत् उच्यते— किम् अङ्कुरोत्पत्तौ बीजावयवाः उपमृद्यन्ते, उत वा

---

[1] द्र०शा०वे०त०मी०पृ० 39

[2] द्र० तत्रैव पृ० 40-44



ISSN: 2320-740X

बीजाङ्कुरसंस्थानम्? नाद्यः बीजसंस्थानविशिष्टानाम् अङ्कुरोद्गमे अपि अङ्कुरे अनुवृत्तिदर्शनात् न तेषामुपमर्दः अङ्कुरजन्मनि। स्थिरभावानामेव सुवर्णादीनां रुचकादिकार्येषु अनुगतानां कारणत्वदर्शनात्। येषां च बीजादीनामुपमर्दः वैनाशिकैरभ्युपगम्यते तेषामपि वस्तुतः न स्वरूपोपमर्दः, अनुपमृद्यमान - बीजावयवानाम् अङ्कुरादिषु अनुगतानाम् एव कारणत्वोपलम्भात्। एवं सद्भ्यः एव सुवर्णादिभ्यः सतां रुचकादीनामुत्पत्तिः दृश्यते, असद्भ्यश्च शशविषाणादिभ्यः सदुत्पत्त्यदर्शनात् अयमभावकारणवादः नोपपद्यते। यदि तु बीजाङ्कुरसंस्थानविशेषस्य नाशाद् अङ्कुरोत्पत्तिरिति द्वितीयः पक्षः अवलम्ब्यते तर्हि बौद्धानामेव स्वाभ्युपगमविरोधः। न हि तैः अवयवातिरिक्तः अवयवी स्वीक्रियते। तथा च बीजाङ्कुरसंस्थानं बीजावयवव्यतिरेकेण न वस्तुभूतं यत् अङ्कुरजन्मनि उपमृद्यते। यदि तावदुच्यते - बीजाङ्कुरसंस्थानमिदं न परमार्थवस्तु, अपि तु संवृतिमूलकं लौकिकबुद्धिमूलकं वा (संवृतिर्नाम लौकीकी बुद्धिः, संव्रियते आच्छाद्यते तत्त्वम् अनया इति व्युत्पत्तेः) इति; तत्रायं प्रश्नः - संवृतिः अभावः उत भावः? नाद्यः भवितुमर्हति, भावस्य अभावात् उत्पत्तौ दृष्टान्ताभावात्, संवृतेः - अवस्तुत्वेन च सत्त्वासाधकत्वात्। नापि द्वितीयः भवितुमर्हति, संवृतेः भावत्वे न अभावात् अङ्कुरोत्पत्तिः, बीजावयवेभ्यः हि अङ्कुरोत्पत्तिः। तथा च बीजावयवानाम् अङ्कुराकारपरिणामसिद्धेः दृष्टान्ताभावः अभावकारणवादभङ्गश्च। अवयवाः अपि उपमृद्यन्ते इति चेत् न, यथा वैनाशिकानां बीजसंस्थानरूपः अवयवी नास्ति तथा बीजसंस्थानरूपाः अवयवाः अपि न सन्ति इति तेषमप्युपमर्दः नोपपद्यते। बीजावयवानामपि सूक्ष्मावयवाः, तदवयवानाम् अपि अन्ते सूक्ष्मतरावयवाः इत्येवं प्रसङ्गस्य अनिवृत्तेः सर्वत्र उपमर्दानुपपत्तिः। सद्बुद्ध्यनुवृत्तेः सत्त्वानिवृत्तेश्च सद्वादिनां सत एव उत्पत्तिः सिद्ध्यति। न हि असतः सदुत्पत्तौ असत्कारणवादिनां दृष्टान्तो वर्तते। सत्कारणवादे तावत् अस्ति दृष्टान्तः - मृत्पिण्डात् घटोत्पत्तेः मृद्भावे एव घटसद् भावात्, मृदभावे च घटाभावात् इति।

यदि च ज्ञानमात्रास्तित्ववादिनो बौद्धाः वदेयुः— मृद्बुद्धिः घटबुद्धेः कारणमस्ति इति, तदानीमपि न हि अभावात् कार्योत्पत्तिः, किन्तु विद्यमानायाः मृद्बुद्धेः एव विद्यमानां घटबुद्धिं प्रति कारणत्वम् इति न असतः सदुत्पत्तिः।

तथा च - न हि अभावात् भावः उत्पद्यते। यदि अभावात् भाव उत्पद्येत तर्हि अभावत्वस्य सर्वस्य अविशेषात् कारणविशेषात् कार्यविशेष उत्पद्यत इति वक्तुं न शक्येत। तथा हि बीजादीनां ध्वंसे यः अभावः, शशविषाणादीनां च यः अभावः तयोरुभयोरपि निःस्वभावत्वविशेषात् न कश्चिद् विशेषो वर्तते। निर्विशेषस्य तस्य अभावस्य कारणत्वे स्वीकृते एतादृशस्य अभावस्य सर्वत्र विद्यमानत्वात् सर्वत्र सर्ववस्तूनाम् उत्पत्तिः स्यात्। तथा च शशविषाणादिभ्यः अपि अङ्कुरादयः जायेरन्; क्षीरादेव च दधि सम्भवति इत्येवं कारणविशेषाभ्युपगमः अनर्थकः स्यात्। अपि च अभावादेव घटोत्पत्तिः स्यात् चेत् घटार्थिना मृत्पिण्डः नोपादीयेत।

यदि तावत् उत्पलादीनाम् नीलत्वादिः यथा विशेषः तथा अभावस्यापि बीजाभावः मृत्पिण्डाभावः इत्येवं कश्चिद्विशेषः अभ्युपगम्यते, तर्हि विशेषवत्वादेव अभावस्य भावत्वं प्रसज्येत।

न हि अभावः कस्यचिदुत्पत्तिहेतुः स्यात्, अभावत्वात् शशविषाणादिवत्। अभावात् भावोत्पत्तौ, अभावान्वित्वे सर्वं कार्यं स्यात्, कारणस्य कार्ये अन्वयात्, तथा च उत्पन्ने घटादौ अपि अभावबुद्ध्यनुवृत्तिः प्रसज्येत। परन्तु नैवं दृश्यते, सर्वस्य वस्तुनः स्वेन स्वेन रूपेण भावात्मनैव उपलभ्यमानत्वात्। न हि मृदन्विताः घटादयः भावाः तत्त्वादि-विकारत्वेन उपलभ्यन्ते, मृद्विकाराः एव मृदन्विताः घटादयः भावाः उपलभ्यन्ते।

अपि च अभावात् भावोत्पत्तिरिति अभ्युपगम्यमाने उदासीनानां प्रयत्नशून्यानां जनानामपि अभिमतसिद्धिः स्यात्, अभावस्य सर्वत्र सुलभत्वात्। तथा च क्षेत्रकर्मणि अप्रवृत्तस्यापि कृषीवलस्य


ISSN: 2320-740X

सस्यलाभः स्यात्। स्वर्गापवर्गलाभार्थं च न कश्चिद् यतेत। तथा च पारमर्शं सूत्रम्— 'नासतोऽदृष्टत्वात्' इति।

ननु बीजध्वंसानन्तरमेव अङ्कुरोत्पत्तिर्भवतीति सर्वैः दृश्यते। तथा च कथं बीजाभावस्य अङ्कुरोद्गमं प्रति न उपादानकारणत्वमिति चेत्, उच्यते — बीजध्वंसस्य निमित्तकारणत्वं सहकारिकारणत्वं वा अत्र स्वीकरणीयम्, न तु उपादानकारणत्वम्, अभावस्य भावं प्रति उपादानत्वासम्भवात्। भावभूतम् अङ्कुरं प्रति भावानां बीजावयवानाम् एव उपादानकारणत्वम्। न च उत्पत्तेः प्राक् कार्यस्य अभावात् कार्यस्य प्रागभावः एव कार्यं प्रति उपादानकारणम् इति वाच्यम्, प्रागभावस्य अनादित्वेन कार्यवर्गस्यापि अनादित्वप्रसङ्गात्, निर्विशेषात् प्रागभावात् विचित्रशक्तियुक्तस्य उत्पत्तेः अनुपपत्तेश्च।

ननु दृष्टान्ताभावादेव सतः सदुत्पत्तिः, न हि घटान्तरोत्पत्तिः दृश्यत इति चेत्, उच्यते — सत्यम्, न सतः सदन्तरमुत्पद्यते। सदेव संस्थानान्तरेण (अवस्थान्तरेण) अवतिष्ठते यथा सर्पः कुण्डली भवति, यथा च मृत्पिण्डः घटादिप्रभेदेन विराजते।

यदि च शङ्का स्यात् — कार्यम् उपादानाद् भिद्यते, उपादानविलक्षण-बुद्धिविषयत्वात्, यथा अश्वबुद्धिविलक्षणविषयः महिषः ततः भिद्यते इति तत्रैवं समाधीयते - मैवम्, पिण्डघटादीनाम् इतरेतरव्यभिचारे अपि मृत्त्वाव्यभिचारात्। यद्यपि घटः पिण्डं व्यभिचरति पिण्डश्च घटं, तथापि पिण्डघटौ मृत्त्वं न व्यभिचरतः। तस्मात् मृद्रूपौ पिण्डघटौ। व्यभिचरति तु गौः अश्वम्, अश्वो वा गाम्। तस्मात् मृदादिसंस्थानमात्रं घटादयः। एवमेव सत्-संस्थानमात्रमिदं सर्वम् इति, उत्पत्तेः च प्राक् सदेव इति च वक्तुं युक्तम्, वाचारम्भणमात्रत्वात् विकारसंस्थानमात्रस्य (उत्पन्नस्य)।

**सदेव कारणम्**

एवं च कारणम् असदिति ब्रुवताम् असत्कार्यवादिनां तु मतं खण्डितम्। अद्वैतमते तु कारणं सदेव। तच्च ब्रह्म। तस्माद् ब्रह्मणः सतः नामरूपात्मकमिदं जगुददपद्यत। अतः सत्कार्यभूतमिदं जगत् इत्युच्यते सत्कारणवादिभिः वेदान्तिभिः। उत्पत्तेः प्राक् कार्यं कारणे सदेव भवति। इदं जगत् सत्कार्यम् इत्यतः इदं सर्वं सृष्टेः प्राक् सद्रूपेण आसीदिति उच्यते। तथा च श्रुतिः—

'सदेव सोम्येदमग्र आसीद् एकमेवाद्वितीयम्'[1] इति | यदिदं नामरूपक्रियावत् विकृतं जगत् दृश्यते, तद् उत्पत्तेः प्राक् सदेव आसीदित्यर्थः। तत्र 'सत्' इत्यनेन वेदान्तप्रतिपाद्यं ब्रह्म एव अभिप्रेतम्। तदुक्तं भगवत्पादैः—"सदित्यस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतमेकं निरञ्जनं निरवयवं विज्ञानं यदवगम्यते सर्ववेदान्तेभ्यः"[2] (छा०शा०भा० 6.2.1) इति। यच्च सद् आसीत् तच्च 'एकमेवाद्वितीयम्।'

अत्र एवशब्दः अवधारणार्थः। यदिदं जगत् नामरूपक्रियावत् विकृतम् उपलभ्यते, तत् सदेवासीत्, इति आसीच्छब्देन सम्बन्ध्यते। तदा सृष्टेः प्राक् स्वकार्यभूतम् अन्यत् किमपि नासीत्। अतः एकम् अद्वितीयम् इति चोच्यते। 'एकमेवाद्वितीयम्' इत्येतत् सत्स्वरूपे त्रिविधभेदराहित्य-निरूपणपुरस्सरं तस्य एकत्वं ज्ञापयति। तथा हि भेदः त्रिविधः - विजातीयवस्तुभ्यो भेदः, सजातीयवस्तुभ्यो भेदः, अवयवान्तरेभ्यो भेदः स्वगतभेदः इति। त्रिविधभेदः विवृतः पञ्चदश्यां —

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः।
वृक्षान्तरात् स्वजातीयो विजातीयः शिलादिभिः॥[3] इति

सर्वकारणकारणभूते सद्रूपे ब्रह्मणि तु तादृशं (उपरिविवृतं) भेदत्रयं नास्ति। तथा च चेतनात्मकस्य सतः विजातीयभेदरहितत्वात् सद्व्यतिरिक्तम् अचेतनं प्रकृत्यादिकं किमपि सृष्टेः प्राक् नासीत्।

---

[1] छा०शा०भा० 6.2.1

[2] तत्रैव.

[3] पञ्चदशी० 2.20


ISSN: 2320-740X

सजातीयभेदरहितत्वात् ब्रह्मान्तरं ब्रह्मव्यतिरिक्तात्मानः वा नासन्। स्वगतभेदरहितत्वात् दर्शनान्तरकारैरुच्यमानाः चिदचिद्रूपाः पदार्थाः च नासन् इत्यवगम्यते। सजातीय-विजातीय-स्वगत-वस्त्वन्तररहितं ब्रह्म एव सृष्टेः प्रागासीत् इत्यर्थः।

ननु वेदान्तिमते कार्यकारणयोरनन्यत्वात्, जगतश्च सत्कार्यत्वात्, सद्विवर्तभूतमिदं जगदपि सदित्येव वक्तव्यं स्यात्। अपि च सृष्टेः प्राक् सद् आसीत् इत्यनेन इदानीम् इदं सद्भिन्नं किञ्चित् सञ्जातम् इति शङ्कायाम् उच्यते - इदानीमपि यद्यपि अस्य जगतः ब्रह्मविवर्तत्वेन अधिष्ठानरूप-कारणात्मना सन्मात्रत्वमेव, तथापि नामरूपात्मकं परिवर्तनशीलं ज्ञानबाध्यं यद्रूपं जगतः इदानीमुपलभ्यते तत् केवलं व्यावहारिकं, न तु पारमार्थिकम्। अधिष्ठानात्मना जगत् इदानीमपि सदेव, किन्तु इदानीं नामरूपविशेषणवद् इदंबुद्धिविषयं च भवति, सृष्टेः पूर्वं तु केवलसच्छब्दबुद्धि-मात्रगम्यम् इदमासीत् इत्युच्यते। शङ्करभगवत्पादानां छान्दोग्यभाष्यपङ्क्तिरिह द्रष्टव्या-

"कदा सदेवेमासीदित्युच्यते ? अग्रे जगतः प्रागुत्पत्तेः उत नेदानीमिदं सद्येनाग्र आसीदिति विशेष्यते ? न। कथं तर्हि विशेषणम् ? इदानीमपीदं सदेव किन्तु नामरूपविशेषणवदिदंशब्दबुद्धिविषयं चेतीदं च भवति। प्रागुत्पत्तेस्त्वग्रे केवलसच्छब्दबुद्धिमात्रगम्यमेवेति सदेवेदमग्र आसीदित्यवधार्यते।" इति। यथा सुषुप्तिकाले सदपि वस्तु इदंशब्दबुद्धिगोचरं न भवति, तथा उत्पत्तेः प्राक् सदपि जगत् नामवत्त्वेन रूपवत्त्वेन च इदमिति न व्यवहर्तुं शक्यम्। यथा सुषुप्तेः उत्थितः सुषुप्तिकालीन-सत्त्वं स्मृत्या अवगच्छति, तथैव उत्पत्तेः प्रागपि सत्त्वमात्रम् आसीदिति अभिप्रायः अवगन्तव्यः। यथा च लोके पूर्वाह्णे घटादि-सिसृक्षुणा कुलालेन मृत्पिण्डं प्रसारितमुपलभ्य ग्रामान्तरं गत्वा प्रत्यागतो जनः अपराह्णे तत्रैव घटशरावाद्यनेकवस्तुजातं कार्यमुपलभ्य इदं घटशरावादिकं पूर्वाह्णे केवलं मृदेव आसीदिति अभ्युपगच्छति तथा इहापि उत्पत्तेः प्राक् सदेवासीदिति अभ्युपेयम्।

एवं च **जगत्कारणं ब्रह्म स्वगत-सजातीय-विजातीयभेदरहितं सत्** इति स्पष्टम्।

अस्तु नाम ब्रह्म जगत्कारणम्। तस्य जगत्सृष्ट्या किं प्रयोजनं सिद्ध्येत्? ब्रह्म तु परिपूर्णम्। परमात्मा तावत् नित्यतृप्तः। तथा सति ईक्षापूर्वकसृष्ट्या ब्रह्मणः किं प्रयोजनम्? प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत इति न्यायेन चेतनः परमात्मा स्वात्मप्रयोजनमुद्दिश्य जगत्सृजति इत्युक्तौ परमात्मनः नित्यतृप्तत्वं बाध्येत। अतः सृष्टिकर्मणि न किमपि प्रयोजनं कल्पनीयम्। प्रयोजनाभावे च प्रवृत्त्यभावोऽपि स्यात्। अथ उन्मत्त इव आत्मप्रयोजनं विनैव परमात्माऽपि प्रवर्तते इत्युच्येत तर्हि सर्वज्ञत्वं परमात्मनः श्रूयमाणं बाध्येत इत्यादिशङ्का प्रसङ्गवशात् परिहृतः 'लोकवत्तु लीलाकैवल्यम्' इति सूत्रभाष्ये।[1] तत्रोच्यते — यथा लोके कस्यचित् आप्तैषणस्य राज्ञो राजामात्यस्य वा लीलाव्यतिरिक्तं किञ्चित् प्रयोजनम् अनभिसन्धायैव केवलं लीलारूपाः प्रवृत्तयः क्रीडाव्यवहारेषु भवन्ति। यथा च उच्छ्वास-प्रश्वासादयः अनभिसन्धाय बाह्य किञ्चित् प्रयोजनं स्वभावादेव सम्भवन्ति, एवमीश्वरस्यापि किञ्चित् प्रयोजनान्तरम् अनपेक्ष्यैव स्वभावादेन केवला लीलारूपा प्रवृत्तिर्भविष्यति। न हि ईश्वरस्य प्रयोजनान्तराविष्करणं न्यायतः श्रुतितो वा सम्भवति। न च स्वभावः प्रयोजनमपेक्षते। यद्यपि अस्माकमियं जगद्बिम्बरचना गुरुतरसंरम्भ इवाभाति, तथापि परमेश्वरस्य लीलैव केवला इयम्, तस्य अपरिमितशक्तित्वात्। यदि नाम लोकेषु लीलासु अपि किञ्चित् सूक्ष्मम् आनन्दलाभादिकं प्रयोजनम् उत्प्रेक्षेत, तथापि नैवात्र सृष्टिकर्मणि किञ्चित् प्रयोजनम् उत्प्रेक्षितुं शक्यते, आप्तकामश्रुतेः। नापि अप्रवृत्तिप्रसङ्गः, सर्वज्ञत्वश्रुतेः। न चेयं सृष्टिश्रुतिः परमार्थविषया अविद्याकल्पित-नामरूपव्यवहारगोचरत्वात् ब्रह्मात्मभावप्रतिपादनपरत्वात् च इत्येतदप्यत्र स्मर्तव्यम् इति शम्।

**********

[1] ब्र०सू०शा०भा०2.1.33


ISSN: 2320-740X

# अथर्ववेदे आरोग्यविमर्शः

**डा. दयानिधिशर्मा**

**सहायकाचार्यः, शिक्षाशास्त्रविभागः**

विश्वसाहित्यपरम्परायाः प्रथमः ग्रन्थः ऋग्वेदः वर्तते । वैदिकी परम्परा जीवनमूल्यानां विषये सम्पूर्णविश्वं दिशति । वेदानाम् अपौरुषेयत्वम् अङ्गीक्रियते । भारतीयानां समग्रम् आचारशास्त्रं प्रारम्भिकस्तरे वेदाः एव वर्तन्ते । अनन्तरं धर्मशास्त्रीयसन्दर्भः आचारशास्त्रस्य सरलतमं रूपं सर्वैः ज्ञातम् । श्रुतेः जीवनसम्बद्धं तत्त्वं सर्वेषां जनानां हिताय आदौ महर्षिणा मनुना निगदितम् ;

**यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।**

**स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः[1] ॥**

युगधर्मानुसारं मनुष्याणाम् आरोग्यविचारः क्रियते । कालस्य कुटिला गतिः । शनैः शनैः मनुष्याणाम् आयुः क्षीणत्वं याति । अनेन सह सर्वविधसाधनैः स सम्पन्नो भूत्वा अपि क्रमशः अभावग्रस्तो भवति । अयमेव कालस्य प्रभावः वर्तते ;

| **युगम्** | | **आयुषः कालः (वर्षेषु)** |
|---|---|---|
| कृतयुगे | - | 400 |
| त्रेतायुगे | - | 300 |
| द्वापरयुगे | - | 200 |
| कलियुगे | - | 100 |

वेदेषु प्रोक्तः मनुष्याणाम् आयुः , कर्मणां फलानि तथा च विप्राणां ऋषीणां च प्रभावाः युगानुसारं भवन्ति । यथा विविधशास्त्रीयग्रन्थेषु अस्मिन् विषये पृथक् – पृथक् रूपेण विचारः कृतो वर्तते ;

**दशवर्षसहस्राणि रामो राज्यमकारयत[2] ।**

**शतायुर्वै पुरुषः[3] ।**

**वेदोक्तमायुर्मानामाशिषश्चैव कर्मणाम् ।**

**फलन्त्यनुयुगं लोके प्रभावश्च शरीरिणाम्[4] ॥**

कृतयुगे भिन्नधर्माः भवन्ति । त्रेतादिष्वपि युगापचयानुरूपेण धर्मवैलक्षण्यमिति । त्रेतायां ज्ञानस्य द्वापरे यज्ञस्य कलौ च दानस्य प्राधान्यं महर्षिणा मनुना निगदितम् ;

**तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।**

**द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे[5] ॥**

आयुर्वेदे शरीरेन्द्रियसत्त्वात्मा संयोगे आयुरिति कथितम् । महर्षिणा चरकेण स्वविचारः अधोलिखितरूपेण प्रकटितः ;

**शरीरेन्द्रियसत्त्वात्मा संयोगे धारि जीवितम् ।**

**नित्यगश्चानुबन्धश्च पर्यायैरायुरुच्यते[6] ॥**

**वेदः आयुर्वेदश्च**

आयुर्वेदः प्रामुख्येन आयुषः हिताहितं चिन्तयति । अनेन सह मानवानां विपुलं जीवनं कीदृशं स्यात् ? अस्मिन् विषये अपि विचारः कृतः आयुर्वेदे । दीर्घायुं मानवाः कथं प्राप्नुयुः इत्यपि चिन्तनयोग्यः विषयः । चरकसूत्रे अस्मिन् सन्दर्भे उक्तमस्ति ;

**हिताहितं सुखं दुःखमायुस्तत्र हिताहितम् ।**

**मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते[7] ॥**

चत्वारः वेदाः वर्तन्ते । ऋग्वेदः यजुर्वेदः सामवेदः अथर्ववेदश्च । महर्षिणा चरकेण प्रोक्तं यत् आयुर्वेदः मूलरूपेण अथर्ववेदस्य उपाङ्गत्वेन एव अङ्गीक्रियते । अथर्ववेदे एव आयुर्वेदस्य व्यापकं विस्तृतं च निरूपणं कृतम् अस्ति ।

**अथर्ववेदस्य वर्ण्यविषयाः**


ISSN: 2320-740X

आयुर्वेदे उपदिष्टाः विषयाः अथर्ववेदे वर्णिताः सन्ति। तेषां विषयाणां दिग्दर्शनमत्र क्रियते;

(अ) दानस्य स्वरूपम्

(आ) स्वस्त्ययनम्

(इ) मङ्गलकर्मविधानम्

(ई) बलिकर्म

(उ) होमनिरूपणम्

(ऊ) नियमाः

(ऋ) प्रायश्चित्तोपवासः

(लृ) मन्त्राः

(ए) परिग्रहणम्[8]

उपर्युक्तैः सह आरोग्यमयं जीवनं कीदृशं भवेत् इति अस्मिन् सन्दर्भे प्रमुखाः उपायाः विशिष्टरूपेण वर्णिताः सन्ति। ब्रह्मणा वेदैः सह आयुर्वेदोऽपि जीवानां प्राणिनां वा रक्षायै कल्पितः। " यथा जीवः अनादिः वर्तते तथैव आयुर्वेदोऽपि अनादिरेव "[9]। काश्यपसंहितायां विमानस्थाने उक्तं वर्तते यत् आयुर्वेदः पञ्चमो वेदः। ऋग्वेदयजुर्वेदसामवेदाथर्ववेदेभ्यः पञ्चमोऽयमायुर्वेदः। एतत् मतं काश्यपस्य अस्ति।

**आयुर्वेदस्य अङ्गानि**

चरकः वदति यत् आयुर्वेदे शाखा - विद्या – सूत्र – ज्ञान - शास्त्र - लक्षण - तन्त्रादिषु च अर्थान्तरत्वं नास्ति। तन्त्रार्थस्य पुनः प्रभेदाः प्रोक्ताः सन्ति। एवं प्रकारेण आयुर्वेदः दशसु अङ्गेषु विभक्तः वर्तते। एतेषाम् अङ्गानामनुसारमेव आयुर्वेदशास्त्रस्य प्रक्रिया अग्रे सरति। एतानि दश अङ्गानि अधोलिखितानि सन्ति ;

1. शरीरम्

2. वृत्तिः
3. हेतुः
4. व्याधिः
5. कर्म
6. कार्यम्
7. कालः
8. कर्ता
9. करणम्
10. विधिः

आयुर्वेदस्य इतरेषु अङ्गेषु श्लोकस्थानं निदानस्थानं विमानस्थानं शरीरस्थानम् इन्द्रियस्थानं चिकित्सास्थानं कल्पस्थानं सिद्धिस्थानं च प्रामुख्येन वर्तते।

**अथर्ववेदे आरोग्यसम्बद्धतत्त्वानि**

अनारोग्यं सर्वदा दुःखमेव जनयति । तत्फलेन नराणां मनुष्याणां वा कृते आरोग्यं हितकरं भवति। स्वस्थः मनुष्यः शरीरं रक्षेत् । शरीररक्षाकर्मणि सः सदैव प्रवृत्तो भवेत् । व्याधेः नाशाय अस्मिन् सन्दर्भे यत्नशीलता मनोयोगपूर्वकम् अपेक्ष्यते एव । अस्मिन् विषये सुश्रुतस्य वचनं विचारणीयं वर्तते ;

**व्याध्युपसृष्टानां व्याधिपरिमोक्षः स्वस्थस्य रक्षणं च[10] ।**

अथर्ववेदे व्याधीनां नाशाय विविधौषधप्रयोगाः वर्णिताः सन्ति । बहवः एतादृशाः प्रयोगाः वनस्पतिरूपेण वर्तन्ते । पादपानां वृक्षाणां वा कीदृशं महत्त्वं वर्तते ? एतदपि निगदितम् ;

**यत्राश्वत्था न्यग्रोधा महावृक्षाः शिखण्डिनः ।**

**तत् परेता अप्सरसः प्रतिबुद्धा अभूतन[11] ॥**


ISSN: 2320-740X

सूर्यस्य प्रभावः चन्द्रमसश्च प्रभावः मनुष्याणां हिताय एव विद्यते । तापेन शीतेन च आरोग्यं प्राप्यते;

**सूर्यं कृणोतु भेषजं चन्द्रमा वोऽपोच्छतु[12] ।**

अथर्ववेदे हिमप्रदेशस्य वर्णनं प्राप्यते यत्र कुष्ठौषधिः मिलति । सर्वरोगाणां नाशाय कुष्ठौषधेः महत्त्वं वर्तते । इन्द्रस्य त्रैलोक्यप्रसङ्गे कुष्ठौषधेः सुन्दरं निरूपणमपि विहितम् । यथोक्तम् ;

**उत्तमो नाम कुष्ठास्युत्तमो नाम ते पिता ।**

**यक्ष्मं च सर्वं नाशय तक्मानं चारसं कृधि [13]॥**

**ऐतु देवस्त्रायमाणः कुष्ठो हिमवतस्परि ।**

**तक्मानं सर्वं नाशय सर्वाश्च यातुधान्यः[14] ॥**

**यं त्वा वेद पूर्व इक्ष्वाको यं त्वा कुष्ठ काम्यः ।**

**यं त्वा वसो यमात्स्यस्तेनासि विश्वभेषजः[15] ॥**

तथैव कुष्ठस्य गुग्गुलेन सह अग्नौ धूमकरणेन राजयक्ष्मा इत्यस्मात् रोगात् मुक्तिर्भवति ;

**न तं यक्ष्मा..... गुग्गुलोः सुरभिर्गन्धो अश्नुते[16] ।**

इतोऽपि बहुत्र औषधीनां परिचयः प्रामुख्येन अथर्ववेदे दत्तः वर्तते यथा ;

* आङ्गीरसी
* उदकात्मना
* कैरातिका
* काण्डिनी
* कुमारिका
* पयस्वती
* सका

* मधुमाता
* बलासनाशनी
* परिष्ठा
* रोपणका
* नमस्वन्ती
* कृत्यानाशनी
* विश्वभेषजी च

औषधिप्रसङ्गे गुणधर्माः अपि पृथक् पृथक् रूपेण निरूपिताः सन्ति । उत्तमम् आरोग्यं प्राप्तुं विद्यालयात् विश्वविद्यालयपर्यन्तं विद्यार्थिनः अध्येतारः स्वास्थ्यलाभाय अथर्ववेदस्य सूक्तानां विषये अध्ययनं कुर्युः । तेषामारोग्यलाभेन सह समाजस्य इतरेषां जनानामपि आरोग्यलाभो भविष्यति । अथर्ववेदे एव शरीरे विद्यमानं विषकृमि ( जीवाणुं ) त्रिदोषं च रोगोत्पत्तेः मूलं कारणम् इति अङ्गीकृतम् । एते जीवाणवः ( कृमयः ) मांसभोजनमाध्यमेन अपक्वभोजनेन अतिपक्वभोजनेन वा मानवानां शरीरे प्रविशन्ति "[17] । एतादृशानि बहूनि उदाहरणानि अथर्ववेदे प्राप्यन्ते यैः मानवाः उत्तमम् आरोग्यम् आप्नुवन्ति । बहूनां कायिकरोगाणां मानसिकरोगाणामपि उल्लेखः अस्मिन् वेदे प्राप्यते । यथामति अध्येतारः तान् मन्त्रान् अधीत्य उत्तमान् अनुप्रयोगान् कर्तुं शक्नुवन्ति । चरकस्य मतं वर्तते ;

**सर्वमन्यत् परित्यज्य शरीरमनुपालयेत् ।**

**तदभावे हि भावानां सर्वभावः शरीरिणाम्[18] ॥**

**सन्दर्भाः :**

1. मनुस्मृतिः 1 / 83
2. वाल्मीकिरामायणम् 1 / 1 / 97
3. ऐ. ब्रा. 4 / 19

 ISSN: 2320-740X

4. मनुस्मृतिः 1 / 84
5. सत्य युग में तप , त्रेता में ज्ञान , द्वापर में यज्ञ और कलि में केवल दान को महर्षियों ने प्रधान धर्म कहा है । मनुस्मृतिः 1 / 86
6. चरकसूत्रम् 1 / 42
7. चरकसूत्रम् 1 / 41
8. वेदो ह्यथर्वणो दानस्वस्त्ययनबलिमङ्गलहोमनियमप्रायश्चित्तोपवासमन्त्रपरिग्रहः ।
   चिकित्सां प्राह चिकित्सा चायुषा हितायोपदिश्यते । चरकसूत्रम्
9. न हि नाभूत् कदाचिदायुषः सन्तानो बुद्धिसन्तानो वा ।
10. सुश्रुतसूत्रम् 1 / 14
11. अथर्ववेदः 4 / 37
12. अथर्ववेदसंहिता 6 / 83 / 1
13. अथर्ववेदः 5 / 4 / 9
14. अथर्ववेदः 19 / 39 / 1
15. अथर्ववेदः 19 / 39 / 9
16. अथर्ववेदः 19 / 38 / 1
17. आमे सुपक्वे सबले विपक्के यो मा पिशाचो अशने ददम्भ ।
    तदात्मना प्रजया पिशाचा वि यातयन्तामगदोऽयमस्तु ॥ अथर्ववेदः 5 / 29 / 6
18. चरकसूत्रम् 1 / 11 / 3

**********

# कल्पनाविचारः

**डा.नारायणवैद्यः**

**सहायकाचार्यः, शिक्षाविभागः**

का कल्पना ? कल्पना नाम बाह्येन्द्रियैः नैव प्रतीयमानानि बिम्बानि चित्राणि संवेदना वा अस्ति। सामान्यतया कवयः स्वस्य कल्पनया एव काव्यानि रचितवन्तः । अत एव उच्यते 'रविः यत् द्रष्टुं न शक्नोति तत् कविः पश्यति' इति । अतः वक्तुं शक्यते यत् कवेः कल्पना भवति काव्यस्य वस्तु इति । क्वचित् कवेः कल्पना यथायथं लोके दृश्यते । कल्पना समस्यानां समाधानं कर्तुं ज्ञानं प्रयोक्तुं च सहायिका भवति । अपि च अनुभवस्य शिक्षणप्रक्रियायाः एकीकरणे साधनं भवति कल्पना ।

इह लोके मनुष्यः स्वस्य मनोभावानुसारं कल्पयितुं शक्नोति । मनुष्यस्य परिस्थित्यनुसारेण शुभम् अशुभं वा भवितुम् अर्हति । केचन जनाः तन्यताग्रस्ताः खिन्नाः वा भवन्ति चेत् आत्मनः शान्त्यै कल्पनां कुर्वन्ति । अस्मिन् जगति इन्द्रियानुभवैः उत्पन्नतत्त्वेभ्यः मनसः अन्तः आंशिकं वा सम्पूर्णं वा व्यक्तिगतक्षेत्रम् आविष्कर्तुं सहजक्षमतारूपेण भवति कल्पना । इन्द्रियानुभवे पूर्वं दत्तानां विषयाणां संवेदनानां वा मनसि पुनरुत्थानप्रक्रियायै मनोवैज्ञानिकदृष्ट्या 'कल्पना' पदं प्रयुक्तम् अस्ति । कल्पना तत्त्वस्य स्वरूपज्ञानार्थम् अवान्तरप्रकारान् अग्रे पश्यामः ।

**कल्पनायाः प्रकाराः**

विषयस्य वर्गीकरणं काचित् प्रक्रिया भवति । वर्गीकरणप्रक्रियया कस्यापि विषयस्य सुचारु अध्ययनार्थं मार्गदर्शनं लभ्यते । अतः कल्पनायाः प्रकाराः अत्र निरूप्यन्ते ।


ISSN: 2320-740X

**सक्रियकल्पना**

सक्रियकल्पनायां मनः पूर्वानुभवानां नूतनरूपं प्राप्नोति । पूर्वानुभवान् विश्लिष्य उत्तमकल्पना का अस्ति इति निश्चिनोति । अनावश्यकविचाराणां निराकरणं कृत्वा निश्चितकल्पनानुगुणं कार्यं करोति । जीवने आवश्यकं कार्यं चिन्तयति । जीवने सकारात्मकम् अपि भवति । एतेन मनः मस्तिष्कं च सक्रियं भवति । यदि मनः सकारात्मकं भवति तर्हि व्यक्तिः बुद्धिमती भविष्यति । सक्रियकल्पानायां व्यक्तिः स्वप्नं पश्यति, मनोरञ्जनस्य कल्पनां करोति, रचनात्मककल्पनाम् अपि कर्तुं प्रभवति । सक्रियकल्पनया काव्यस्य रचनां कुर्वन्ति कवयः । सामान्यतः चैतन्यावस्थायां सक्रियकल्पना भवतीति विशेषः ।

**निष्क्रियकल्पना**

निष्क्रियकल्पनायां मनः पूर्णतया निष्क्रियं भवति । अतः निष्क्रियकल्पनायाः अनैच्छिककल्पना इत्यपि व्यवहारः । नूतनकल्पनोत्पत्तिप्रक्रियायां व्यक्तिः व्यावहारिकरूपेण न सम्मिलिता भवति । सामान्यतया पश्यामः चेत् बालः बाल्यावस्थायां स्वकीयेषु विचारेषु नियन्त्रणं कर्तुं न शक्नोति । तस्य क्षमता दुर्बला भवति । बालेषु विचारान् मूर्तरूपेण स्थापयितुं कोऽपि अभिप्रायः न भवति । प्रायः एतादृशाः स्वप्नाः सुप्तावस्थायाम् अर्धनिद्रायां उत्पद्यन्ते ।

**पुनरुत्पादनकल्पना**

यदा मस्तिष्के विद्यमानाः पूर्वानुभवाः बिम्बरूपेण अस्माकं पुरतः अथवा बहिरायान्ति तदा पुनरुत्पादनकल्पना इति वक्तुं शक्यते । इयं कल्पना स्मृतिरूपेण पूर्वमेव अस्माकं मस्तिष्के भवति । पुनरुत्पादनसम्बद्धाः कल्पनायाः विचाराः अर्धचैतन्यावस्थायां भवन्ति । यदा वयं विषयस्य प्रत्याह्वानं कुर्मः तदा विषयः प्रकटितः भवति । परीक्षायाम्, स्पर्धायाम्, लेखनसमये च अस्य उपयोगं जनाः कुर्वन्ति ।

**अनुकरणात्मककल्पना**

अनुकरणात्मककल्पनायां केवलं मनसः अतीतस्य विषयस्य अनुभवस्य विचारस्य वा पुनर्निर्माणं भवति । व्यक्तिः कार्यकरणवेलायाम् अन्यस्य अनुकरणं करोति । बालेषु एतादृशी कल्पना आधिक्येन भवति । बालाः चलनं, भाषणम्, उपवेशनम् इत्यादिकम् अनुकरणेन शिक्षन्ते । कथायाः वाचने काल्पनिकविश्वासे हस्तकौशलकलायां च एषा कल्पना प्रधाना भवति ।

**रचनात्मककल्पना**

मानवीयप्रयोगस्य विकासाय भौतिकवस्तूनां निर्माणे च रचनात्मककल्पना अपेक्षते । भवननिर्माणे सेतुनिर्माणे मानचित्रनिर्माणे च रचनात्मककल्पनायाः प्रभावः भवति । एवमेव व्याख्यानवेलायां ग्रन्थरचनावसरे च रचनत्मककल्पनायाः आवश्यकता भवति । रचनात्मककल्पनायां मनुष्यः पूर्वानुभवैः प्राप्तदत्तांशैः कल्पनायाः पुनर्निर्माणं करोति ।

**शिक्षायां कल्पनायाः महत्त्वम्**

कल्पना बालानाम् सामाजिकं भावनात्मकं रचनात्मकं शारीरिकं भाषावैज्ञानिकं संज्ञानात्मकं च विकासं जनयति । बालाः क्रमशः प्रौढचिन्तनं कर्तुं समर्थाः भवन्ति । किञ्च बालाः महत्त्वपूर्णजीवनकौशलम् अपि शिक्षन्ते । अनया दृष्ट्या शिक्षाक्षेत्रे कल्पनायाः महत्त्वम् वर्वर्ति । अतः शिक्षाक्षेत्रे कल्पनायाः महत्त्वपूर्णबिन्दवः अग्रे प्रतिपाद्यन्ते ।

**आविष्करणम्**

कल्पना आविष्कारस्य जननी अस्ति । कल्पनां कृत्वा एव गवेषकः अनुसन्धानं करोति । चाकलेहनिर्माणयन्त्रस्य कार्यं दृष्ट्वा नगरे धनप्राप्तिः अनेन प्रकारेण भवितुम् अर्हति इति ATM (Automated Teller Machine) जनकः अचिन्तयत् । अनया कल्पनया अनुसन्धाता जॉन शेफर्ड-बैरोनवर्यः ATM यन्त्रस्य निर्मणम् अकरोत् । एतादृशकल्पनायाः कारणेन संगणकम्, आकाशवाणी,


ISSN: 2320-740X

दूरदर्शनम्, व्योमयानम् इत्यादीनाम् आविष्कारः अभवत् । इत्थं सर्जनात्मककल्पनातः एव वैज्ञानिकाविष्काराः जायन्ते ।

**ज्ञानार्जनम्**

कल्पनया ज्ञानार्जनं सुकरं भवति । कल्पनया अनुभवस्य स्वरूपं स्पष्टं भवति । अनेन नूतनज्ञानार्जनम् अनायासेनैव कर्तुं शक्यते । शिक्षणाधिगमप्रक्रियायां ग्रहणात्मककल्पनायाः प्रामुख्यम् अस्ति । कल्पना ज्ञानार्जनप्रक्रियां प्रोत्साहयति । मस्तिष्कस्य विकासिनी अपि वर्तते । अपि च अधिगमस्थानान्तरणमपि कल्पना प्रभावयति ।

**समायोजनम्**

कल्पनया छात्रः समायोजनं कर्तुं समर्थः भवति । सामान्यतया कक्ष्यायां केचन छात्राः अन्यैः छात्रैः सह, विद्यालयस्य पर्यावरणे च समायोजनं कर्तुं कष्टमनुभवन्ति । यदि समायोजनार्थम् असमर्थाः छात्राः उत्तमकल्पनां कुर्वन्ति तर्हि विद्यालयवातावरणे सामञ्जस्यं सम्पादयितुं प्रभवन्ति । यदा छात्रः कष्टमनुभवति तदा कल्पनां कुर्यात् । येन कष्टस्यानुभवः न भवति । यथा उडुपेन नद्याः तरणवेलायां भीतिः जायते, तथापि भीतेः विस्मरणं जायते चेत् आनन्दरूपं सुखं नद्याः तरणसमये लभ्यते । एवमेव अध्ययनसमये कष्टं भवतीति छात्रस्य खेदः न स्यात् । अध्ययनात्परं सुखस्य प्राप्तिः भवतीति छात्रः कल्पयति चेत् अनायासेनैव अध्ययनमग्रे प्रवर्तयितुं पारयति । सुखदुःखादीनां परिचयं प्राप्य सामाजिकगुणस्य विकासमपि प्राप्नोति ।

**भविष्यस्य निर्माणम्**

शिक्षा व्यक्तेः उत्तमभविष्यस्य निर्माणं करोति । यथा उत्तमा शिक्षा लभ्यते तथा उत्तमकल्पना उदेति । उत्कृष्टकल्पना उत्तमभविष्यस्य निर्माणे सहकरोति । उत्तमजीवनस्य निर्माणार्थं उत्तमभविष्यस्य कल्पना करणीया । एवं चेत् कल्पनायाः स्वरूपं किं भवेत् ? इति चेदुच्यते - जीवने उत्तमः उद्योगः,

भविष्यस्य योजनाः, भाविनिकाले भवितव्यानि परिवर्तनानि, तदनुसारेण आवश्यकताः इत्यादिविषये चिन्तनं स्यात् । एवं रीत्या यदि बालः कल्पनां करोति तर्हि तस्य उत्तमभविष्यस्य निर्माणं भविष्यति । अनेन क्रमेण एव अध्ययनं भवेत् । उत्तमाध्ययनेन कल्पनायाः सामर्थ्यं वर्धते । उत्तमा कल्पना मनुष्यस्य जीवने चिन्तां निवारयति । यतः काल्पनिकलोके चिन्तायाः अवसरः न भवति ।

**सहानुभूतेः जागरणम्**

कल्पना मानवेषु परस्परं सौहार्दभावं सम्पादयति । कल्पनया अन्येषां सुखदुःखानाम् अनुभवः भवति । कल्पनया एव देशे विद्यमानेषु जनेषु भ्रातृत्वभावः उत्पद्यते । सहानुभूत्या एकः देशः अन्यस्य देशस्य कृते विपत्काले सहकरोति । सहानुभूतिः कल्पनाया एव भवति ।

उपर्युक्तरीत्या शिक्षाक्षेत्रे कल्पनायाः प्रामुख्यं वर्तते । कल्पनात्मकविचारैः छात्रः कक्ष्यायाम् अत्यन्तं वेगेन अधिगच्छति । किञ्च निराशायाः निवारणं, भविष्यस्य निर्माणं, रुचेः परिष्कारं, रचनात्मकशक्तेः विकासं, मार्गदर्शनम् च अवाप्नोति । एवमेव ज्ञानेन्द्रियाणां प्रशिक्षणे, भाषायाः विकासे, कथायाः श्रवणे, कथायाः वाचने च कल्पनायाः आवश्यकता दरीदृश्यते ।

**********

**सन्दर्भग्रन्थाः**

1. शिक्षामनोविज्ञानम् – वि. एस. वेङ्कटराघवन्, रा.सं. विद्यापीठम्, तिरुपतिः
2. शिक्षा मनोविज्ञान – डा.रामशकल पाण्डेय, आर्.लाल. बुक डिपो, मेरठ – 03
3. अधिगमकर्ता का विकास एवं शिक्षण अधिगम प्रक्रिया – डा.जे.एस.वालिया, अहम् पाल पब्लिशर्स, जालन्धर शहर, पंजाब
4. https://en.wikipedia.org/wiki/Imagination

 ISSN: 2320-740X

5. https://bgommartin.wordpress.com/2015/11/17/definition-of-reproductive-imagination/
6. https://mycoaching.in/kalpana

**********

# अहर्गणानयनम्

**डॉ. रतन कुमार पाण्डेयः**

**सहायकाचार्यः, ज्योतिषविभागः**

अहर्गणः कःसमूहोऽहर्गणः भवति । (सावनदिवसानां) अह्नां गणोऽहर्गणः अर्थात् दिवसानां ? एतत् विना ज्योतिषशास्त्रस्य किञ्चिदपि कार्यं न भवितुमर्हति । अतः ज्योतिषशास्त्रस्यमुख्यप्रयोजनं "ज्योतिःशास्त्र पुराणगणकैरेकादेश इत्युच्यते"[1] इति भास्करवचनात् आकाशे विद्यमानां ग्रहनक्षत्रराशीनां परस्परसम्बन्धत्वात् संसारे शुभाशुभफलानां निरुपणमितिपरन्तु जातकस्य शुभाशुभफलज्ञानं , लग्नबलाश्रितमिति अर्थात् लग्नकुण्डल्यां स्थितग्रहवशादेव शुभाशुभफलज्ञानं क्रियते । तथा च ग्राहाणां ज्ञानं अहर्गणाधिनमिति । ज्योतिषशास्त्रस्याचार्यैः दिव्यज्ञानेन सतत् वेधद्वारा च सर्वेषां ग्रहाणां साधनं कृतं वर्तते । तेन बलेन खेचराणां एकस्मिन् महायुगे कल्पे वा द्वादशराशिसमूहाः पठिताः सन्ति । (भगणाः) तेन माध्यमेन युगस्य कल्पस्य वा गणना कृत्वा वर्तमानदिने ग्रहाणां स्थितिज्ञानस्य कृते दिनगणस्य मुख्यं मत्वा सर्वादौ अहर्गणानयनं कृतमिति । अहर्गणः चतुर्विधो भवितुमर्हति सौर-नाक्षत्र-चान्द्र-सावनानि एतानि सर्वाणि प्रयुज्यन्ते -नाक्षत्र-चान्द्र-सावनभेदात्। नवविधकालमानेषु चत्वारि मानानि सौर

[1]सि० शि० गो० श्लो०-6

। तेषां चतुर्मानानां समवेतं मनुष्यमानं प्रोक्तमिति भास्करेण । लोकेऽस्मिन् चतुर्भिरेव मानैः व्यवहारः प्रवर्तते । यथोक्तम्

**"ज्ञेयं विमिश्रं तु मनुष्यमानं मानैश्चतुर्भिर्व्यवहारवृत्तेः"[1]**

एतेषु चतुर्षु मानेषु अस्माकमाचार्याः सावनदिनस्य प्रत्यक्षदर्शनवशाद् अहर्गणरूपेण सावनदिवसानां समूहं स्वीकुर्वन्ति । यतोहि उक्तपरिभाषानुसारेण एकसूर्योदयात् अपरसूर्योदयावधिः " "उदयादुदयं भानोर्भूमिसावनवासरः" । सूर्यसिद्धान्तानुसारं "कालः सावनदिनमिति[2] । भास्करवचनम् "इनोदयद्वयान्तरं तदर्कसावनदिनम् । तदेव मेदिनीदिनं"[3] कल्पारम्भकालादभीष्टदिनं यावद् कियद् दिनं व्यतीतमेवकल्पारम ,्भादभीष्टदिनं पर्यन्तं दिनसमूह एव दिनौघः भवति । प्रायः (अहर्गणः) करणग्रन्थेषु प्रदत्तेति । यत्र कल्पादिमानात् -तन्त्र-अस्माभिराचार्यैः द्युगणसाधनस्य प्रक्रिया सर्वेषु सिद्धान्त इष्टशक ,यत्र युगादिमानवशात् खेचराणां साधनं तन्त्रम् ,ग्रहाणामानयनं सः सिद्धान्तःवशाच्च ग्रहानयनं यत्र भवति तत्करणमिति । एतेषु त्रिषु सिद्धान्तेषु द्युगणसाधनस्य प्रक्रिया दैवज्ञैः भिन्नभिन्न प्रकारेण -निगदितेति । परन्त्वत्र दिनौघोपपत्तिः तु समाना दृश्यते प्राप्यते वा । अस्माकं कालव्यवहारे वर्षेषु दिवसेषु ,मासेषु चान्द्रमासः ,सौरवर्षम् च सावनदिनं प्रयुज्यते । अत्र द्युगणसाधने सौरसावनभेदात् -चान्द्र- -मेदिनीदिनस्य प्रत्यक्षोपलब्धिर्दृश्यते। यथोक्तं सूर्यसिद्धान्ते

**अत ऊर्ध्वममी युक्ता गतकालाब्दसंख्यया ।**

**मासीकृता युता मासैर्मधुशुक्लादिभिगतैः ।।**

**पृथक्स्थास्तेऽधिमासघ्नाः सूर्यमासविभाजिताः ।**

---

[1]सि० शि० म० का०श्लो .-30

[2]सू०सि० म० श्लो० 36

[3]सि०शि०म. का. श्लो. 20

 ISSN: 2320-740X

**लब्धादिमासैर्युक्ता दिनीकृत्य दिनान्विताः ।।**

**द्विष्ठास्तिथिक्षयाभ्यस्ताश्चान्द्रवासरभाजिताः ।**

**लब्धोनरात्रिरहिता लङ्कायामार्धरात्रिकः ।।**

**सावनो द्युगण।....**[1]

अर्थात् कल्पादितः सौराब्दाः अत्र साधिताःकिञ्च सृष्ट्यादिनिर्माणे कल्पादितः सृष्ट्यावधिः , सौरवत्सराः ये पठितास्तयोरन्तररूपेण सृष्ट्यादितो कृतयुगान्तकालिनगतखचतुष्कयमाः “ सौराब्दाः- भवन्ति । तस्माद् सतयुगान्तादभीष्टयुगस्य वर्तमानकालपर्यन्तं यावत्य संख्याः ”द्रयग्निशररन्ध्रनिशाकराः व्यतीतास्तां संख्यां पूर्वोक्तमानेषु संयोज्य सृष्ट्यादि कालादभीष्टवर्षं यावत् गतसौरवत्सराः विज्ञेयाः । ”मासैर्द्वादशभिवर्षम्“[2]इत्यनेन ज्ञायते यत् एकस्मिन् वर्षे द्वादशमासाः भवन्ति । अतः गतसौरवत्सरेषु द्वादशभिर्गुणिते सति तेऽभीष्टवर्षादौ गतसौरमासाः प्रकल्पिताः । अभीष्टसौरमाससाधनार्थम् । ये गतसौरमासाः लब्धास्तेषु मानेषु वर्षादूर्ध्वं ये चान्द्रमासाः सौरमाससमानास्ते योजनीयास्तदा अभीष्टमासादौ संक्रान्त्यवधिकाः इष्टसौरमासा भवन्ति । अत्र पुनः अधिमासानयनं क्रियते । असंक्रान्तिमासोधिमासः “ ”स्फुटः स्यादिति भास्करवचनात्[3] । सूर्यचान्द्रमासयोर्यदन्तरं ते तु अधिमासाः जायन्ते । अतः इष्टसौरमासाः ये प्राप्ताः तेषामभीष्टसौरमासानां चान्द्रमासकरणार्थमधिमासानयनं निगदितमिति । तत्रानुपातमाध्यमेनऽधिमासानयनं कृतमिति।

यदि पठितकल्पसौरमासैः युगसौरमासैर्वा कल्पाधिमासाः युगाधिमासाः वा लभ्यन्ते तदा अभीष्टसौरमासैः किमिति लब्धाधिमासाः सावयवाः भवन्ति । ?

**कल्पाधिमासाः युगाधिमासाः/Xइष्टसौरमासाः = इष्टाधिमासाःअधिशेषाः+**

[1]सू.सि.म.श्लो. 48-51

[2]सू० सि० म० श्लो 13

[3]सि० शि० म० अ० श्लो 6

**कल्पसौरमासाःयुगसौरमासाः /**

**युगसौरमासाः/कल्पसौरमासाः**

अपरस्थाने अभीष्टसौरमासस्थाः ये सन्ति तेषु इष्टसौरमासेषु लब्धनिरवयवाः अधिमासाः योज्यास्तदा चान्द्रमासाः भवन्ति। परन्त्वत्र सौरमासाच्चान्द्रमाससाधने अधिमासशेषं च स्वीकर्तव्यमिति। यदि लब्धाधिमासैः साधिशेषैरभीष्टसौरमासाः योज्यन्ते तदाऽभीष्टसंक्रान्तिकालिकाश्चान्द्रमासाः भवन्ति। यथोक्तं सूर्यसिद्धान्ते-

**भवन्ति श"शिनो मासाः सूर्येन्दुभगणान्तरम्"**[1]

अनेन ज्ञायते यत् एकस्मिन् महायुगे सूर्यचन्द्रमसोः ये भगणाः पठितास्तयोर्भगणयो यदन्तरं चान्द्रमासाः। यस्मात् अमावस्यानन्तरं सूर्यसंक्रान्तेः पूर्वमेव सदैवाधिमासशेषो तिष्ठति। (दर्शाग्रतः) दर्शाग्रतः संक्रमणकालतः प्राक् सदै"व तिष्ठत्यधिमासशेषम्"[2] इत्युक्तेः यदि अधिशेषः चान्द्रमासतुल्यस्तदैकधिमासः। तस्मिन् मासे सूर्यस्य संक्रान्तिः न भवति। अत एव "असंक्रान्तिमासोऽधिमासः स्फुटः स्यादिति"[3] प्रोक्तम्। द्वात्रिंशत्मासानामनन्तरं एकोऽधिमासः ब्रह्मगुप्तमहोदयेन प्रकल्पितः[4]। परन्तु गणेशदैवज्ञेन अधिमासः त्रयस्त्रिंशच्चान्द्रमासानामनन्तरं स्मृतोऽस्ति। "रवीन्द्वोर्युतेः संयुतिर्यावदन्यविधोर्मास""तिथिभिर्मासश्चान्द्रः-त्रिंशता"[5] इति भास्करोक्तेः, एकस्मिन् चान्द्रमासे त्रिंशच्चान्द्रतिथयः भवन्ति। ये चान्द्रमासाः लब्धाः सन्ति तेषु चान्द्रमासेषु त्रिंशत्संख्याभिर्गुणिते सति तदा दर्शान्तकालिकाश्चान्द्रदिवसाः भवन्ति। एतेषु चान्द्रदिवसेषु

---

[1]सि० शि० म० श्लो० 35

[2]सि० शि० गो० म ०श्लो .16

[3]सि०शि० म० अ० श्लो०6

[4]ग्र०ला मल्लारि टी० पृ० सं .10

[5]ग्र श्लोग .अ .म ०ला.4


ISSN: 2320-740X

दर्शान्तकालादभीष्टदिनं यावत् याः गततिथयोऽधिकास्ताश्चेदत्र योज्यन्ते गततिथ्यन्तकाले शशिदिवसः भवन्ति ।

पुनरत्र सावनदिनकरणार्थं चान्द्रसावनमान्योरन्तररूपं क्षयदिवसानयत्रं कृतमिति सावनाहानि " चान्द्रेभ्यो द्युभ्यःप्रोज्झ्य तिथिक्षयाः"[1] इत्युक्तेः । चान्द्रसावनयोरन्तररूपः क्षयदिवसो भवति। यदि पठितकल्पकुदिनैः युगकुदिनैर्वा कल्पक्षयदिनानि युगक्षयदिनानि वा प्राप्यन्ते तदा अभीष्टरुच्यन्ददिवसैः कानीति पल्लब्धानि तान्यभीष्टक्षय दिनानि अवयवयुक्तानि ।

**कल्पक्षयदिनानियुगाक्षयदिनानि/xइष्टचान्द्रदिवसाः=इष्टक्षयदिवसा +:क्षयदिनशेषम्**

**कल्पकुदिनानियुगकुदिनानि / युगकुदिनानि कल्पकुदिनानि/**

अत्र सावमशेषाः क्षयादिवसास्लब्धास्तैः विरहिताः इष्टचान्द्रदिवसाः तिथ्यन्तकालिकाः सावनदिवसा"इनोदयद्वयान्तरं तदर्कसावनदिनम्" जायन्ते । परन्त्वत्र :[2]इत्यनेन श्लोकेन सावनद्वर्गणः सूर्योदयकालिकः । सावनदिवसस्यारम्भः सूर्योदयकालिको भवति । परन्तु सूर्यसिद्धान्तानुसारं साधितः सावनाहर्गणकायामर्धकालिकः प्रोक्तः। सूर्यसिद्धालङ् :न्तोऽयं सूर्यमयासुरसंवाद रूपः । अस्य मयासुरस्य जामाता जगत्प्रसिद्धः रावण आसीत् । तस्य राजधानी लङ्कापुरी असुराणां निवासस्थानमिति । तत्र तेषामर्धरात्रिकालात् व्यवहारारम्भवशात् तदेव तदभिप्रायिकं दिनमुषमधिगत्य लङ्कार्धरात्रेः अर्थात् यमकोटिपुरोदयकालिकोऽहर्गणः साधितः । अन्येऽपि गणितशास्त्रस्याचार्याः लङ्कानगरीं प्राधान्यंमत्वा अत्रोदयकालिकोऽर्धरात्रिकालिको वाऽहर्गणानयनं प्रतिपादितवन्तः ।भास्करेण सिद्धान्तशिरोमणौ सूर्यस्य मध्यमसावनाहर्गणः प्रतिपादितः । कल्पगतसौरवत्सराः ये द्वादशभिर्गुणिताः सूर्यमासाः लब्धास्ते मधुशुक्लादिगतचान्द्रतुल्यैः सौरमासैरेव युक्ताः त्रिंशद्संख्याभिः हता प्रतिपादिगतचान्द्रतिथितुल्यैः

[1]सू० सि० मा श्लो 36

[2]सि० शि० म० का० श्लो० 20

सौरदिनसैसंयुतास्ते सौराहर्गणाः संजाताः। पुनःत्रयराशिविधिना अधिमासानयनं करणीयमिति ।यदि : कल्पसौरदिवसैः कल्पाधिमासाः प्राप्यन्ते तदैभिः किमिति, लब्धमः गताधिमासा। तैर्दिवसकृतैः : पृथक्स्थितः सौराहर्गणः युक्तश्चान्द्रोऽहर्गेणो भवति । ततश्चन्द्रात् द्युगणादवमानयनमिति त्रयराशिविधिना कृतमिति । कल्पसावनदिवसैश्चेत् कल्पानमानि लभ्यन्ते तदैभिः किमिति फलानि गतक्षयदिनानि रहितश्चान्द्रोहर्गणः जा (गतक्षयदिवसैः) भवन्ति। तैःतः । यथोक्तम्

**कथितकल्पगतोऽर्कसमागणो**

**रविगुणो गतमाससमन्वितः**

**खदहनैर्गुणितस्थितसंयुतः**

**पृथगतोऽधिमास -1593300000 समहतात् ।**

**रविदिना-1555200000000 प्तगताधिमासकैः ।**

**कृतदिनैः सहितो द्युगणो विधोः**

**पृथगतः पठितावम-25082550000 संगुणाद् ।**

**विद्युदिना -1602999000000 प्तगताविमवर्णितः**

**भवति भास्करवासपूर्वको दिनगणो रविमध्यमसावनः ।।**[1]

अस्माभिराचार्यैः विविध :दिनौध :प्रकारेण अहर्गणानयनं कृतमिति । सिद्धान्तग्रन्थेषु कल्पादे-साधितः (:अहर्गण), तन्त्रानुसारेण युगादिमानवशात्द्युगणः, एवञ्च करणशास्त्रसम्बन्धिग्रन्थेषु अभीष्टशकादेः अहर्गणः सिद्ध्यति । इदानीन्तु दैवज्ञाः बहुषु स्थलेषु ग्रहानयने करणविधेः प्रयोगं कुर्वन्ति। तेषु करणग्रन्थेषु ग्रहलाघवस्य मूख्यं स्थानमिति । अस्य ग्रन्थस्य कर्त्रा गणेशदैवज्ञेन ग्रहानयनस्य

[1]सि० शि० म० ग्र० श्लो 1-2


ISSN: 2320-740X

ज्याचापकर्मरहितलघुप्रकारेण अद्वितीयाः पद्धतिः निगदितेति । ग्रहलाघवस्य रचना अभीष्टशके 1442 जाता, तमभीष्टशकं स्वीकृत्य ग्रहलाघवकारेण सर्वादौ अहर्गणः साधितः । यथोक्तं ग्रहलाघवे

**द्व्यब्धीन्द्रोनितशक् ईशहृत्फलं स्याच्चक्राख्यं रविहतशेषकं तु युक्तम् ।**

**चैत्राद्यै पृथगमुतः सदृध्नचक्राद् दिग्युक्तादमरफलाधिमासयुक्तम् ॥**

**खत्रिघ्नं गततिथियुङ्निरग्रचक्राङ्गांशाढ्यं पृथगमुतोऽब्धिषट्कलब्धैः ।**

**ऊनाहैविर्युतमाहर्गणो भवेद् वै बवर स्याच्छरहतचक्रयुग्गणोऽब्जात् ।।**[1]

वर्तमानशकाब्दः 1901

-1442 ग्रन्थारम्भशकाब्दः

अनयोरन्तरमिति459

एकस्मिन् चक्रे एकादशवत्सराः भवन्ति । अन्तरस्थाने एकादशभिर्भक्ते सति तदा चक्रसंशेति।

11/459/चक्राणि 41

44

19

11

शेषैसौराब्दाः 8

एकस्मिन् वर्षे द्वादशमासाः भवन्ति

शेषसौराब्दा :X 12= सौरमासाः

8 X 12= :सौरमासा 96

[1]ग्र० ला० म० अ० श्लो 4-5

वर्षादौ चैत्रशुक्लपक्षप्रतिपत्तिथेः फाल्गुनशुक्लपक्षं यावदेकादशचान्द्रमासतुल्याः सौरमासयुक्तास्तदाऽभीष्टसौरमासाः संजाताः ।

96+11= :इष्टसौरमासा 107

इष्टसौरमासाः स्थानद्वये स्थापिताः ।

प्रथमस्थाने

सौरमासा चक्राणि) +X2) 10÷33

107+ (41X2) +10÷33

107+82+10÷33

107+92÷33

199 ÷33= अनिमासाः 6

द्वितीयस्थाने इष्टसौरमासेषु लब्धयोऽधिमासाः युतास्तदा चान्द्रमासा । :जाता :

107+6= चान्द्रमासाः 113

एकस्मिन् चान्द्रमासे त्रिंशच्चान्द्रतिथयः । अल त्रिंशद्संख्याभिः गुणिते सति तदा चन्द्रतिथयः।

113X 30= चान्द्रतिथयः 3390

अभीष्टवर्षस्य फाल्गुनमासस्य शुक्लपक्षस्य प्रतिपत्तिथेः फाल्गुनशुक्लपूर्णिमां पर्यन्तं चतुर्दशगततिथयः युतास्तदेष्टचान्द्रतिथयः संजाताः ।

चान्द्रतिथयः गतचान्द्रतिथिः इष्टचान्द्रतिथयः +

3390+ 14= 3404

चक्रस्य षष्ठांशोऽत्र योजनीयः ।

41 / 6= षष्ठांशः 6

3404+ 6= 3410


ISSN: 2320-740X

षष्ठांशयुक्ताभीष्टचान्द्रतिथिषु चतुष्षष्टिसंख्याभिर्भक्ते सति तदा अवमतिथयः जाता। अपरस्थाने : 3410 संजातः। :विद्यमानाभीष्टचान्द्रदिवसेषु क्षयदिवसाः विशोधितास्तदा सावनाहर्गण÷ 64= लब्धिः 53

अभीष्टचान्द्रतिथयः सावनाहर्गणः = लब्धिः-

3410-53= 3357

अभीष्टवासरज्ञानस्य कृते आचार्यभास्करेण सैको निरेको वा सिद्धान्तः प्रतिपादितः । यतः मध्यममानेन साधितेऽहर्गणे रूपान्तरं स्थितिवशात् सम्भवति । यदि वासरज्ञाने कस्मिञ्चिद्हर्गणे द्वयोः संख्ययोरन्तरं दृश्यते प्राप्यते वा तदा एतादृश्यां स्थितौ सैको निरेको वा सिद्धान्तः प्रयुज्यते । यथोक्तं सिद्धान्तशिरोमणौ

**अभीष्टवारार्थमहर्गणश्चेत् सैको निरेकस्तिथयोऽपि तद्वत् ।**

**तदाधिमासावमशेषके च कल्पाधिमासावमयुक्तहीने ॥**[1]

सन्दर्भ ग्रन्थसूची

[1]सि० शि० गो० श्लो०-6

[1]सि० शि० म० का०श्लो .-30

[1]सू०सि० म० श्लो० 36

[1]सि०शि०म. का. श्लो. 20

[1]सू.सि.म.श्लो. 48-51

[1]सू० सि० म० श्लो 13

[1]सि० शि० म० अ० श्लो 6

**********

[1]सि० शि० म० ग्र० श्लो 1

[1]सि० शि० म० श्लो० 35

[1]सि० शि० गो० म ०श्लो .16

[1]सि०शि० म० अ० श्लो०6

[1]ग्र०ला मल्लारि टी० पृ० सं .10

[1]ग्र श्लोग .अ .म ०ला.4

[1]सू० सि० मा श्लो 36

[1]सि० शि० म० का० श्लो० 20

[1]सि० शि० म० ग्र० श्लो 1-2

[1]ग्र० ला० म० अ० श्लो 4-5

[1]सि० शि० म० ग्र० श्लो 1


ISSN: 2320-740X

## जनसङ्ख्याशिक्षायाः उद्देश्यानि

**डा. अरविन्दकुमार सोमदत्तः**

**सहायकाचार्यः, शिक्षाशास्त्रविभागः**

मानवाः विविधशिक्षां प्राप्य अग्रे गच्छन्ति । उत्कृष्टजीवनार्थं प्रयासं कुर्वन्ति किन्तु बहवः सफलतां न प्राप्नुवन्ति । सफलतां प्राप्तुं समाजे विद्यमानविषयस्योपरि ज्ञानमावश्यकं तदा मानवजीवनस्य प्रमाणानि, मानवजीवनविधानानि, मानवाभिवृद्धिः, परिसरज्ञानम्, सामाजिकशास्त्रम्, भूगोलशास्त्रम् परिवारस्य ज्ञानम्, कुटुम्बनियन्त्रणम् इत्यादीनां विषयाणां सम्बद्धस्य शिक्षां प्राप्नुयुः । तदा एते सर्वे विषयाः जनसङ्ख्याशिक्षायां सन्ति इति कारणेन विद्यालये इमां शिक्षां छात्रेभ्यः स्थापयन्ति । एषा शिक्षा बहुशास्त्रीयसमन्विता भवति । अपि च वर्तमानसमस्यासम्बद्धा । तासां समस्यानां परिष्कारमार्गान् अध्येतुम् अवकाशं कल्पयति । इयं शिक्षा जनसङ्ख्या वृद्धिविधानानि, तेषां परिणामान् समस्याश्च विशदीकरोति ।

1) छात्रेभ्यः देशस्य जनसङ्ख्यानीतिः, जनसङ्ख्यायाः नियन्त्रणसम्बन्धस्य विभिन्नयोजनायाः अवगाहनार्थं जनसङ्ख्याशिक्षा अपेक्ष्यते ।
2) छात्राणां जनसङ्ख्यायाः वृद्धेः प्रक्रियायाः वैज्ञानिकरूपेण अवगाहनार्थम्, तस्याः योग्यतायाः विकासार्थम् ।
3) छात्राणां परिवारस्य एवं जीवनस्तरस्य सम्बद्धस्य विषयस्य योग्यतायाः विकाससम्पादनार्थम् ।
4) व्यक्तेः परिवारस्य, समाजस्य, राष्ट्रस्य, एवं विश्वस्य आर्थिक-समाजिक-सांस्कृतिक-राजनैतिकादीनां जीवने जनसङ्ख्यावृद्धेः कारणेन प्रभावः कथमिति छात्रेभ्यः परिचयार्थम् ।
5) जनसङ्ख्यायाः वृद्धिः, जनसङ्ख्यायाः पद्धतिः, तस्याः विश्लेषणं, संश्लेषणम् इति विषयस्य ज्ञानप्रदानार्थम् ।

6) जनसङ्ख्या, जीवनप्रमाणानि, राष्ट्रस्य आर्थिकस्तरः इत्यादिषु विषयेषु अवगाहनार्थम् ।

7) प्रपञ्चजनसङ्ख्यायाः, अस्माकं जनसङ्ख्यायाः च स्थितिः का तस्याः कीदृशः स्वभावः, इत्यादिविषयेषु अवगाहनार्थम् ।

8) जनसङ्ख्यायाः जीवनप्रमाणानां मध्ये कीदृशः सम्बन्धः, इदानीं सः सम्बन्धः कथम् अस्ति, आगामिकाले कथं भवेत्, आरोग्यम्, विद्या, निवासः, पौष्टिकाहारः, इत्यादिविषये ज्ञानसम्पादनार्थम् ।

9) अद्यतनसामाजिकपरिस्थितौ, आर्थिकपरिस्थितौ च परिमितकुटुम्बस्य आवश्यकता का इति ज्ञानार्थम् ।

10) पित्रोः, शिशूणां रक्षणसमस्याः, तासां निवारणार्थम् ।

11) सर्वकारस्य नियमानुसारं कुटुम्बनियन्त्रणप्रक्रियायाः अवगाहनार्थम् ।

12) प्राचीनजनसङ्ख्या कथम् आसीत् इति ज्ञानार्थम् ।

13) जनसङ्ख्यामूलसूत्राणामवगाहनार्थम् ।

14) जनसङ्ख्यायाः विस्फोटककारणानि कानि? तानि कथं निवारणीयानि? इति ज्ञानसम्पादनार्थम्।

15) जनसङ्ख्यावृद्धेरुपरि जनसान्द्रतायाश्च प्रभावः, तस्य विशदीकरणार्थम् ।

16) समाजस्वरूपस्योपरि, परिणामानामुपरि च मानवस्य प्रवर्तनाप्रभावस्य परिशीलनार्थम् ।

17) जनसङ्ख्याशिक्षायां परिशोधनार्थम् ।

18) परिसरैः सह समस्यारहितजीवनयापने शिक्षणार्थम् ।

19) देशस्य, विश्वस्य च श्रेयसे मानवस्य योगदानार्थम् ।

20) जननमरणानि, स्थानान्तरगमनानि, वृद्धिः, इत्यादिविषये ज्ञानसम्पादनार्थम् ।

21) वैज्ञानिक-सांसारिक-आरोग्य-वैद्यशास्त्राभिवृद्धेः कारणात् जननमरणयोः मध्ये असन्तुलना वर्तते । तयोः सन्तुलनसाधनार्थम् ।


ISSN: 2320-740X

22) जनसङ्ख्याविशेषाणां चयनम्, समीक्षणं तेषामुपरि रेखाचित्रादीनाम् उपकरणानां निर्माणे नैपुण्यसम्पादनार्थम् ।

23) अपरिमितजनसङ्ख्या, परिसरेष्वपि दुष्परिणामान् जनयति । छात्राणां तादृशदुष्परिणामानाम् अवगाहनार्थम् ।

24) जनसङ्ख्याविषये अन्धविश्वासान् दूरीकृत्य शास्त्रीयदृक्पथपरिशीलनस्य अवकाशार्थम् ।

25) स्त्रीणां कुटुम्बे समाजे च पूज्यभावं गौरवस्थानं च दातुम् ।

26) भौतिकावसराः, आहारः, प्राकृतिकसंसाधनानि, एतेषामुपरि तथा वनविधानस्योपरि जनसङ्ख्याप्रभावः कथं भवति इति ज्ञातुम् ।

27) व्यक्ति-कुटुम्ब-जीवनप्रमाणानामुपरि वर्धमानजनसङ्ख्यायाः प्रभावः कीदृशः अस्ति इति अवगाहनार्थम् ।

28) जन्तुषु, मानवेषु सन्तानोत्पत्तिक्रमं विज्ञाय कुटुम्बपरिमितेः आवश्यकता का इति ज्ञानार्थम् ।

29) पौष्टिकाहारः, सन्तुलिताहारः, आहारलोपः इत्यादीन् विषयान्, परिशील्य राष्ट्रिययान्ताराष्ट्रियस्तरेषु जनसङ्ख्यावृद्धिः, आरोग्यसमस्याः, इत्यादिविषयेषु ज्ञानसम्पादनार्थम् ।

30) आर्थिकप्रगतिः, समाजक्षेपः, जनसङ्ख्यावृद्धिः, एतेषां विषयाणां परस्परसम्बन्धावगाहनार्थम् ।

31) विविधस्तरेषु जनसङ्ख्यासमस्यानामुपरि निर्णयस्वीकरणे सामर्थ्यसम्पादनार्थम् ।

32) राष्ट्रिय- अन्ताराष्ट्रियस्तरेषु जनसङ्ख्यावृद्धेः पद्धतीनाम् अवगाहनवर्धनार्थम् ।

33) व्यक्तिगतपरिशुद्धतायाः, इतरेषां तथा परिसराणां परिशुद्धतायाः प्रयोजनानामवगाहनार्थम् ।

एतानि सर्वाणि जनसङ्ख्याशिक्षायाः उद्देश्यानि वर्तन्ते ।

**********

# आकाशाधिकरणम्

**डा. विश्वनाथ हेगडे**

**सहायकाचार्यः, अद्वैतवेदान्तविभागः**

ब्रह्मसूत्रस्य प्रथमाध्यायस्य प्रथमपादस्य अष्टमम् अधिकरणम् इदम् आकाशाधिकरणम् । स्पष्टब्रह्मलिङ्गवाक्यानां ब्रह्मणि समन्वयप्रदर्शनात्मके अस्मिन् प्रथमे पादे आकाशशब्दार्थनिश्चयाय अधिकरणमिदं प्रवृत्तम् । अधिकरणेऽस्मिन् ' **आकाशस्तल्लिङ्गात्** ' इति एकमेव सूत्रं विद्यते । छान्दोग्योपनिषदि काचित् आख्यायिका श्रूयते । तत्र शिलको नामकः शलावतः पुत्रः, चिकितायनस्य पुत्रः दल्भगोत्रः दाल्भ्यः, प्रवाहणो नामकः जीवलस्य पुत्रश्चेति त्रयः उद्गीथविद्यायां निपुणाः बभूवुः । तैः त्रिभिः पक्षप्रतिपक्षोपन्यासपूर्वकम् उद्गीथज्ञाननिमित्ता विचारणा विपरीतग्रहणनाशात्मिका अपूर्वविज्ञानोपजनना आरभ्यते । तथा च श्रुतिः **'त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति**'[1] इति ।

तस्मिन् संवादे प्रथमं शालावत्यः दाल्भ्यं प्रति "का साम्नो गतिः?[2]" इति प्रश्नमवतारयति । तत्र उपास्यत्वेन प्रकृतस्य उद्गीथस्य आश्रयः कः इति तस्य प्रश्नः । एवं पृष्टो दाल्भ्य उवाच - **'स्वर'**[3] इति । साम्नः स्वरात्मकत्वात् स्वर एव आश्रयः साम्नः इति तस्य आशयः । यो यदात्मकः स तद्गतिस्तदाश्रयश्च भवति । ततः स्वरस्य का गतिरिति पृष्टे प्राण इत्युवाच । प्राणस्य अन्नम्, अन्नस्य आपः, अपाम् असौ लोकः, अमुष्य लोकस्य स्वर्गो गतिरिति प्रश्नोत्तरपरम्परा प्रवृत्ता । तच्छ्रुत्वा शालावत्येन 'अप्रतिष्ठितं वै

[1] छान्दोग्य १.८.१

[2] छान्दोग्य १.८.४

[3] छान्दोग्य १.८.४


ISSN: 2320-740X

किल ते दाल्भ्य साम[1]' इति तदुक्तं निन्दिते सति दाल्भ्यः 'अस्य लोकस्य का गतिः' इत्यपृच्छत् । शालावत्यः 'अयं लोकः' इत्युवाच । तमुक्तवन्तं जैवलिः 'अन्तवद्वै किल ते शालावत्य साम' इति निनिन्द। अस्य लोकस्य का गतिरिति शालावत्येन पृष्टः सन् जैवलिरुवाच : '**आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्**[2]' इति । इदं छान्दोग्यवाक्यम् अस्याधिकरणस्य **विषयः** ।

अत्र **संशयः –** 'आकाश इति होवाच' इत्यत्र भूताकाशे ब्रह्मणि च आकाशशब्दस्य प्रयोगदर्शनात् आकाशशब्दः परं ब्रह्म अभिधत्ते अथवा भूताकाशमिति । अत्र **संशयबीजं** तु उभयत्र प्रयोगदर्शनमेव । तथा च भूताकाशे आकाशशब्दः लोके वेदे च प्रसिद्धः । **'आत्मन आकाशः सम्भूतः'** इति वेदेऽपि भूताकाशार्थे आकाशशब्दः प्रयुक्तः । तथैव लोके आकाशशब्दस्य भूताकाशे रूढ्या प्रसिद्धिरस्ति । एवमेव ब्रह्मण्यपि आकाशशब्दः वेदे प्रयुक्तः । यथा '**यदेष आकाश आनन्दो न स्यात्**'[3] इत्यादि । अत्र असाधारणस्य आनन्दत्वस्य श्रवणात् आकाशो ब्रह्म इत्यवधारितम् । तथा च अस्मिन् वाक्ये असाधारणगुणः श्रूयते ।

एवमेव वाक्यशेषबलादपि क्वचित् आकाशशब्दस्य ब्रह्मार्थकत्वं निर्णीतमस्ति । यथा **'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म ।'**[4] इति । अस्मिन् वाक्ये तावत् वै नाम इति निपातौ आकाशस्य नामरुपोपलक्षितसर्वप्रपञ्चनिर्वाहकत्वप्रसिध्यर्थौ । ते नामरूपे यदन्तरा यस्मात् अन्ये यस्य वा मध्ये स्तः, तन्नामरूपास्पृष्टं ब्रह्म इति वाक्यशेषात् अत्र आकाशो ब्रह्म इत्यर्थो ज्ञायते । एवमेव **'य एषो**

---

[1] छान्दोग्य १.८.६

[2] छान्दोग्य ८.९.१

[3] तैत्तिरीयक २.७

[4] छान्दोग्य ८.१४.१

**अन्तर्हृदय आकाशस्तस्मिन् शेते'** इत्यादि वाक्यानि अत्र उदाहर्तुं शक्यानि । यथा एतेषु वाक्येषु आकाशो ब्रह्म इति निर्णीतं तथा अत्रापि आकाशशब्दस्य श्रूयमाणत्वात् ब्रह्म इत्यपि अर्थो भवितुमर्हति । तथा च उभयत्र प्रयोगदर्शनात् किम् आकाशशब्दः परं ब्रह्म उत भूताकाशम् इति **संशयः** ।

अत्र **पूर्वपक्षः** – आकाशशब्दः भूताकाशम् इति । यद्यपि आकाशशब्दस्य कुत्रचित् ब्रह्मार्थकत्वं निर्णीतं चेदपि अत्र प्रथमश्रुताकाशश्रुत्या आकाशस्य भूतार्थे रूढत्वात् चरमश्रुतब्रह्मलिङ्गबाधात् न श्रुत्यन्तरेण ब्रह्मार्थता स्वीकर्तुं शक्या । तथा च आकाशशब्दस्य भूताकाशे प्रसिद्धतरत्वात् शीघ्रं भूताकाशमेव आकाशशब्दश्रवणे सति बुद्धिमारोहति । न च ब्रह्मण्यपि आकाशशब्दस्य साधारणत्वात् आकाशश्रुतिः ब्रह्मलिङ्गबाधिका न भवितुमर्हति इति चेन्न, अनेकार्थस्य अन्याय्यत्वात् । तथा च '**अस्य लोकस्य का गतिः?**' इति प्रश्ने '**आकश इति होवाच**' इत्याकाशस्य गतित्वेन प्रतिपाद्यतया प्राधान्यात्, '**सर्वाणि ह वा**' इत्यादीनां तु तद्विशेषणतया गुणत्वात् गुणे त्वन्याय्यकल्पना इति बहून्यपि अप्रधानानि प्रधानानुरोधेन नेतव्यानि । अपि च आकाश इति होवाच इत्युत्तरे प्रथमावगतम् आकाशशब्दम् उपजातविरोधि, तेन तदनुरक्तायां बुद्धौ यद्यदेव तदेकवाक्यगतमुपनिपतति तत्तजघन्यतया उपसञ्जातविरोधि तदानुगुण्येनैव व्यवस्थानमर्हति । अतः उभयत्र सम्भवः तुल्यः इत्यतः ब्रह्मणि भक्त्या प्रयोगः उपपद्यते ।

लोके तु आकाशशब्दस्य भूताकाशे निरूढत्वात् तत्पूर्वकत्वाच्च वैदिकार्थप्रतीतेः ब्रह्मणि मुख्यः प्रयोगो नोपपद्यते । तस्मात् ब्रह्मणि आकाशशब्दः गौणः भवितुमर्हति । आकाशे तु मुख्योऽर्थः भवितुमर्हति। न च मुख्यसम्भवे गौणोऽर्थः ग्रहणमर्हति । ननु भूताकाशस्य मुख्यार्थपरिग्रहे '**सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते**' इत्यादि वाक्यशेषः नोपपद्यते इति चेन्न । वाय्वादिकं प्रति भूताकाशस्यापि कारणत्वं श्रूयत इत्यतः इदं वाक्यं भूताकाश एव भवितुमर्हति । तथा च श्रुतिः '**तस्माद्वा**


ISSN: 2320-740X

**एतस्मादात्मन आकाशः सम्भूतः । आकाशाद्वायुः वायोरग्निः...'**[1] इत्यादि । तथापि कथं भूताकाशे वाक्यशेषः उपपद्येत इति चेत् ज्यायस्त्वपरायणत्वयोः श्रवणात् । ज्यास्त्वपरायणत्वे अपि वाय्वाद्यपेक्षया भूताकाशस्य भवितुमर्हतः । यथा भूताकाशं वाय्वाद्यपेक्षया ज्यायः । एवमेव वाय्वादीनां परायणञ्च । अतः आकाशशब्देन भूताकाशस्य ग्रहणं कर्त्तव्यमिति **पूर्वपक्षः** ।

अत्र **सिद्धान्तः – 'आकाशस्तल्लिङ्गात्'** इति । आकाशशब्दवाच्यं परं ब्रह्मैव । कुत इति चेत् 'तल्लिङ्गात्' । तस्य लिङ्गं तल्लिङ्गं तस्मात् तल्लिङ्गात् । तच्च ब्रह्म । तथा चात्र परब्रह्मणः नैकानि लिङ्गान्युक्तानि । 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यादिः । सर्वेषामपि भूतानां परं ब्रह्मैव उत्पत्तिहेतुः इति वेदान्तस्य सिद्धान्तः । किं च प्रश्नानुगुण्येन उत्तरं वक्तव्यम् । तत्र प्रश्नः 'अस्य लोकस्य का गतिः' इति । तथा च दृश्यमाननामरूपप्रपञ्चमात्रगतिविषयः सः प्रश्नः । तदनुरोधात् य एव सर्वस्य लोकस्य गतिः स एव प्रतिवक्तव्यः । भूताकाशं तु सर्वस्य लोकस्य गतिः न भवितुमर्हति । यतः भूताकाशस्यापि लोकमध्यपातित्वात् । यदि भूताकाशमेव अस्य लोकस्य गतिरित्युच्यते तदानीं तदेव तस्य गतिरित्युक्तं स्यात् । तदानीं विरोधः ।

ननु उत्तरे भूताकाशस्य श्रवणात् भूताकाशकार्यमेव पृष्टम् इति स्वीकर्तुं शक्यं खलु इति चेन्न – प्रश्नस्य प्रथमावगतस्य अनुपजातविरोधिनः लोकसामान्यविषयस्य उपजातविरोधिना उत्तरेण सङ्कोचानुपपत्तेः तदनुरोधेन उत्तरस्य व्याख्यानात् । उत्तरेऽपि भूताकाशस्वीकारे बह्वसमञ्जसं स्यात् । तथा च 'आकाशादेव समुत्पद्यन्ते' इत्यत्र एवकारो वर्त्तते । यद्यत्र भूताकाशं स्वीक्रियते तदानीम् अवधारणं व्यर्थं स्यात् । यतः अपां नाकाश एव कारणमपि तु तेजोऽपि । 'तत्तेजोऽसृजत'[2] इति श्रुतेः । पृथिवीं प्रत्यप्याकाश एव न कारणम् । अपि तु तेजः जलमपि । अत एवकारो व्यर्थः स्यात् ।

[1] तैत्तिरीय २.१

[2] छा.उ.६.२.३

ब्रह्मरूपमूलकारणविवक्षायां तु ब्रह्मण्येव अवधारणं समञ्जसं भवति 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि'[1] इति श्रुतेः ।

किं चात्र भूताकाशस्वीकारे श्रूयमाणस्य सर्वशब्दस्य सङ्कोचः करणीय आपतति । विना कारणमत्र सङ्कोचः न स्वीकर्त्तव्यः । इत्थमेव 'आकाशं प्रत्यस्तं यन्ति'[2] इति श्रुत्यापि सर्वेषां भूतानां लयकारणत्वमपि श्रूयते । तच्च परब्रह्मण्येव समन्वेति । इत्थं सर्वभूतोत्पादकत्वं स्थित्याधारत्वं लयाधारत्वं चेति परब्रह्मणो लिङ्गानि भवन्ति । किं च ज्यायस्त्वपरायणत्वेऽपि ब्रह्मणः लिङ्गभूते । यतः सर्वेभ्यः भूतेभ्यः ज्यायस्त्वं ब्रह्मण एव भवितुमर्हति 'ज्यायानन्तरिक्षात्'[3] इति श्रुतेः । भूताकाशस्वीकारे स्वयमेव स्वस्मात् ज्यायान् न भवितुमर्हति । एवं परमयणमपि ब्रह्मैव । तत्र ब्रह्मणः परमकारणत्वात् परायणत्वमपि परमात्मन्येव सङ्गच्छते । तथा च श्रुतिः – 'विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणम्'[4] इति ।

अत्र दाल्भ्यशालावत्यौ ब्राह्मणौ राजा चेति त्रय उद्गीथविद्याकुशलाः विचारयामासुः, किमुद्गीथस्य परायणम्? इति । तत्र स्वर्गादागताभिः अद्भिः जीवितेन प्राणेन क्रियमाणोद्गीथस्य स्वर्ग एव परायणमिति दाल्भ्यपक्षम् अप्रतिष्ठादोषेण शालावत्यो निन्दित्वा स्वर्गस्यापि कर्मद्वारा हेतुरयं लोकः प्रतिष्ठा इत्युवाच । तं शालावत्यस्य पक्षम् 'अन्तवद्वै किल ते शालावत्य साम'इति राजा निन्दित्वा अनन्तमेवाकाशं वक्ति । भूताकाशोक्तौ अन्तवत्त्वदोषतादवस्थ्यात् भूताकाशः अयमाकाशशब्दः न भवितुमर्हति । तथा च जैवलिना अनन्तः आकाशोऽत्र उपदिष्टः । तथा च श्रुतिः ' स एष परोवरीयानुद्गीथः स एषोऽनन्तः'[5] इति। अत्र आकाशमुद्गीथे सम्पाद्य उपसंहारः कृतः । उद्गीथ आकाश एवेति सम्पादनात् उद्गीथस्य अनन्तत्वादिकं

[1] छा.उ.६.३.२

[2] छा.उ.१.९.१

[3] छा. उ ३।१४।३

[4] बृ.उ.३।९।२८

[5] छा.उ.१।९।२


ISSN: 2320-740X

न स्वतः । स उद्गीथावयवः ओङ्कारः, एष आकाशात्मकः । परश्च रसतमत्वादिगुणैः, अतः अक्षरान्तरेभ्यो वरीयः परोवरीयः । श्रेष्ठ इत्यर्थः । पर इत्यव्ययं सकारान्तं वा, तत्र परः कृत्स्नमित्यर्थो भवति । परश्चासौ वरेभ्योऽतिशयेन वरः परोवरीयानित्यर्थः ।

किं चात्र अनन्तशब्दः श्रूयमाणः देशतः गुणतश्च तस्य उत्कृष्टत्वं ब्रूते । देशतः अनन्तत्वं परत्वम् । गुणतः उत्कृष्टत्वं वरीयस्त्वम् । कालतो वस्तुतश्चापरिच्छिन्नत्वम् आनन्त्यम् । एतादृशं त्रिधा आनन्त्यं न ब्रह्मणोऽन्यत्र सम्भवति । इदमानन्त्यम् उपक्रमेऽपि श्रुतम् उपसंहारे च श्रूयते इत्यतः उपक्रमोपसंहारप्रतिपाद्यतात्पर्यवत् आनन्त्यम् आकाशस्य ब्रह्मत्वं बोधयति ।

यत्पुनरुक्तं प्रसिद्धिबलात् भूताकाशं प्रथमतरं प्रतीयत इति । तत्रोच्यते – एवकारसर्वशब्दानुगृहीतानन्त्यादिबहुलिङ्गानाम् अनुग्रहाय 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन एकस्याः श्रुतेः बाधो युक्तः । किं च अत्र आकाशशब्दश्रवणेन भूताकाशमेव प्रथमं प्रतीयत इति नियमो नास्ति । यतः आकाशपदात् गौणार्थस्य ब्रह्मणोऽपि प्रथमप्रतीतिरस्ति । तस्य तत्पर्यायाणां च ब्रह्मणि प्रयोगप्राचुर्यात् । तथा च श्रुतिः 'आकाशो वै नाम नामरूपयोर्निर्वहिता' इति । एवमेव आकाशपर्यायवाचिनामपि ब्रह्मणि प्रयोगे श्रुतयः – 'ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः'[1], 'सैषा भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिता[2]' इत्याद्याः । किं च 'ओं कं ब्रह्म खं ब्रह्म'[3], 'खं पुराणम्'[4] इत्यादीनि च । अत्र कंशब्देन श्रूयमाणं सुखम् इन्द्रियसंयोगजं नेति वारयितुम् आकाशवाचकं 'खं'पदम् । 'पुराणम्' इति शब्देन तस्य भूताकाशत्वं व्यासेधति श्रुतिः ।

---

[1] ऋ.सं.१।१६४।३९

[2] तै.उ.३।६

[3] छा. ४।१०।५

[4] बृ.उ ५।१

किं च तत्रैव प्रथमानुगुण्येन उत्तरं नीयते, यत्र तन्नेतुं शक्यम् । यत्र त्वशक्यं तत्र उत्तरानुगुण्येन इतरन्नेयम् । तत्र उदाहरणम् 'अग्निरधीते अनुवाकम्' इति । अत्र वाक्योपक्रमगतोऽप्यग्निशब्दः माणवकविषयो दृश्यते । इत्थम् आकाशश्ब्दवाच्यं परमेव ब्रह्म इति बहुभिः लिङ्गैः ज्ञायते इति **सिद्धान्तः** ।

यथा पूर्वस्मिन् अन्तरधिकरणे अव्यभिचरित-अपहतपाप्मत्वादि ब्रह्मलिङ्गेन रूपवत्त्वादिदुर्बललिङ्गानि अन्यथा नीतानि । न तथा अत्र लिङ्गाद् आकाशश्रुतिः अन्यथा नेतुं शक्या, लिङ्गापेक्षया श्रुतेः बलवत्त्वात् इति पूर्वाधिकरणेन अस्याधिकरणस्य **प्रत्युदाहरणसङ्गतिः** । स्पष्टब्रह्मलिङ्गोक्तश्रुतेरुद्गीथे संपाद्य उपास्ये ब्रह्मणि समन्वयात् पादाध्याययोः **सङ्गतयः ।** पूर्वपक्षे भूताकाशदृष्ट्या उद्गीथोपास्तिः. सिद्धान्ते ब्रह्मदृष्ट्या उपास्तिः **फलम्** ।

**सहायकग्रन्थसूची –**

ब्रह्मसूत्रशाङ्करभाष्यम्

रत्नप्रभा

भामती

न्यायनिर्णयः

वेदान्तकल्पतरुः

शारीरकमीमांसाशास्त्रसङ्ग्रहः

**********


ISSN: 2320-740X

## पञ्चानां महायज्ञानां प्राशस्त्यम्

**डा. प्रमोद भट्टः**

**सहायकाचार्यः,व्याकरणविभागः**

**पञ्चानां महायज्ञानां प्राशस्त्यम्**

"पञ्च वा एते महायज्ञाः" इत्यादयः मन्त्राः पञ्चानां यज्ञानां प्राशस्त्यबोधकाः तैत्तरीयारण्यके द्वितीयप्रपाठके दशमानुवाकाद् आरभ्यन्ते । तत्र पञ्च महायज्ञाः यथा देवयज्ञः, पितृयज्ञः, भूतयज्ञः, मनुष्ययज्ञः, ब्रह्मयज्ञः इति । "पुरोडाशादिहविर्मुख्यं तदभावे समिधमप्यग्नौ देवान् उद्दिश्य जुहोति सः दैवयज्ञः"। अग्नौ समिधा समर्पिताहुतिः सूर्यं प्राप्य सूर्याद् वृष्टिः, वृष्टेरन्नम् अन्नात्प्रजाः जायन्ते । वायुमाश्रित्य यथा सकलजन्तुः जीवति गृहस्थमाश्रित्य एव अन्याश्रमिणः जीवन्ति यथा ब्रह्मचारिणः, वानप्रस्थाश्रमिणः, सन्यासिनः अन्नं स्वीकृत्य जीवन्ति। अतः गृहस्थाश्रमः श्रेष्ठः । अत एव उच्यते "धन्यो गृहस्थाश्रमः" इति । अक्षय्यस्वर्गसुखम् इह लोके सर्वसुखम् ईप्सुः गृहस्थाश्रमधर्मं सम्यक् परिपालयेत् । ऋषयः, पितरः, देवताः, प्राणिनः, अतिथयश्च इमे सर्वेऽपि गृहस्थाद्वेदाध्ययनम्, द्रव्यम्, कव्यम्, आहुतिम्, बलिम्, भोजनादिकं वाञ्छन्ति अतः अवश्यमेव गृहस्थाश्रमः परिपालनीयः । तदुक्तं मनुस्मृतौ –

**ऋषयः पितरो देवा भूतान्यतिथयस्तथा ।**

**आशासते कुटुम्बिभ्यस्तेभ्यः कार्यं विजानत॥** इति ॥( म. स्मृ ३/८० )

मार्कण्डेयपुराणे

**वत्स गार्हस्थ्यमास्थाय नरः सर्वमिदं जगत् ।**

**पुष्णाति तेन लोकांश्च स जयत्यभिवाञ्छितान् ॥**

**पितरो मुनयो देवाः भूतानि मनुजास्तथा ।**

**कृमिकीटपतङ्गाश्च वयांसि पशवोऽसुराः ॥**

गृहस्थमुपजीवन्ति ततस्तृप्तिं प्रयान्ति च ।

मुखं चास्य निरीक्षन्ते अपि नो दास्यतीति वै ॥ इति ॥ (२६/ ३, ४, ५ )

ऋक्पृष्ठासौ यजुर्मध्या सामवक्त्रशिरोधरा ।

इषापूर्तविषाणा च साधुसूक्ततनूरुहा ॥

शान्तिपुष्टिशकृन्मूत्रा वर्णपादप्रतिष्ठिता ।

आजीव्यमाना जगतां साऽक्षया नापचीयते ॥

स्वाहाकारः स्वधाकारो वषट्कारश्च पुत्रक ।

हन्तकारस्तथैवान्यः तस्याः स्तनचतुष्टयम् ॥

स्वाहाकारं स्तनं देवाः पितरश्च स्वधामयम् ।

मुनयश्च वषट्कारं देवभूतसुरेतराः ॥

हन्तकारं मनुष्याश्च पिबन्ति सततं स्तनम् ।

एवमाप्याययत्येषा देवादीनखिलांस्त्रयीम् ॥

एतद्वत्स चतुष्टयं तु नरः स्तनचतुष्टये ।

न नियुञ्ज्यात् यथाकालं तेन स्युस्ते विमानिताः ॥

देवादीनखिलान्येषु सन्तर्पयति मानवः ।

तेषामुच्छेदकर्ता यः पुरुषोऽत्यन्तपापकृत् ॥

स तमस्यन्धतामिस्रो तामिस्रे च निमज्जति ।

यस्त्वैतां मानवो धेनुं स्वैर्वत्सैरमरादिभिः ॥

प्रापयत्युचिते काले स स्वर्गायोपपद्यते ।

तस्मात्पुत्र मनुष्येण देवर्षिपितृमानवाः ॥ (२६ / १५ तः २४)

इत्यादिभिः श्लोकैः अपि गृहस्थस्य कर्तव्यविषयः विशदीक्रीयते मार्काण्डेयपुराणे षड्विंशे अध्याये ।


ISSN: 2320-740X

पञ्च यज्ञान् यः न करोति सः जीवन्मृत एव । तथा हि

**देवतातिथिभृत्यानां पितृणामात्मनश्च यः ।**

**न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥** इति ॥(म. स्मृ ३/ ७२)

केचन ऋषयः अहुतः, हुतः, प्रहुतः, ब्राह्म्यहुतः, प्राश्रितः इति पञ्च यज्ञाः इति कथयन्ति इति मनुरब्रवीत् | तथा हि -

**जपोऽहुतः हुतो होमः प्रहुतो भौतिको बलिः |**

**ब्राह्म्यं हुतं द्विजाग्र्यार्थं** प्राश्रितं **पितृतर्पणम् ||** इति ||(म. स्मृ. 3/74)

जपः अहुतयज्ञः, वैश्वदेवाख्यः देवयज्ञः, हुतयज्ञः, भूतबलिः प्रहुतयज्ञः, ब्राह्मणसत्कारः ब्राह्म्यहुतयज्ञः, पितृतर्पणं प्राश्रितयज्ञः, ब्रह्मयज्ञम्, दैवयज्ञम्, पितृयज्ञं च प्रतिदिनं कर्तव्यमेव तेन सचराचर-प्रपञ्चः रक्षितो भविष्यति |

पिण्डदानासम्भवेऽपि जलमात्रमपि पितृभ्यः स्वधा अस्तु इति स्वधाशब्देन यद्ददाति सोऽयं पितृयज्ञः |

वैश्वदेवानुष्ठानादूर्ध्वं बहिर्देशं वायसादिभ्यो भूतेभ्यो यद्बलिप्रदानं सोऽयं भूतयज्ञः |

वैश्वदेवादूर्ध्वं हन्तकारात् व्यतिरिक्तमन्नमतिथिभ्य स्त्र्यवरेभ्यः ब्राह्मणेभ्यो यद्दीयते सः मनुष्ययज्ञः |

स्वस्यासाधारणत्वेन पितृपितामहादिपरम्परया प्राप्ता वेदशाखा स्वाध्यायः | तत्र विद्यमानमृगादीनाम् अन्यतममेकमपि वाक्यमपि अधीयीत इति यत्सोऽयं ब्रह्मयज्ञः |

ऋग्वेदाध्ययनेन क्षीरपूर्णा महानद्यः स्वधाकारेण दत्तं हविर्भूत्त्वा पितृन् अभिलक्ष्य प्रवहन्ति । तथा यजुश्शाखाध्ययनेन घृतपूर्णमहानदीप्रवाहः भवति । सामवेदाध्ययनेन पितृभ्यः सोमः धारया युक्तः प्रवहति । एवमथर्वाङ्गिरसाध्ययनेन मधुपूर्णा नद्यः प्रवहन्ति । ब्राह्मणानाम् अध्ययनेन मांससम्बन्धी प्रवाहः भवति | ऋगध्ययनं यदस्ति तेन क्षीराहुतिसमाना देवानां तृप्तिर्भवति | यजुरध्ययनेन घृताहुतिसमाना तृप्तिः, सामाध्ययनेन सोमाहुतिसमाना, अथर्वाङ्गिरसाध्ययनेन मध्वाहुतिसमाना,

ब्राह्मणपुराणेतिहासादि-अध्ययनेन मेदाहुतिसमाना देवानां तृप्तिः भवति | एवं देवाः तृप्ताः सन्तः आयुस्तेजोवर्चोभिः यजमानं तर्पयन्ति |

वैवाहिकाग्नौ गृही विधिवत् सायंप्रातरौपासनम्, पञ्चमहायज्ञान्यतमं वैश्वदेवहोमम्, प्रतिदिनभोजनपाकं च कुर्यात् | चुल्लीपेषण्युपकरकण्डन्युदकुम्भादीनामुपयोगेन गृहस्थः हिंसाभाग्भवति अतः हत्यादोषभाक् सः | अतः तादृशहत्यादोषपरिहारार्थं प्रतिदिनं वैश्वदेवहोमाः वेदे, पुराणे, इतिहासे, स्मृतौ, च उपदिष्टाः सन्ति | तथा हि तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः प्रोक्तम् । तथा हि

**पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ||** (म. स्मृ. 3|69)

यस्तावत् पञ्चमहायज्ञान् शक्त्यनुसारम् आचरति गृहस्थाश्रमे कृतदोषाः तं न स्पृशन्ति | तथा हि

**पञ्चैतान्यो महायज्ञान् न हापयति शक्तितः |**

**स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ||** (म. स्मृ. 3|71)

प्रतिदिनं ब्राह्मणक्षत्रियवैश्याः अन्नव्रीहितिलोदकैः पयोमूलफलैः पितृप्रीत्यर्थं श्रद्धाभक्त्या एकं वा ब्राह्मणं भोजयेयुः | तत्र वैश्वदेवः ब्राह्मणभोजनं च निषिद्धम् - तदुक्तं मनुस्मृतौ-

**एकमप्याशयेद्विप्रं पित्रर्थे पाञ्चयज्ञिकं |**

**न चैवात्राश्रयेत्किंचिद्वैश्वदेवं प्रति द्विजम् ||** इति || (म. स्मृ. 3|83)

एकदिनार्थं ब्राह्मणः परगृहे वसति चेत् तादृशः ब्राह्मणः अतिथिः इति गीयते । अकस्मात् परस्मात् ग्रामात् सः आगतः इति कृत्वा तस्य अतिथिर्नाम | तथा हि

**एकरात्रं तु निवसन्नतिथिर्ब्राह्मणस्स्मृतः |**

**अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ||** (म. स्मृ. ३|१०२)

कथाकीर्तनादिकं कर्तुम् प्रति ग्रामम् अटन् ब्राह्मणः एकग्रामी च वैश्वदेव-बलिहरणसमये आगतः चेदपि सः अतिथिः नैव भवति | प्रतिदिनम् अतिथिसत्कारं विना स्वयमपि न भुञ्जीत | अतिथिसत्कारेण सम्पत्कीर्त्यायुष्यस्वर्गादि लभ्यते । तथा हि मनुः –


ISSN: 2320-740X

**न वै स्वयं तदाश्नीयात् अतिथिं यन्न भोजयेत् |**

**धन्यं यशस्यमायुष्यं स्वर्ग्यं वा अतिथिपूजनम् ||** इति ॥ (म. स्मृ. ३|106)

अतिथिभ्यः स्थानम्, आसनम्, शय्याम्, अपेक्षितं वस्तु सर्वमपि दद्यात् | तत्र उत्तमातिथये उत्तमोत्तमसेवा, मध्यमाय मध्यमसेवा, अधमाय अधमसेवा कर्तव्या एषा रीतिः शास्त्रविहितैव अस्ति | पाककार्ये सम्पन्ने वैश्वदेवब्राह्मणभोजनसम्पन्ने सत्यपि पाकसमाप्तौ अतिथ्यन्तरम् आगते सत्यपि तस्मै पुनः पाकं कृत्वा भोजयेत्, तत्र पुनः बलिहरणस्य वैश्वदेवस्य वा आवश्यकता नास्ति | भोजनार्थम् आगतः अतिथिः स्वयं स्वकुलगोत्राद्युच्चारणं न कुर्यात् । यदि करोति बुधैः सः वान्ताशीतीत्युच्यते | तथा हि -

**न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत् |**

**भोजनार्थं हि ते शंसन् वान्ताशीतीत्युच्यते बुधैः ||**

(म. स्मृ. ३|110)

ब्राह्मणस्य गृहमागताः क्षत्रियवैश्यशूद्राः, मित्राणि, सम्बन्धिनः, एते अतिथयः नैव भवन्ति | एतान् सादरं सत्कृत्य भोजयेत् | अतिथीनां ब्राह्मणानां, स्वभृत्यसेवकानां भोजनानन्तरमेव अवशिष्टमेव यजमानदम्पती भुञ्जीयाताम् | देवान्, ऋषीन्, मनुष्यान्, पितॄन्, गृहस्थदेवताः पूजयित्वैव पश्चात् गृहस्थः शेषभुक् भवेत् | तथा हि मनुः

**देवानृषीन्मनुष्यांश्च पितॄन् गृहस्थदेवताः |**

**पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् ||** (म. स्मृ. ३|117

**अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् |**

**यज्ञशिष्टाशनं ह्येतत्सतामन्नं विधीयते ||** (म. स्मृ. ३|118)

राजा, ऋत्विक्, स्नातकः, गुरुः, जामाता, श्वशुरः, मातुलः एते सप्त जनाः गृहमागताश्चेत्, एकवर्षानन्तरमागताः चेद्वा तान् मधुपर्केण सत्कारयेत् | सायं कृतपाकेन पत्नी मन्त्ररहितं बलिहरणं कुर्यात् एवं वैश्वदेवः सायं प्रातः कीर्तितो वर्तते मनुस्मृतौ | वेदपारगं ब्राह्मणं दूरादेव परीक्षेत यतो हि स एव

देवपितृकार्ये दीयमानहव्यकव्यानाम् आश्रयरूपः स एव अतिथिः इति स्मृतः | श्राद्धे श्रोत्रियब्राह्मणेभ्यः एव हव्यकव्यादिकं दद्यात् । अयं प्रधानः कल्पः ।

प्रधानकल्पासम्भवे मातामहः, मातुलः, भागिनेयः, श्वशुरः, विद्यादाता गुरुः, दौहित्रः, बन्धुः, ऋत्विक्, स्वपुरोहितः, सम्बन्धी, शिष्यः एतेषु दशसु अन्यतमं निमन्त्र्य भोजयेत् | दैवे कर्मणि धर्मवित् ब्राह्मणं न परीक्षेत | प्राप्ते पित्र्ये कर्मणि प्रयत्नतः परीक्षेत | क्रोधरहितान्, अनुग्रहशीलान्, पुरातनान्, लोककल्याणकारिणः योग्याः । भोजनविषये एकोदिष्टश्राद्धे "स्वदितमिति” गोष्ठिश्राद्धे “सुश्रुतम्” इति अभ्युदयश्राद्धे “सम्पन्नम्" इति देवश्राद्धे “रुचितम्” इति ब्राह्मणान् पृच्छेत् | तथा हि

**पित्र्ये स्वदितमित्येव वाच्यं गोष्ठे तु सुश्रुतम् ।**

**सम्पन्नमित्यभ्युदये दैवं रुचितमित्यपि ॥ इति ॥**

(म. स्मृ. 3|254)

अपराह्णः, दर्भाः, श्राद्धस्थानसम्पादनम्, तिलाः, सृष्टिर्मृष्टिः, पङ्क्तिपावनाः द्विजाः एते श्राद्धकर्मणः सम्पदः भवन्ति |

श्राद्धभोजनानन्तरं पितृस्वरूपिब्राह्मणान् उद्दिश्य स्ववंशे दातारो अभिवर्धताम्, वेदसन्ततिः अभिवर्धताम्, सत्सन्तानः अभिवर्धताम्, शास्त्रे श्रद्धा अभिवर्धताम्, सम्पत्समृद्धिर्भवतु इत्येवं प्रार्थयेत् | पतिव्रताधर्मपत्नी पितरि अनन्यमनस्का भूत्वा सभक्तिश्रद्धं पुत्रसन्तानापेक्षया त्रिषु पिण्डेषु अन्यतमं पिण्डं भुञ्जीत | तत्पिण्डप्रसादभोजनेन आयुष्मन्तम्, यशस्वन्तम्, बुद्धिमन्तम्, सात्त्विकगुणवन्तं पुत्रं प्राप्नोति निश्चितम् | तथा हि –

**आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम् |**

**धनवन्तं प्रजावन्तं सात्त्विकं धार्मिकं तथा ॥ इति ॥** (म. स्मृ. 3|263)

**********


ISSN: 2320-740X

# प्राचीनालङ्कारिकाणां काव्यकारणविवेचनम्

डा .कोम्पेल्लि विनयकुमारः

सहायकाचार्यः, साहित्यविभागः

विश्वेऽस्मिन् सर्वमपि कार्यं कारणपराधीनमेव इति निर्विवादम्। यतः विना इष्टिकाभिः कोऽपि प्रासादः न निर्मीयते। न वा विना तन्तुभिः पटः उत्पद्यते। मृदादिद्रव्यमनपेक्ष्य निष्पन्नो घटोऽपि न क्वचित् दृश्यते। अतः सर्वमपि कार्यं कारणपरतन्त्रमेव। तथैव काव्यस्य कारणं किमिति प्रश्नः समुदितः समाहितश्च भामहादिभिः प्राचीनैरालङ्कारिकैः आनन्दवर्धनादिभिः नवीनालङ्कारिकैश्च । अत्र शोधपत्रेऽस्मिन् प्राचीनालङ्कारिकाणां भामहादीनां काव्यकारणं विविच्यते।

तत्र काव्यकारणविषये प्रायशः सर्वेषामपि आलङ्कारिकाणाम् आलोचनासरणौ प्रतिभाव्युत्पत्त्यभ्यासात्मकाः त्रयः पदार्थाः विद्योतन्ते। परन्तु त्रयाणाम् अमीषां कारणत्वविषये सर्वेषु आलङ्कारिकेषु ऐकमत्यं सर्वात्मना अस्तीति वक्तुं न शक्यते। यतःप्राचीननवीनालङ्कारिकयोः केचिदेषां प्रत्येकशः काव्यकारणत्वं स्वीकुर्वन्ति। केचिच्च समुदितानाम् एषां कारणत्वं प्रतिपादयन्ति। अपरे च प्रतिभाया एव काव्यकारणत्वं स्वीकुर्वन्ति। इत्थं विभिन्नानि मतानि दृश्यन्ते।

अग्निपुराणस्य कर्तुः व्यासमहर्षेः पश्चात् आचार्यः भामहः एव प्रथमः प्राचीनः आलङ्कारिकः , रुद्रटाः प्राचीनालङ्कारिकाः इति परिगण्यन्ते।-वामन-तदनन्तरं दण्डी

**भामहमतम्-**

- भामहः काव्यालङ्कारनाम्नि स्वालङ्कारशास्त्रग्रन्थे इत्थं निगदति यत्

**शास्त्रं गुरूपदेशादध्येतुं जडधियोऽप्यलम्।**

**काव्यं तु जायते जातु कस्यचित् प्रतिभावतः**[1]।। इति।।

काव्याध्ययने निर्माणे च वैशिष्ट्यं तु प्रतिभायाः एव इति। शास्त्राणि सततोद्योगेन -अर्थात् शास्त्र गुरूपदेशेन वा अध्येतुं पार्यन्ते। परन्तु काव्यं तावत् प्रतिभां विना नैव अध्येतुं न च निर्मातुं शक्यते। काव्याध्ययने निर्माणे च स्वाभाविकी प्रतिभा एव अपेक्ष्यते। वेदशास्त्राणि जडधीभिरपि गुरूपदेशात् सतताभ्यासाद्वा अधिगन्तुं पार्यन्ते। एवं काव्यं स्वतीव्रप्रतिभां विना पदात् पदमपि चलितुं न शक्नोति। अतः भामहः कवेः काव्योत्पत्तौ प्रतिभायाः मुख्यकारणत्वं प्रदर्शयति। किञ्च स्फूर्तिरूपायाः प्रतिभायाः काव्यप्रणयने विद्यमानं महत्त्वं प्रतिपादयति –

**शब्दाभिधेये विज्ञाय कृत्वा तद्विदुपासनाम्।**

**विलोक्यान्यनिबन्धांश्च कार्यः काव्यक्रियाऽऽदरः**[2]।।

**"शब्दाभिधेये विज्ञाय"** इत्येवं कारिकान्तरेण इति कथयन् कवेः काव्यप्रणयने व्युत्पत्तेः आवश्यकतां प्रकटयति। किञ्च **"कृत्वा तद्विदुपासनाम्"** इत्यादिना काव्योत्पत्त्युपायत्वेन अभ्यासोऽपि सूचितः। इत्थं भामहेन कारिकाद्वयेन काव्यकारणनिर्देशं कृत्वा **"जातु कस्यचित् प्रतिभावतः"** इति प्रतिभाप्राधान्यपरोक्तेश्च प्रतिभाव्युत्पत्त्यभ्यासानां प्रत्येकमेव कारणत्वं सूचितं भवतिन तु समुच्चित्य। , अलङ्कारशास्त्रस्य प्रारम्भसमये उत्पन्नेऽस्मिन् निबन्धे प्रतिभाव्युत्पत्त्यभ्यासानां लक्षणं किमपि कण्ठतः व्युत्पत्त्यभ्यासौ अपि सामान्यतः कारणभूतौ ,नोक्तम्। ततश्च भामहमते काव्यं प्रति प्रतिभा प्रमुखकारणम् इति पर्यवस्यति।

? प्रतिभा का तथा इयं कविषु कथमागच्छतिविषयेऽस्मिन् आचार्यैः विशदरूपेण विमर्शः कृतः। , प्रायः सर्वैराचार्यैः प्रतिभा प्राक्तनसंस्कारेभ्य उत्पन्ना जन्मजाता इति स्वीक्रियते। अग्निपुराणकास्य – कथनमस्ति यत् कवित्वसामर्थ्यं प्रतिभया एव आगच्छति इति। यथा

---

[1] भामहस्य काव्यालङ्कारः – पृ.सं - २

[2] भामहस्य काव्यालङ्कारः – पृ.सं - ३


ISSN: 2320-740X

**नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।**

**कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा**।।इति।।

यतः चतुरशीतिलक्षयोनिषु परिभ्रमन् महता ,प्रथमतस्तु जगत्यस्मिन् मनुष्यजन्म एव दुर्लभम् नरत्वलाभेऽपि शास्त्रबोधो दुर्लभः। नैव सर्वे मनुष्याः शास्त्रज्ञानं लभ ,पुण्येनैव तस्य लाभात्न्तेतत्तु , नैव सर्वे विद्यावन्तः काव्यं ,जन्मान्तरसुकृतातिशयादेव प्राप्यते। विद्यालाभेऽपि काव्यकर्तृत्वं सुदुर्लभम् नैव ,तत्तु जन्मान्तरसुकृतौघपरिपाकादेव सम्भवति। कवित्वलाभेऽपि शक्तिः सुदुष्प्राप्या ,प्रणेतुं प्रभवन्ति सा तु ,सर्वे कवयः शक्तिमन्तो भवन्ति निरतिशयसुकृतौघपरिपाकादेव लभ्या। अत एवोक्तम् द्वित्रा एव – – शक्तिमन्तः कवयः भवन्ति इति। आनन्दवर्धनेन उच्यते यत्

**अव्युत्पत्तिकृतो दोषो शक्त्या संव्रियते कवेः।**

**यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते**।।इति।।

एवम् आनन्दवर्धनाचार्यमतेऽपि प्रतिभाशक्तिरेव कावा्यस्य हेतुः। एवं प्रतिभा काव्यनिर्माणे हेतुः तत्सहायकौ व्युत्पत्त्यभ्यासौ इति।

सूर्यः यथा प्रकाशनशक्तिं विना किमपि प्रकाशयितुं न समर्थःएवमेव प्रतिभां विना कविः काव्यं , स्रष्टुं न समर्थः। प्रतिभायाः प्रतिभानम् इत्यपि नामान्तरम्। प्रतिभास्वरूपं किमिति चेत् उच्यते भट्टतौतेन –

**प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता।**

**तदनुप्राणनाज्जीवेद्वर्णनानिपुणः कविः।।**

**तस्य कर्म स्मृतं काव्यम्**।इति।।

नवीनानाम् अर्थानां प्रकाशनसमर्था प्रज्ञा भवति प्रतिभा। प्रज्ञायाः प्रकारभूता प्रतिभा। प्रतिभा काव्यस्य निर्माणे हेतुः इति भामहः।

**दण्डिमतम्–**

परमाचार्यः दण्डी तु नैसर्गिकप्रतिभया सहैव कवेः बहुश्रुतञ्चापि काव्यहेतुत्वेन अङ्गीकरोति। तन्मते काव्यसम्पदः प्रतिभायाःअमन्दाभियोगस्य च अमीषां त्रयाणामपि कारणानां ,श्रुतस्य , सम्भूय कारणत्वम्। काव्यादर्शनाम्नि स्वालङ्कारशास्त्रग्रन्‍थे इत्थं निगदति यत् -

**नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम्।**

**अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः**[1]।। इति।।

अत्र कारणत्रयनिर्देशेन साकं समुच्चयार्थकचकारत्रयनिर्देशेन प्रतिभाव्युत्पत्त्यभ्यासानां त्रयाणां समुच्चित्य कारणत्वम् अभिव्यञ्जितम्। अयमेव भामहाचार्यात् दण्डिनः सिद्धान्ते विशेषः। अत्र श्रुतपदेन व्युत्पत्तिः बहुशास्त्रज्ञानं तथा अभियोगपदेन अभ्यासः बोधितः। कारणम् इत्येकवचनेन त्रयः हेतवः सम्मिलिततया काव्यम् उत्पादयन्ति न तु पृथक्तया इति ज्ञायते। एतयोः पूर्वाचार्ययोः भामहदण्डिनोः पदाङ्कम् अनुसृत्य मम्मटेन काव्यकारणम् उक्तं काव्यप्रकाशे –

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।**

**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे**।।इति।।

सर्वत्र भामहेन सिद्धान्तपरतया विवदमानः दण्डी काव्यकारणविषयेऽपि विभिन्नाभिप्रायः यतः भामहः प्रतिभा ,परिदृश्यतेयाः अत्यधिकं प्राधान्यं दत्तवान्। परन्तु दण्डी मन्यते यत् प्रतिभा एव - - तथापि यत्र प्रतिभा नास्ति तत्र व्युत्पत्त्यभ्यासौ काव्यं जनयतः खलु इति । उच्यते ,प्रधानं काव्यकारणम्

**न विद्यते यद्यपि पूर्ववासनागुणानुबन्धि प्रतिभानमद्भुतम्।**

**श्रुतेन यत्नेन च वागुप‌ासिता ध्रुवं करोत्येव कमप्यनुग्रहम्**[2]।।

इति कथयन् पूर्ववासनागुणानुबन्धिन्याः नैसर्गिकप्रतिभायाः अभावेऽपि श्रुतयत्नलक्षणव्युत्पत्त्यभ्यासाभ्यां वागुपासनेन कवेः काव्यकरणसामर्थ्यं प्रतिपादयति। एवं च दण्डिना

[1] काव्यादर्शः – पृ.सं -७१

[2] काव्यादर्शः – पृ.सं -७२


ISSN: 2320-740X

प्रथममुक्तः त्रितयकारणतावादः पश्चान्मुक्त इव प्रतीयते। किन्तु परमार्थतः श्लोकस्यास्य विचारे प्रतिभायाः अपि कारणत्वं सम्मतमिति ज्ञायते। न हि दण्डिना सर्वात्मना प्रतिभाया अभावे काव्योत्पत्तिः प्रतिपादिता। किन्तु अद्भुततादृशीनां प्रतिभानाम् अभावेऽपि व्युत्पत्त्यभ्यासाभ्यां वागुपासनेन काव्यकारणसामर्थ्यम् उत्पद्यत इत्येव प्रतिपादितम्। एवं च दण्डिमते प्रतिभा पूर्ववासनागुणानुबन्धिनी , एतज्जन्मसम्बन्धिव्युत्पत्त्यभ्यासजनिता च इति द्विविधा। अन्यतरस्याः प्रतिभायाः व्युत्पत्त्यभ्यासयोः समुच्चित्य च काव्यकारणत्वमिति फलति। एवं च दण्डी काव्यकारणविषये त्रितयकारणतावादी आचार्ःयः इति मन्तव्यम्।

**वामनमतम्–**

आचार्यः वामनः काव्यालङ्कारसूत्रवृत्तिग्रन्थे आह –

**"कवित्वबीजं प्रतिभानम्"** इति। कवित्वस्य बीजं भवति प्रतिभानम्। प्रतिभां विना काव्यं नैव निष्पद्यते। निष्पन्नं च काव्यम् उपहासाय कल्पते न तु यशसे।

**लोको विद्या प्रकीर्णञ्च काव्याङ्गानि**[1] इति।

अस्मिन् सूत्रे त्रीणि काव्याङ्गानि प्राधान्येन निर्दिष्टानि।

१. स्थावरजङ्गमात्मकलोकवृत्तम्[2]

२. शब्दस्मृति-अभिधानकोश-छन्दोविचित्ति-कलाशास्त्र-कामशास्त्र-दण्डनीतिप्रमुखाः विद्याः[3]

३. प्रकीर्णञ्च[4]

तत्र काव्याङ्गेषु तृतीयं प्रकरणमित्थं वामनेन षोढा विभक्तम्।

---

[1] काव्यालङ्कारसूत्रवृत्तिः.१.३.१. पृ.सं -२७

[2] काव्यालङ्कारसूत्रवृत्तिः. १.३.२. पृ.सं -२७ "लोकवृत्तं लोकः"।

[3] काव्यालङ्कारसूत्रवृत्तिः. १.३.३. पृ.सं -२८

[4] काव्यालङ्कारसूत्रवृत्तिः. १.३.११. पृ.सं -३३ "लक्ष्यज्ञत्वमभियोगो वृद्धसेवावेक्षणं प्रतिभानमवधानं च प्रकीर्णम्"।

- लक्ष्यज्ञत्वम् – काव्यपरिचयः
- अभियोगः - काव्यबन्धोद्यमः
- वृद्धसेवा - काव्योपदेशगुरुशुश्रूषणम्
- अवेक्षणम् - पदाधानोद्धरणम्
- प्रतिभानम् - कवित्वबीजम्
- अवधानम् - चित्तैकाग्र्यम्[1]

अत्र च लोकवृत्तं शब्दस्मृत्यादिविद्याः प्रकीर्णान्तर्गतं लक्ष्यज्ञत्वञ्च लोकशास्त्रकाव्यादिपरिशीलनात्मकतया व्युत्पत्तौ अन्तर्भवन्ति। तथा च काव्यप्रणयने व्युत्पत्तेरुपायत्वं सूचितं भवति।

१. प्रकीर्णान्तर्गतः काव्यरचनोद्यमात्मकः अभियोगः।

२. पदाधानोद्धरणात्मकमवेक्षणं च अभ्यासात्मना कवेः काव्यनिर्माणे उपयुज्यते। काव्योपदेशगुरुशुश्रूषणस्वरूपा वृद्धसेवा तु अपूर्वविषयज्ञापकत्वे व्युत्पत्त्यात्मना काव्यनिर्मणे उपयुज्यते। ज्ञातानामेव विषयाणां शोभाऽतिशयाधानोपयोगित्वे तु अभ्यासात्मना काव्ये उपयुज्यत इति प्रतिभाति। प्रकीर्णान्तर्गतं प्रतिभानं तु कवित्वस्य बीजभूतम्। तदभावे च कवित्वमेव नोपजायते। उपजातं च कवित्वमुपहासास्पदं भवति। यदाह वामनः – **"कवित्वबीजं प्रतिभानम्। जन्मान्तरगतसंस्कारविशेषः कश्चित् यस्मात् विना काव्यं न निष्पद्यते, निष्पन्नं वा हास्यायतनं स्यात्"**[2]। इति।

इदमेव प्रतिभानं प्राचीनैः भामहदण्डिप्रभृतिभिः आचार्यैः प्रतिभा इति शब्देन व्यवहृतम्। प्रकीर्णे अवान्तरप्रभेदत्वेन उपवर्णितस्यापि प्रतिभानस्य कवित्वबीजत्वकथनेन वामनेन समुचितं प्राधान्यं दत्तम्।

---

[1] काव्यालङ्कारसूत्रवृत्तिः. पृ.सं -३३,३४,३५,३६.

[2] काव्यालङ्कारसूत्रवृत्तिः. १.३.१६. पृ.सं -३५


ISSN: 2320-740X

समुचितदेशकालादिप्रयोज्यं वामनोक्तं प्रकीर्णान्तर्गतम् अवधानं तु कवितायां निमित्तकारणतया उपयुज्यते। एवं भामहदण्डिप्रतिपादितकाव्याङ्गानां विस्तरेण विवेचकमिदं वामनकाव्याङ्गनिरूपणं प्राचीनाचार्यमार्गापेक्षया विलक्षणं काव्याङ्गविस्तृतौ अनुपमञ्च विद्यते ।

अत्र च वामनमते यद्यपि बहूनां काव्यप्रणयनोपायत्वेन कथनात् प्रतिभादीनां त्रयाणां समुच्चित्य काव्यकारणता वक्तुं न शक्यते। किन्तु **लोको विद्या प्रक"ीर्णञ्च काव्याङ्गानि"** इति सूत्रे समुच्चयार्थकचकारेण लोकविद्याप्रकीर्णात्मकानां त्रयाणां समुच्चित्य कारणता प्रतिपादिता इति मन्तव्यम्।

**रुद्रटमतम्–**

शक्तिव्युत्पत्त्यभ्यासानां समुच्चित्य कारणतावादीति स्पष्टं वक्तुं शक्यते। यतः स एव कथयति –

**तस्यासारनिरासात्सारग्रहणाच्च चारुणः करणे।**

**त्रितयमिदं व्याप्रियते शक्तिर्व्युत्पत्तिरभ्यासः**[1]।।

अत्र प्राचीनैः भामहदण्डिवामनैः प्रतिभात्वेन परिभाषितः पदार्थः शक्तिरिति समाम्नातः। रुद्रटोऽपि शक्तिमेवं निर्वक्ति –

**मनसि सदा सुसमाधिनि विस्फुरणमनेकधाऽभिधेयस्य।**

**अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः**[2]।।

अविक्षिप्ते मनसि नैकविधस्य अर्थस्य विस्फुरणम् अक्लिष्टपदावभासश्च यया भवति सा शक्तिः इत्यभिप्रायः। यां शक्तिं विना काव्यं न प्रसरेत् प्रसृतमपि कथञ्चित् वा उपहसनीयं स्यात्। (प्रतिभाम्) शक्तिलक्षणमिदं पण्डितराजस्य काव्यघटनाऽनुकूलशब्दार्थोपस्थितिरिति प्रतिभालक्षणे सहकरोति।

---

[1] रुद्रटकाव्यालङ्कारः. पृ.सं -५

[2] रुद्रटकाव्यालङ्कारः. पृ.सं -६

इयञ्च शक्तिः सहजा उत्पाद्या इति द्वेधा रुद्रटेन विभक्ता। तत्र पुंसा सहजातत्वात् सहजप्रतिभायाः एतन्मते गरीयस्त्वम्[1]। व्युत्पत्त्यभ्यासजन्यायास्तु परिशेषात् अवरत्वम्। एवञ्च रुद्रटमतानुसारेण त्रयाणां समुच्चित्य कारणत्वं शक्तिश्च अक्लिष्टशब्दार्थविस्फुरणम् इति पर्यवस्यति।

इत्थं ध्वनिकारात् प्राचीनाचार्येषु दण्डिना रुद्रटेन च त्रयाणां समुच्चित्य कारणतावादःभामहेन , पृथक्कारणतावादश्च आविष्कृत इति ज्ञायते। वामनेन तु काव्यकारणेषु चित्तैकाग्र्यरूपावधानस्यापि स्थानं दत्तमिति ज्ञायते।

**अधाराग्रन्थाः–**

१. भामहस्य काव्यालङ्कारः

२. दण्डिनः काव्यादर्शः

३. वामनस्य काव्यालङ्कारसूत्रवृत्तिः

४. रुद्रटस्य काव्यालङ्कारः

५. व्यासमहर्षेः अग्निपुराणम्

६. आनन्दवर्धनस्य ध्वन्यालोकः

७. मम्मटस्य काव्यप्रकाशः

**********

[1] रुद्रटकाव्यालङ्कारः. पृ.सं – ६ प्रतिभेत्यपरैरुदिता सहजोत्पाद्या च सा द्विधा भवति। पुंसा सहजातत्वादनयोस्तु ज्यायसी सहजा ।।

 ISSN: 2320-740X

# हेत्वाभासः

**डा. श्यामसुन्दरः ए.**

**प्राध्यापकः, न्यायविभागः**

नव्यन्यायप्रवर्तकाः श्रीमद्गङ्गेशोपाध्यायाः स्वीयतत्त्वचिन्तामणिग्रन्थे व्याप्तिपक्षधर्मताविशिष्टात्मकस्य सद्धेतोः निरूपाणानन्तरं व्याप्तिपक्षधर्मतोभयाभावविशिष्टस्य दुष्टहेतोरपि स्मरणसम्भवात्, प्रमितकोटिनिश्चयात्मकस्य साध्यवत्ताज्ञाने प्रामात्वप्रकारकनिश्चयात्मकस्य वा तत्त्वनिर्णयस्य प्रयोजकत्वात्, वादे विजयप्रयोजकत्वाच्च अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते इत्यादिना हेत्वाभासान् निरूपितवन्तः। तत्र हेतुवादाभासते इति व्युत्पत्त्या हेत्वाभासशब्दः दुष्टहेतुपरः। हेतौ आभासते इति व्युत्पत्त्या च हेतुदोषपरः। दोषवतः एव दुष्टत्वात्, दुष्टस्य ज्ञानार्थं दोषज्ञानमनिवार्यं, दोषलक्षणे निरूपिते सति तद्वत्वरूपदुष्टलक्षणस्य स्फुटतया लाभसम्भवेन अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम्, यद्विषयकत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्त्वम्, ज्ञायमानं सदनुमितिप्रतिबन्धकं यत्तत्त्वं हेत्वाभासत्वम् इति हेत्वाभासलक्षणानि प्रतिपादितानि मूलकारेण।

तत्र रघुनाथशिरोमणिभिरपि दीधितिग्रन्थे अत्र वदन्तीत्यादिना निष्कृष्टं दोषलक्षणमभिहितम्, तद्यथा – "यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्तः तदुत्तरमनुमितौ अनाहार्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साद्ध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्तावगाहित्वस्य च द्वयोः व्यतिरेकस्तत्वं हेतुदोषत्वम्" इति । अत्र यत्पदं यद्रूपावच्छिन्नपरम्, अग्रे च तत्त्वमित्यस्य तद्रूपावच्छिन्नत्वमर्थः। अनुमितिपदं तत्सामान्यपरं, तदुत्तरमित्यत्र तत्पदं तादृशनिश्चयपरामर्शकं, उत्तरपदं

चाव्यवहितोत्तरकालीनपरं, विरोधिविषयितायां च षष्ठ्यन्तार्थतादृशनिश्चयवृत्तित्वकथनञ्च स्वरूपकीर्तनमात्रं, न तु तस्य लक्षणेप्रवेशः, प्रयोजनविरहात् । तथा च यद्रूपावच्छिन्नविषयक-निश्चयाव्यवहितोत्तरकालीनानुमितिसामान्ये विरोधिविषयिताप्रयुक्तः प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यवैशिष्ट्यावगाहित्व-प्रकृतसाध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुवैशिष्ट्यावगाहित्वोभयाभावः तद्रूपावच्छिन्नत्वम् इति हेत्वाभाससामान्यलक्षणं पर्यवस्यति। तस्य ह्रदे वह्निसाध्यकस्थले यद्रूपपदग्राह्यवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकबाधनिश्चयस्याव्यवहितोत्तरकालीनासु घटाद्यनुमितिषु ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावस्याक्षततया तद्रूपावच्छिन्ने समन्वयः। स्वनिष्ठप्रतिबन्धकतावच्छेदकविषयितायाः स्वाव्यवहितोत्तरज्ञाननिष्ठं प्रतिबद्ध्यतावच्छेदकधर्माभावं प्रति प्रयोजकत्वात् विरोधिविषयिताप्रयोज्यत्वम् उक्तोभयाभावस्य सम्भवति। यद्रूपावच्छिन्ननिरूपकताकविषयिताव्यापिका प्रकृतानुमितित्वव्यापप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवच्छिन्नत्वम् इति मूलोक्तलक्षणस्य निर्वह्निपर्वतादौवह्न्यादिसाध्यकस्थले लक्षणघटकप्रकृतानुमितेरप्रसिद्ध्या तत्र वह्निमत्पर्वतरूपाश्रयसिद्धावव्याप्तिः। तत्र निर्वह्निपर्वते वह्निवैशिष्ट्यावगाहिज्ञानस्य स्वविरुद्धधर्मितावच्छेदकक-स्वप्रकारकतया आहार्यत्वनियमेन अनुमितिस्वरूपत्वानङ्गीकारात् (आहार्यपरोक्षानङ्गीकारात्)।अतः दीधितिकारैः पूर्वोक्तं लक्षणान्तरमभिहितम्। अत्राश्रयासिद्धिनिश्चयोत्तरकालीनघटाद्यनुमितिषु आहार्यज्ञानमात्रे प्रसिद्धस्य निर्वह्निपर्वते वह्निवैशिष्ट्यावगाहित्वस्य विरहोऽक्षतः इति उभयाभावः सम्भवतीति लक्षणसमन्वयसम्भवात् नाव्याप्तिः। अत्र यद्यपि, निर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वस्य आहार्यज्ञानमात्रवृत्तित्वेन विरोधिनिश्चयप्रतिबध्यतानवच्छेदकत्वात्, निर्वह्निपर्वते वह्निवैशिष्ट्यावगाहित्वाभावस्य विरोधिविषयिताप्रयुक्तत्वं न घटते। प्रतिबध्यतावच्छेदकधर्माभावं प्रत्येव विरोधिविषयितायाः प्रयोजकत्वात्। तथापि तादृशप्रकारकत्वस्य विरोधिनिश्चयनिरूपितप्रतिबध्यतानवच्छेदकत्वेऽपि

 ISSN: 2320-740X

तद्व्यापकीभूतस्य पर्वतत्वावच्छिन्नविशेष्यकवह्न्यभावप्रकारकत्वस्य तत्प्रतिबध्यतावच्छेदकत्वमव्याहतम्। तथा च व्यापकाभावप्रयोजकस्य सुतरां व्याप्याभावप्रयोजकत्वनियामात् पर्वते वह्न्यभाववैशिष्ट्यावगाहित्वाभावं प्रति प्रयोजकस्य वह्निमत्पर्वतविषयित्वस्य निर्वह्नित्वविशिष्टपर्वते वह्निवैशिष्ट्यावगाहित्वाभावं प्रत्यपि प्रयोजकत्वं निष्प्रत्यूहमिति विरोधिविषयितायाः उक्तोभयाभावप्रयोजकत्वं सिद्ध्यति।

ननु 'पर्वतो वह्निमान्' इति विरोधिज्ञानस्यासत्त्वेऽपि इच्छायाः असत्वे निर्वह्निःपर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकम् अनाहार्यज्ञानं न भवितुमर्हति तस्य नियमेन आर्हमत्वात् । तादृशज्ञानानुत्पत्तिं प्रति विरोधिज्ञानस्य प्रयोजकत्वे, विरोधिज्ञानाभावे इच्छाभावदशायामपि तदुत्पत्त्यापत्तेः। अतः इच्छादिघटितसामग्र्यभावस्यैव निर्वह्नित्वविशिष्टपर्वते वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वं न तु विरोधिविषयितायाः इति कथं तत्राव्याप्तिवारणमिति चेन्न, अत एव लक्षणेऽत्र विरोधिविषयिताप्रयुक्तत्वं न उभयाभावे विशेषणम् अपि तु अभावाधिकरणतायमेव तस्याश्च अधिकरणभेदेन अभावाभेदेऽपि भिन्नतया प्रतिबन्धकनिश्चयानन्तरोत्पन्नायाम् अनुमितौ पक्षे साध्यवैशिष्ट्यावगाहित्वाद्यभावाधिकरणतायाः विनिगमनाविरहेण तादृशपूर्वनिश्चयीयविरोधिविषयिताप्रयोज्यत्वस्यापि अक्षततया न दोषः।

'धूमव्यभिचारिवह्निमान् धूमवान् वह्नेः' इत्यत्र व्यभिचारघटितबाधविषयनिश्चयाव्यवहितोत्तरानुमितौ पक्षे साध्यवैशिष्ट्यावगाहित्वस्य, साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वस्य च सम्भवात् विरोधिविषयिताप्रयुक्तोभयाभावसत्त्वेन तादृशबाधे समन्वयसम्भवान्नाव्याप्तिः। लक्षणस्यास्य मेयत्वविशिष्टव्यभिचारादिनिश्चयोत्तरानुमितिषु विरोधिविषयिताप्रयुक्तनिरुक्तोभयाभावसत्वाद-तिव्याप्तिवारणाय विशिष्टान्तराघटितत्वविशेषणं निवेशनीयम्। तस्य यदि पूर्वोक्तरीत्या लक्षणघटकयद्रूपे स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं

प्रकृतानुमितिप्रतिबन्धकतानातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकञ्च यद्रूपं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वरूपस्य निवेशे पूर्वोक्तस्थले बाधस्य व्यभिचारात्मकविशिष्टान्तरेण घटितत्त्वात् अव्याप्तिस्तदवस्थैव स्यात्। अतः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयित्वाप्रयोज्य-स्वावच्छिन्नविषयिताप्रयोज्य-तादृशोभयाभावप्रयोजकभावाधिकरणताकत्वरूपं विशिष्टान्तराघटितत्वं लक्षणे निवेशनीयम् । व्यभिचारस्थले मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यायां पूर्वोक्तोभयाभावप्रयोजकव्याप्त्यवगाहित्वाभावाधिकरणतायां विशिष्टान्तरभूतशुद्धव्यभिचारविषयितायाः अपि प्रयोजकत्वेन, मेयत्वविशिष्टव्यभिचारे विशिष्टान्तरविषयित्वाप्रयोज्य-स्वविषयित्वप्रयोज्यनिरुक्तोभयाभावप्रयोजकाभावाधिकरणताकत्वविरहेण नातिव्याप्तिः। व्यभिचारघटितबाधस्थले तु तादृशबाधविषयिताप्रयोज्यायां तादृशोभयाभावप्रयोजकभावाधिकरणतायां विशिष्टान्तरभूतव्यभिचारविषयितायाः अप्रयोजकत्त्वान्नाव्याप्तिः।

यद्यप्यत्र उक्तरीत्या विशिष्टान्तराघटितत्वप्रवेशेऽपि बाधादिविषयिताप्रयोज्यायां निरुक्तोभयाभावप्रयोजकाभावाधिकरणतायां, विशिष्टान्तरीभूतविपरीतबाध-सत्प्रतिपक्षादिविषयितायाः अपि प्रयोजकत्वात्, तादृशाभावाधिकरणतायां विशिष्टान्तरविषयित्वाप्रयोज्यत्वविरहादसम्भवः स्यात्, तथापि स्वनिष्ठायां प्रतिबध्यतावच्छेदकधर्माभावाधिकरणतायां स्वाव्यवहितपूर्ववर्तिज्ञानीयायाः विरोधिविषयितायाः प्रयोजकत्वात् बाधादिनिश्चयाव्यवहितोत्तरजायमानानुमितौ विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां बाधविषयितायाः एव प्रयोजकत्वं, न तु सत्प्रतिपक्षादिविशिष्टान्तरविषयितायाः इति नासम्भवावकाशः।

अत्र तादृशोभयाभावप्रयोजकाभावे विरोधिविषयिताप्रयोज्यत्वस्य निवेशे, पुनरसम्भवः सत्प्रतिपक्षादिनिश्चयोत्तरजायमानानुमितिष्वे तादृशोभयाभावप्रयोजक-पक्षे साध्यवैशिष्ट्यावगाहित्वाभावे

 ISSN: 2320-740X

सत्प्रतिपक्षविषयितायाः प्रयोजकत्वात्, बाधादिनिश्चयोत्तरानुमितिनिष्ठतादृशाभावेऽपि विशिष्टान्तरसत्प्रतिपक्षविषयितायाः प्रयोजकत्वं दुर्वारं, अधिकरणभेदेऽपि अभावस्याभिन्नत्वात्, अतः तादृशाभावे विशिष्टान्तरविषयित्वाप्रयोज्यत्वमनिवेश्य तादृशाभावाधिकरणतायामेव तन्निवेशितम्। अधिकरणतायास्तु अधिकरणभेदेन भिन्नतया बाधादिनिश्चयोत्तरानुमितिनिष्ठायां तादृशाभावाधिकरणतायां बाधविषयितायाः प्रयोजकत्वं न त्वन्येषामिति न दोषः। ह्रदो वह्न्यभाववानिति ह्रदत्वावच्छिन्नविषयकनिश्चयोत्तरघटाद्यनुमितिषु विरोधिविषयिताप्रयुक्तनिरुक्तोभयाभावसत्त्वात् ह्रदत्वावच्छिन्नेऽतिव्याप्तिः स्यादतःयत्किञ्चिदनुमितिं परित्यज्य अनुमितिसामान्यं निवेशितम् । ह्रदत्वादिरूपेण वह्न्यभाववद्ध्रदादिनिश्चयोत्तरं निरुक्तसमूहालम्बनानुमित्युत्पत्त्या असम्भवापत्तिरतो यत्पदं यद्रूपावच्छिन्नपरम्। दोषादिसंशयाद्युत्तरं प्रकृतसमूहालम्बनानुमित्युत्पत्त्या पुनरसम्भव इति ज्ञानपदमनिवेश्य निश्चयपदमुपात्तं, तच्च अनाहार्याप्रामाण्यज्ञानानास्कन्दितसंशयान्यज्ञानपरम्। दोषनिश्चयनाशोत्तरं पुनः दोषनिश्चयोत्तरानुमित्यप्रसिद्ध्या तद्दोषापत्तिः अतः लक्षणे अव्यवहितत्वनिवेशः। दोषनिश्चयाव्यवहितपूर्वं निरुक्तसमूहालम्बनानुमित्युत्पत्त्या असम्भवापत्तिरत उत्तरत्वनिवेशनम् । एकस्य दोषनिश्चयोत्तरम् अपरस्यानुमित्युत्पत्त्यासम्भव इति दोषनिश्चयसामानाधिकरण्यम् अनुमितौ निवेशनीयम् । बाधादिदोषनिश्चयोत्तरं निरुक्तसमूहालम्बनाहार्यज्ञानस्य लौकिकप्रत्यक्षस्य वोत्पत्त्या तद्दोषतादवस्थ्यमतो ज्ञानसामान्यमुपेक्ष्य अनुमितिसामान्यं निवेशितम्।

**********

## करुणरससमीकरणवादपरामर्शः

**डाएम् .. श्रीनिवासमूर्तिः**

**प्राध्यापकः, साहित्यविभागः**

साहित्यलोके प्रधानतया चत्वारः रससमीकरणवादाः दृश्यन्ते १. शान्तरससमीकरणवादः, २. शृङ्गाररससमीकरणवादः, ३. करुणरससमीकरणवादः , ४. अद्भुतरससमीकरणवादश्चेति।

रसमीमांसायां समीकरणवादः एकः विचित्रो विषयः। रसनिरूपणविधानेऽस्मिन् सहृदयः एव केन्द्रबिन्दुः। रसः किन्निष्ठः इत्यंशे बहवो वादाः समुद्भूताः, तत्र अन्तिमतया 'सामाजिकनिष्ठः' इति अभिनवगुप्तस्य अभिव्यक्तिवादः सर्वजनसम्मत्या साहित्यलोके सुप्रतिष्ठितः वर्तते।

एतादृशस्तिथौ तत्र रससङ्ख्याविषये अष्टौ एवेति - नवेति - दशेति - एकादशेति - अनन्ताः - इति च विविधलाक्षणिकाः अभिप्रयन्ति स्म।

एतत् एकं समालोचनमुद्धृतम्। शृङ्गारादिरसाः कति वा भवन्तु, सहृदयरसानुसिद्धौ एव तेषां स्थितिः सिध्यतीति स्पष्टः विषयः। रत्यतिशये जायमानः रसानुभवः निमित्तभेदात् निष्पद्यमाना अलौकिक-आनन्दस्थितिरेव । तादृशस्थितिः सहृदये वासनाबलेन सिध्यति सा च वासना तत्तन्निमित्तकारणैः अभिव्यज्यते। अतः सहृदयरसानन्दस्थितिविशेषः एव रसशब्दवाच्यः भवितुमर्हति।

एतादृशदर्शनात् "एको रसः" इति प्रस्थानं प्रादुर्भूतं वर्तते। तदेव प्रस्थानं रससमीकरणवादनाम्ना प्रसिद्धं वर्तते।

तत्र करुणः - एक एव प्रकृतिरसः, इतरे रसाः तस्य विकृतयः इति वादः करुणरससमीकरणवादः इत्युच्यते।

एको रसः करुण एव, निमित्तभेदा
द्भिन्नः पृथक् पृथगाश्रयते विवर्तान् ।


ISSN: 2320-740X

आवर्तबुद्बुदतरंगमयान् विकारान्
अंभो यथा सलिलमेव हि तत्समस्तम् ॥

इति उत्तररामचरितस्य तृतीयाङ्के विद्यमानोऽयं भवभूतेः श्लोकः अस्य वादस्य कारणम्।

"एको रसः करुण एव" इति कथयित्रा भवभूतिना तत्स्वरूपं न निरूपितम्। अहो! कथा संविधानम्! यद्यपि एकमेव सलिलम् आवर्त - बुद्बुद-तरङ्गरूपाणि धरति तथापि तद्यथा सलिलमेव भवति तथैव एक एव करुणः निमित्तभेदात् पृथक् पृथक् रूपाणि धरति इव दृश्यते इति श्लोकस्यास्य भावः।

श्लोकमिमं आधारीकृत्य बहुभिः प्राचीनैरपि व्याख्यातृभिः 'करुणः प्रकृतिरसः' इति भवभूतिना प्रतिपादितमिति निरूपितम्। करुणः चित्तद्रुतिहेतुः। सा च चित्तद्रुतिः रसास्वादस्य सर्वथा अनुकूला भवति। अत एव भवभूतिः करुणरसं प्रकृतिरसत्वेन प्रतिपादितवान् इति तैः तद्वाक्यं समर्थयते।

एतादृशवादस्य कारणं श्लोकस्यास्य यथार्थ-अनवगमनमेव। करुण एव प्रकृतिरसः, अयं सर्वरसेष्वपि अनुस्यूततया तिष्ठति इति तथ्यं भवभूतिना प्रतिपादितं चेदपि सर्वानुभव - विरुद्धोऽयं विषयः कथमङ्गीकर्तुं शक्यते। करुणः चित्तद्रुतिहेतुर्भवतु नाम। चित्तविकासहेतूनां वीरादिरसानां, चित्तविस्तारहेतूनां, रौद्रादीनां, चित्तविक्षोभहेतूनां बीभत्सादीनां च कथं प्रकृतिर्भवितुमर्हति। एतेषु किञ्चिदपि चित्तद्रुतिः न भवति खलु।

शृङ्गाररसं प्रकृतिरसत्वेन अङ्गीकृतवतोः भोज-अभिनवगुप्तयोः मतं किञ्चित् समर्थयितुं शक्यते । यतो हि शृङ्गारे शान्त-अहङ्कारयोः वा भवतु, सकलभावानां मूलाधाररूपं चैतन्यस्वरूपमेव। 'सर्वं दुःखम् ' इति कथयितारः बौद्धाः अपि प्रकृतिरसप्रसङ्गे शान्तमेव अङ्गीचक्रुः। न करुणं, न च अन्यं रसम् । "रसः सामाजिकनिष्ठः' इति सिद्धान्तं स्थापितवद्भ्यां भट्टनायक - अभिनवगुप्ताभ्यां बहुपूर्वकालवर्ती आसीत् भवभूतिः।

'रसवद्दर्षितस्पष्टशृङ्गारादि रसोदयं,
स्वशब्दस्थायिसंचारिविभावाभिनयास्पदम्।।' इति।

उद्भटोक्तरीत्या तस्मिन् काले तत्तद्रसानां तत्तन्नामभिः निर्देशं कर्तुम् अङ्गीकृतिः आसीत् । भट्टलोल्लटादीनां मतपरिशीलनेन भवभूतिः, तत्समकालिकाश्च 'रसः नायकनिष्ठः' इत्येव अङ्गीचक्रुः इति स्पष्टं ज्ञायते।

उत्तररामचरिते –

'अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः।
पुटपाकप्रतीकाशः रामस्य करुणो रसः।।'

इत्यत्र द्वौ विषयौ स्पष्टौ भवतः।

प्रथमः - करुणरसः रामे एव वर्तते।

द्वितीयः - सः नितरां दुःखं जनयति - इति।

अनया दृशा 'एको रसः' इत्यादिशोकानां भावः एवं वक्तव्यः भवति - अहो! एतत् कथावस्तुनिर्वाहः कियान् अद्भुतः वर्तते। यतो हि एक एव करुणरसः सीता - राम - वासन्ती - कौसल्या - इत्यादिपात्रेषु दाम्पत्यं - मैत्री - वात्सल्यं - इत्यादिभिन्नभिन्नसम्बन्धान् पुरस्कृत्य भिन्नभिन्नरूपैः परिपोषितः वर्तते इति। भवभूतेरपि अभिप्रायः स एवेति वक्तुं शक्यते। 'महावीरचरितम्' इत्यन्यस्मिन् नाटके अपि भवभूतिः एतादृशमेवाभिप्रायं प्रकटीकृतवान्।

एक एव वीररसः स्वल्पैः भेदैः राम-परशुराम-हनुमत्-रावण-वालीत्यादिमहापुरुषेषु विभक्तः वर्तते इति सूत्रधारेण वाचयति यथा -

'अप्राकृतेषु पात्रेषु यत्र वीरः स्थितो रसः।
भेदैः सूक्ष्मैरभिव्यक्तैः प्रत्याधारं विभज्यते॥' इति।

अतः करुणं सर्वरसानां प्रकृतिरसत्वेन भवभूतिः प्रत्यपादयत् इति कथनं क्षोदक्षमं न भवति।

**********


ISSN: 2320-740X

# अक्षक्षेत्राणि

**डा. प्रसाद भट्टः**

**प्राध्यापकः, ज्यौतिषविभागः**

अक्षक्षेत्राणि च गोलीये त्रिभुजे जात्ये यस्मिन्नेको भवेत् सदा ॥

कोणोऽक्षांशसमो विद्वन्नक्षक्षेत्रं हि तत्स्मृतम् ।

अक्षक्षेत्रेत्वेककोणः स्यादक्षांशसमोऽपरः ॥

तथा लम्बांशतुल्योऽत्र समकोणस्तृतीयकः ।

अक्षक्षेत्राणि मुख्यानि प्रोक्तान्यष्टौ हि ज्यौतिषे ॥

नूनं तानि भजन्तीह मुख्यत्वं ग्रहसाधने ।

तेषां जात्यत्रिकोणत्वात् समकोणसमक्षगः ॥

बाहुः कर्णोऽपरौ बाहू भुजकोटी च कीर्त्तिते ।

सायनाजतुलादिस्थे सूर्ये दिनदलोद्भवा ॥

द्वादशाङ्गुलशङ्कोर्या छाया सा पलभा स्मृता[1] ।

तत्राक्षांशवशेन यत् क्षेत्रं गोलीयजात्यत्रिभुजे उत्पद्यते तदक्षक्षेत्रमुच्यते । अक्षक्षेत्रे **एकः कोणोऽक्षांशसमः,** अपरो **लम्बांशतुल्य**स्तथा तृतीयः कोणस्त्रिभुजस्य जात्यत्वान्नवत्यंशतुल्योऽपि भवत्येव । अतः गोलीयजात्यत्रिभुजे **यद्येकः कोणोऽक्षांशसमस्तदा तत्त्रिभुजमक्षक्षेत्रमिति** कथ्यते । एवं **निरक्षे अक्षांशाभावत् अस्य क्षेत्रस्यानुत्पत्तिः**। ज्यौतिषे शास्त्रे **अष्टावक्षक्षेत्राणि मुख्यतया** प्रतिपादितानि, येषां सर्वेषां ग्रहगणिते महानुपयोगः । यतो हि **सर्वाण्यप्यक्षक्षेत्राणि जात्यत्रिभुजानि**, अतः सर्वत्र समकोणसम्मुखो भुजः कर्णो भवति तथावशिष्टौ द्वौ भुजौ भुजकोटी भवतः ।

[1] गोलपरिभाषा (डा. हंसधर झा) page no 53

सायनमेषादिस्थे रवौ, सायनतुलादिस्थे वा सूर्ये दिनार्धकाले द्वादशाङ्गुलशङ्कोर्या छाया सा पलभा कथ्यते । पलभाज्ञानकाले पलभा - शङ्कुः - पलकर्ण- इति भुजत्रयात्मकं यत् त्रिभुजमुत्पद्यते तदक्षक्षेत्रं भवति। तत्र **पलभा भुजः, द्वादशाङ्गुलशङ्कुः कोटिः, पलकर्णः कर्णो** भवति । अत्र पलभाशङ्कुभ्यामुत्पन्नः कोणः समकोणः, शङ्कोः भूतले लम्बरूपत्वात् । तथा च पलकर्णशङ्कुभ्यामुत्पन्नकोणोऽक्षांशसमः, पलभाशङ्कुभ्यामुत्पन्नकोणश्च लम्बांशसमो भवति । एवमत्रैकस्य **कोणस्याक्षांशसमत्वात्** त्रिभुजमिदमक्षक्षेत्रं निगद्यते ।

निरक्षखस्वस्तिकस्थे रवौ नतांशा अक्षांशसमास्तज्ज्याऽक्षज्याभुजः, तत्रोन्नतांशज्या लम्बज्यासमा कोटिः गोलकेन्द्रान्निरक्षखमध्यगता त्रिज्या कर्ण इति **लम्बज्याक्षज्यात्रिज्येति** त्र्यवयवजनितक्षेत्रमेव कमलाकरेणाक्षक्षेत्रमूलं कथितं । भास्कराचार्येण तु निरक्षखस्वस्तिकस्थे रवौ या द्वादशाङ्गुलशङ्कोश्छाया सा पलभा पलतुल्यनतांशवशाद्या भा छाया इति भुजः, द्वादशाङ्गुलशङ्कुः कोटिः, पलकर्णः कर्ण इति त्र्यवयवघटितत्रिभुजमेव मूलक्षेत्रमुक्तम् । अर्थात् भास्कराचार्येण पूर्वं पलभाज्ञानमेव कृतमत इदमेव मूलक्षेत्रमुक्तम् । कमलाकरेण तु पूर्वं पलांशज्ञानमेव कृतमतो लम्बज्याक्षज्यात्रिज्येति त्रिभुजमेव मूलक्षेत्रं प्रतिपादितम् । अथाकाशे यत्र ग्रहो वर्तते तदुपरिगताहोरात्रवृत्तक्षितिजवृत्तसम्पातोपरिगतध्रुवप्रोतवृत्त-नाडीवृत्तसम्पातात् क्षितिजाहोरात्रवृत्तसम्पातावधि क्रान्त्यंशाः कोटिः तद्ध्रुवप्रोतवृत्तपूर्वस्वस्तिकान्तरे नाडीवृत्ते चरांशा भुजः, क्षितिजाहोरात्रवृत्तसम्पातपूर्वस्वस्तिकावधि क्षितिजेऽग्रांशाः कर्णः एतत्क्षेत्रस्य ज्याक्षेत्रमुच्यते |

तत्र गोलकेन्द्रात् क्षितिजाहोरात्रवृत्तसम्पातगतध्रुवप्रोतनाडीवृत्तयोः सम्पातगतायां त्रिज्यारेखायां क्षितिजाहोरात्रवृत्तसम्पाताद्या लम्बरेखा सा क्रान्तिज्या, क्षितिजाऽहोरात्रवृत्तसम्पातात् पूर्वापरसूत्रे लम्बरेखा साऽग्रा कर्णः, क्रान्तिज्याग्रामूलबद्धा रेखैव कुज्या भुजकोटिव्यासार्धपरिणतचरज्या सेति । इत्थं क्रान्तिज्याकुज्याग्रेति त्रिभुजं तृतीयम्। अथ क्रान्तिज्याकुज्ययोर्योगादग्रायां यो लम्बः स चोन्मण्डलशङ्कुः कोटिः, तन्मूलात् क्षितिजाहोरात्रवृत्तसम्पातं यावत् खण्डमग्राग्रं भुजः, कुज्याकर्ण इति चतुर्थम्, तथाऽग्राद्यखण्डं कोटिः उन्मण्डलशङ्कुर्भुजः, क्रान्तिज्या कर्ण इति पञ्चमम्। अथ पूर्वापराहोरात्रबिन्दुः


ISSN: 2320-740X

सममण्डलप्रवेशाख्यस्ततः क्षितिजधरातले यो लम्बः स समशङ्कुः कोटिः। समप्रवेशबिन्दोः स्वोदयास्तसूत्रोपरिकृतो लम्बस्तद्धृतिः कर्णः। समशङ्कुतद्धृत्योर्मूलबद्धा रेखाऽग्रा, तत्समा पूर्वापरस्वोदयास्तसूत्रयोर्यत्र तत्रान्तरमग्रातुल्यमेवात इदं क्षेत्रं षष्ठम्। अथात्रैव समशङ्कुमूलात्तद्धृतिरेखायां यो लम्बः सा क्रान्तिज्यातुल्या, निरक्षोदयास्तपूर्वापरसूत्रयोर्यत्र तत्र क्रान्तिज्या तुल्यमेवान्तरं भवतीति । तत्र क्रान्तिज्यामूलाद् ग्रहबिम्बं यावत्तद्धृत्यूर्ध्वखण्डं कोटिः। समशङ्कुः कर्ण इति सप्तमं क्षेत्रम्। एवमत्रैव अग्रामूलाद्यदि समशङ्कूपरि लम्बः क्रियते तर्हि समानान्तरचतुर्भुजत्वात् सच लम्बोऽग्रादिखण्डतुल्यः । समशङ्कोर्ध्वखण्डमिष्टयष्टिसंज्ञं कोटिः, तद्धृत्यूर्ध्वखण्डम् कर्ण इत्यष्टमम् । एतान्येवाष्टावक्षक्षेत्राणि भास्कराचार्येणोक्तानि[1] ।




| भुजः | कोटिः | कर्णः |
|---|---|---|
| पलभा | १२ (द्वादशाङ्गुलशङ्कुः) | फलकर्णः |
| अक्षज्या | लम्बज्या | त्रिज्या |
| ना - ट | ट - क | ना - क |
| कुज्या | क्रान्तिज्या | अग्रा |
| च – ग | क - च | क - ग |
| अग्रा | समशङ्कुः | तद्धृतिः |
| क - ग | क - म | म - ग |
| क्रान्तिज्या | कुज्योनतद्धृतिः | समशङ्कुः |
| क - च | म - च | क - म |
| उन्मण्डलशङ्कुः | अग्रादिखण्डम् | क्रान्तिज्या |
| च – ई | ई - क | क - च |
| अग्राग्रखण्डम् | उन्मण्डलशङ्कुः | कुज्या |
| ग – ई | च – ई | च - ग |
| अग्रादिखण्डम् | समशङ्कूर्ध्वखण्डम् | तद्धृत्यूर्ध्वखण्डम् |
| य - च | य – म | च - म |

अथ सर्वाण्येतानि सजातीयानि, अत एकस्य भुजकोटिकर्णज्ञानात्तदितरस्य सर्वावयवज्ञानं सम्पद्यते। यस्य

1 सिद्धान्तशिरोमणिः – त्रिप्रश्नाधिकारः – १३ तः १७ पर्यन्तम् ।

ISSN: 2320-740X

कस्याप्यक्षक्षेत्रस्य चापक्षेत्रं चिकीर्षितं तदा तत्कोटिर्गोलगर्भादूर्ध्वमूर्ध्वाधरसूत्रे देया, तदग्राद्गर्भक्षितिजसमानान्तरधरातलं कार्यम्, तद्यत्र नाडीवृत्ते लग्नं ततः पूर्वस्वस्तिकावधि तदक्षक्षेत्रस्य कर्णस्य चापम् । अथ तद्धरातलनाडीवृत्तसम्पातोपरिगतदृग्वृत्ते ततः क्षितिजावधि कोटिचापम्। क्षितिजे तु भुजचापम् । अस्यैव ज्या भुजकोटिव्यासार्धपरिणता तदक्षक्षेत्रे भुजो भवति। एवमिष्टाक्षक्षेत्रस्य चापक्षेत्रं जातम्। तत्र खस्वस्तिकान्निरक्षखस्वस्तिकस्य दक्षिणदिग्गतत्वान्नाडीवृत्तस्य क्षितिजभूतलोपरि तिरश्चीनत्वात्तत्समानान्तरस्याहोरात्रस्यापि तिरश्चीनत्वं स्पष्टम् । अत एवाहोरात्रवृत्तगतेष्टबिन्दुतः क्षितिजोपरि कृतो लम्बः शङ्कुः क्षितिजाहोरात्रभूतलयोर्योगरेखातः (स्वोदयास्तसूत्रतः) क्षितिजोर्ध्वे पतत्यत एव शङ्कुतलस्य दक्षिणा दिगिति सर्वं स्पस्टम् ।

**********

## षष्ठ्याः कारकत्वविमर्शः

**डा. अरुणभट्टः**

**प्राध्यापकः, व्याकरणविभागः**

क्रियाजनकं क्रियान्वयि वा कारकमित्युच्यते । बालेन विद्यालयो गम्यते इत्यत्र कर्तरि बाले ,कर्मणि विद्यालये च गमनक्रियाजनकत्वं गमनक्रियान्वयित्वं वा सुस्पष्टं ज्ञायते । करोति इति कारकमिति भाष्यम् । तच्च कारकं षड्विधम् –

**कर्ता कर्म च करणं सम्प्रदानं तथैव च**

**अपादानाधिकरणमित्याहुः कारकाणि षट् ॥ इति ।**



ISSN: 2320-740X

भगवता पाणिनिना अष्टाध्याय्यामादौ कारकाण्युक्तानि, ततः विभक्तयः निर्दिष्टाः । अष्टाध्याय्यां प्रथमाध्यायस्य चतुर्थे पादे कारके (१.४.२३) इत्यधिकृत्य अपादानमारभ्य[1] ससम्प्रदानं[2], करणं[3], अधिकरणं[4], कर्म[5], कर्ता[6] इति षट् कारकाणि निरूपितानि । कर्तृकर्मादिक्रमं विहाय अपादानादुक्रमेण संज्ञादानेन “अपादानमुत्तराणि कारकाणि बाधन्ते” इत्यादिप्रयोजनानि साधितानि । द्वितीयाध्यायस्य तृतीयपादे अनभिहिते(२.३.१) इत्यधिकृत्य द्वितीया, चतुर्थी, तृतीया, पञ्चमी, सप्तमी, प्रथमा, षष्ठी च विधीयन्ते।

एवं च क्रियान्वयि कारकं भवति, कारकञ्च सत् कारकसम्बन्धिनीं विभक्तिं प्राप्नोति । कर्मार्थे द्वितीया, कर्तृकरणयोरर्थयोस्तृतीया, सम्प्रदाने अर्थे चतुर्थी, अपादानेऽर्थे पञ्चमी, अधिकरणेऽर्थे च सप्तमीति पञ्च विभक्तयः कारकं पुरस्कृत्य प्रवर्तन्ते । प्रातिपदिकार्थे च विहिता प्रथमा विभक्तिः कर्तृवाचकात् कर्मवाचकाद्वा श्रूयत इति प्रथमायाः अपि कारकत्वेन व्यवहारः शास्त्रेऽस्मिन् क्रियते । किन्तु 'राज्ञः पुरुषः' इत्यादौ श्रूयमाणा षष्ठी तु पुरुषार्थेन सम्बद्ध्यते इति साक्षात् क्रियायाम् अन्वयाभावात् शेषषष्ठ्याः कारकत्वं नास्तीति कारकसंज्ञां विना एव शेषषष्ठी प्रवर्तते ।

षष्ठ्येषा शेषषष्ठी कारकषष्ठी चेति द्विविधा। षष्ठी शेषे[7], ज्ञोऽविदर्थस्य करणे[1] इत्यादिभिः अष्टभिः सूत्रैः या विधीयते सा शेषषष्ठीत्युच्यते । कर्तृकर्मणोः कृति[2] इत्यादिभिः विधीयमाना षष्ठी कारकषष्ठीति

[1]ध्रुवमपायेऽपादानम् । अष्टाध्यायी -१.४.२४

[2] कर्मणा यमभिप्रैति स सम्प्रदानम् । अष्टाध्यायी - १.४.३२

[3]साधकतमं करणम् । अष्टाध्यायी - १.४.४२

[4]आधारोऽधिकरणम् । अष्टाध्यायी -१.४.४५

[5]कर्तुरीप्सिततमं कर्म । अष्टाध्यायी -१.४.४९

[6]स्वतन्त्रः कर्ता । अष्टाध्यायी - १.४.५४

[7]अष्टाध्यायी -२.३.५०

व्यवह्रियते । 'कृष्णस्य कृतिः' इत्यत्र करणव्यापाराश्रयत्वात् कृष्णः कर्ता इति कर्तृकरणयोस्तृतीया इति सूत्रेण तृतीयाविभक्तिः प्राप्ता । 'ओदनस्य पाकः इत्यत्र विक्लित्तिरूपफलाश्रयत्वात् ओदनः कर्मेति द्वितीया प्राप्ता । एतदुभयं बाधित्वा कर्तृकर्मणोः कृति इति सूत्रेण विहिता षष्ठी प्रवर्तते । अनेन सूत्रेण विहितायाः षष्ठ्याः कारकत्वं स्पष्टमेव । परं राज्ञः पुरुषः गच्छति इत्यादौ राज्ञः गमनक्रियायाम् अन्वयाभावात् नास्ति कारकत्वम् । स्वस्वामिभावसम्बन्धद्वारा राज्ञः पुरुषे अन्वयः । अत्र राजशब्दात् 'षष्ठी शेषे' इति सूत्रेण षष्ठी विहिता । अतः अनेन सूत्रेण विहितायाः षष्ठ्याः कारकत्वं सर्वथा न सम्भवतीति पक्षे प्राप्ते –

शेषषष्ठ्या अपि कारकत्वं प्रतिपादयति भर्तृहरिः । उक्तं हि -

**सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।**

**श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते॥[3] इति ।**

सम्बन्धः सर्वदा क्रियाकारकपूर्व एव भवति । राज्ञः पुरुषः इत्यत्र सिद्धस्वभावानां द्रव्याणां क्रियां विना परस्परं सम्बन्धासम्भवात् सम्बन्धलक्षणकार्याऽनुपपत्त्या काचित् क्रियाऽनुमेया। सा च 'राजा पुरुषाय ददाति' इत्यर्थसम्प्रत्ययात् तयोः दानादिना स्वीकरणातिरिक्तसम्बन्धहेत्वभावाच्च शेषषष्ठ्यन्तस्य समासो भवति। यथा- राज्ञः पुरुषः = राजपुरुषः इति।

अंशममुं सविस्तरं निरूपयति हेलाराजः, यश्च वाक्यपदीयस्य व्याख्याता । वाक्यपदीयस्य साधनसमुद्देशे शेषाधिकारे हेलाराजः इत्थं प्रतिपादयति यत् - 'इदानीं षष्ठ्यर्थः सप्तमः कारकभेदो

[1]अष्टाध्यायी - २. ३. ५१

[2]अष्टाध्यायी - २.३.६५

[3]वाक्यपदीयम् -३.७.१५६


ISSN: 2320-740X

विचार्यते । स च शेषलक्षणसम्बन्धः । तत्रास्य कथं कारकभेदत्वं, कथञ्च शेषत्वमित्येतदुपपादयितुमाह' इति ।

द्रव्याणि सिद्धस्वभावानि अयःशलाकाकल्पानि भवन्ति । यथा अयः शलाकाः परस्परमसम्बद्धा भवन्ति । तथैव द्रव्याण्यपि विकीर्णान्येव तिष्ठन्ति । काष्ठं, तिर्यक्स्थितं शलाकान्तरं वा अयश्शलाका यथा संयोजयति तथैव क्रिया विकीर्णानि द्रव्याणि सम्बन्धयति । अतः द्रव्याणां परस्परसम्बन्धः क्रियामन्तरा न सम्भवत्येव । एवं स्थितौ 'राज्ञ पुरुषः' 'वृक्षस्य शाखा' 'पितुः पुत्रः' इत्यादौ क्रमात् स्वस्वामिभावसम्बन्धः, अवयवावयविभावसम्बन्धः जन्यजनकभावः सम्बन्धश्च अनुमीयमानक्रियामदाय एव सम्भवति ।

राजा पुरुषाय यदा ददाति एतद्दृष्ट्वा 'राज्ञः पुरुषः' इति व्यवहारः उपपद्यते । अत्र पूर्वं राजपुरुषौ कर्तृसम्प्रदानकारके आस्ताम् । इदानीं 'राज्ञः पुरुष' इति प्रयोगकाले कर्तृत्वं सम्प्रदानत्वं नास्ति चेदपि कारकत्वेन युक्तावेव भवत इति तयोः राजपुरुषयोः कारकत्वमस्त्येव । 'राजा पुरुषाय ददाति' इत्यत्र क्रमात् दातृत्वं सम्प्रदानत्वं च राज्ञि पुरुषे च वर्तेते । एताभ्यां दातृत्वसम्प्रदानत्वाभ्यां सह कारकसामान्यमपि विद्यते एव । कारकसामान्यं विना कारकविशेषः न सम्भवति । 'राज्ञः पुरुष' इत्यत्र कारकविशेषस्य अभावेऽपि कारकसामान्यस्य प्रतीतिस्तु भवेदेव । किन्तु कारकमिदं कर्तृकर्मादिविशेषसंज्ञाविनिर्मुक्तं भवतीति तु सत्यमेव । एवमेव 'वृक्षस्य शाखा' इत्यत्र 'वृक्षे शाखा अस्ति' इत्यत्र विद्यमानकर्तृत्व-अधिकरणत्वमूलकः अवयवावयविभावः सम्बन्धः । 'पितुः पुत्र' इत्यत्र जन्यजनकभावः सम्बन्धः 'पिता पुत्रं जनयति' इत्यत्र विद्यमानकर्तृत्व-कर्मत्वमूलकः सम्बन्धः ।

एवं च शेषषष्ठ्या प्रतिपाद्यमानः स्वस्वामिभावादिः सम्बन्धः या काचित् क्रियाजन्यः भवत्येवेति सर्वत्र अनुमीयमानक्रियामादाय प्रतिपाद्यमानस्य सम्बन्धस्य कारकत्वमस्त्येव ।

**अनुशीलितग्रन्थाः**


| क्र | ग्रन्थनाम | लेखकः/सम्पादकः | प्रकाशकः | वर्षम् |
|---|---|---|---|---|
| १. | अष्टाध्यायी | ईश्वरचन्द्रः | चौखम्बाविद्याभवन | 2004 |
| २. | वैयाकरणसिद्धान्तकौमुदी | गिरिधरशर्मा | मोतीलालबनारसीदास | 1979 |
| ३. | परिभाषेन्दुशेखरः | श्रीपाद सत्यनारायणमूर्ति | राष्ट्रियसंस्कृतविद्यापीठम् | 2004 |
| ४. | व्याकरणमहाभाष्यम् | चारूदेव शास्त्री | मोतीलालबनारसीदास | 1968 |
| ५. | वाक्यपदीयम् | भर्तृहरि/सूर्यनारायणशुक्ला | चौखम्बा संस्कृत सीरिस | 1961 |


**********

## शार्दूलविक्रीडितशतके कविशिक्षाविचारः

**डा. श्रीकरः वि**

**प्राध्यापकः, साहित्यविभागः**

काव्यरचनायां विशेषरुचिमतः मान्यस्य डा एच्. वि नागराजवर्यस्य नूतनकृतिः 'शार्दूलविक्रीडितशतकम्' । नाम्ना एव ज्ञायते यत् अस्मिन् शतके शार्दूलविक्रीडितवृत्ते निबद्धानि शतं पद्यानि विलसन्तीति । नीतिशतकतुल्येऽस्मिन् काव्ये विविधैः श्लोकैः एच् वि नागराजवर्याः स्वाभिप्रायं प्रकटितवन्तः । एतस्य काव्यस्य अनितरसाधारणता सिद्धा अस्ति अत्रत्यशैलीकारणात्, अर्थवैमल्यकारणाच्च । सामान्यव्युत्पत्तिमान् अपि जनः अत्रत्यान् श्लोकान् पठित्वा रसानुभवं प्राप्तुं यथा शक्नुयात् तथा सरला शैली अनुसृता नागराजवर्येण । शैली तु सरला, काव्यबन्धस्तु अशिथिल एव । शब्दालङ्काराणाम् अर्थालङ्काराणां वा बलात् निवेशने क्वापि यत्नः न कृतः । तथापि कवेः कवितानैपुण्यकारणतः तेऽलङ्काराः अपृथग्यत्ननिर्वर्त्यत्वेन काव्येऽस्मिन् बहुधा विलसन्ति ।


ISSN: 2320-740X

कविशिक्षा नाम कवि-काव्यविषयकाः समुचितोपदेशाः । कविकर्मविकासाय समुचितमार्गस्य निर्देश एव कविशिक्षाया विषयः । संस्कृतवाङ्मये विपुलेन काव्यराशिना सह काव्यनिर्माणविषयकोपदेशयुतानि प्रचीनमनीषिणां चिन्तनानि बहुधा प्राप्यन्ते । तेषामेव चिन्तनानां संज्ञा कविशिक्षेति । कविभिः कथं व्यवहर्तव्यम्? कीदृशं काव्यं विरचनीयमित्यादिविचाराः अनेकेषु ग्रन्थेषु समुपनिबद्धाः सन्ति । यद्यपि आलङ्कारिकैः स्वग्रन्थेषु काव्याङ्गानां गुणाऽलङ्काररीतिवृत्यादीनां विवेचनप्रसङ्गे यन्निर्दिश्यते तत्प्रकारान्तरेण कविशिक्षैव भवति, परन्तु तत्र काव्यतत्त्वविवेचनमेव प्रमुखं भवति, कविशिक्षायां तु काव्यरचनाप्रक्रियैव प्रामुख्यं भजते ।

भारतीयसंस्कृतकाव्यशास्त्रे यदा लोकोत्तरवर्णनानिपुणस्य कवेः काव्यं मीमांस्यते तदा समीक्षकाः यत् कवेर्व्यक्तित्वे का नाम्नी सा विशेषता यदुत्सङ्गात्हृदयाऽऽह्लादकं नवं नवं काव्यरामणीयकं समुद्भावयतीति चिन्तयन्ति। कविः कथं वा केन वैशिष्ट्येन विलक्षणं काव्यजगत् सृजति? तस्योपादानं किम्? तद्हेतुः कः? तद्व्यक्तित्वस्य विशेषताः काः इत्येतद्विचार्य संस्कृतकाव्यशास्त्रस्य महद्भिः आलङ्कारिकैः काव्यस्योद्भवे मुख्यहेतुः प्रतिभैव स्वीक्रियते।

वेदे व्याकरणे पुराणनिकरे रामायणे भारते
सम्यग्ज्ञानमपूर्ववस्तुरचनाशक्तिश्च नित्योद्यमः ।
देवाराधनतत्परत्वमतुला श्रद्धा गुरूणां कृपा
सत्काव्यस्य जनेर्निदानममला बुद्धिः प्रसन्नं मनः ॥

सत्काव्यस्य उत्तमकविकर्मणः आदिकारणम् किमित्याह – निगमे, पाणिन्यादिप्रणीते शब्दशास्त्रे, मत्स्यकूर्माद्यष्टादशपुराणसमूहे, वाल्मीकिरचिते रामायणे, व्यासकृते महाभारते च श्रेष्ठो बोधः, अपूर्ववस्तुनः अन्यैरक्षुण्णस्य इतिवृत्तस्य, रचनायां निर्माणे शक्तिः प्रतिभा, सतताभ्यासः, देवतापूजायां दृढासक्तिः,

ISSN: 2320-740X

असमानः शास्त्रे विश्वासः, विद्योपदेशकानां दया, निष्कल्मषं चित्तं चेति एतत्समुदितं सत्काव्यस्य श्रेष्ठकवितायाः, उद्भवस्य आदिकारणम् इति।काव्यं चिकीर्षता सर्वमिदं पूर्वं प्राप्तव्यमिति तात्पर्यम्।

काव्यं रचयितुं वस्त्वभावः नास्त्येव इत्यपि प्रतिपादयन्ति नागराजवर्याः यथा-

एकस्मिन्नपि वस्तुनि प्रतिदिनं वैविध्यमुत्पद्यते
मर्त्यानां हृदि भावना नवनवोन्मेषा समुज्जृम्भते ।
देशेषु प्रतिभोद्भवो बहुविधो नित्यं समालोक्यते ।
वैरल्यं विषयस्य नास्ति सुकवेर्वैपुल्यमत्स्यग्रतः ।।

एकस्मिन् पदार्थेऽपि प्रतिदिनं वैविध्यं प्रादुर्भवति । एकस्मिन्नेव वृक्षे पुष्पसम्पद् भिन्ना दृश्यते दिनभेदात् । एकैवाङ्गना भिन्नेषु देशेषु विभिन्नरूपा भाति । एवं सर्वत्र वैविध्यं दृश्यते । मनुष्याणां भावना नवीनरूपा विलसति । सीतारामयोः, पार्वतीपरमेश्वरयोः, रुक्मिणीकृष्णयोः, प्रेमव्यवहारः कविभिर्वर्ण्यमानो नाना भावनाः प्रकटयति । एवं सति असंख्याकानां जनानां प्रेम, द्वेषः, ईर्ष्या, असूया, वात्सल्यम् इत्यादयः भावनाः सदा नवा भवन्तीत्यत्र किमाश्चर्यम् ? देशेषु बहुविधः प्रतिभोद्भवः नित्यं गोचरीक्रियते । सर्वेषु देशेषु महाकवयो महाकलाकाराश्च सञ्जाता एव । तेषां कृतयोऽद्यापि उपलभ्यन्ते । तेषां जीवनचरितानि च लिखितानि सन्ति । एवं नूतनाः कवयः नवान् विषयान् प्राप्तुं शक्नुवन्ति । तस्मात् उत्तमस्य कवेः विषयस्य विरलता नैवास्ति । अपि तु कवेरग्रतः पुष्कलतैव वर्तते । अतः कविभिः नूतनकाव्यरचनायां प्रवर्तनीयम् इति अस्मिन् श्लोके कविना सन्दिष्टम् ।

अस्मिन् विषये ध्वन्यालोककारोऽपि एवमवदत्-

प्रतायन्तां वाचो निमितविविधार्थामृतरसा ।
न सादः कर्त्तव्यः कविभिरनवद्ये स्वविषये [1]॥

[1] ध्वन्यालोकः च.उ१७

 ISSN: 2320-740X

परस्वादानेच्छाविरतमनसो वस्तु सुकवेः ।
सरस्वत्येवैषा घटयति यथेष्टं भगवती ॥

औचित्यस्य आवश्यकताऽपि शार्दूलविक्रीडितशतके चर्चिता यथा-

सालङ्कारमिदं गुणेन सहितं स्याद्वापि दोषोज्झितम् ।
रीत्या भूषितमस्तु वापि सरसं ध्वन्यात्मनालङ्कृतम् ।
औचित्यं यदि चेज्जहाति सकलं व्यर्थं कविर्जागृत-
स्तद् बाढं परिपालयेदनुचितं स्वप्नेऽपि नोच्चारयेत् ।।

इदं काव्यम् अनुप्रासोपमाद्यलङ्कृतं गुणैः प्रसादमाधुर्यौजोभिः अविरहितं च्युतसंस्कृत्यादिदोषरहितं विशिष्टपदरचनया रीत्या भूषितं च स्यान्नाम । अपि च शृङ्गारादिरसभरितं, ध्वनिरूपेण आत्मना सङ्गतं चास्तु नाम । तत्काव्यं यदि औचित्यं त्यजति, तर्हि सकलमलङ्कारादिकं निष्प्रयोजनम् । जागरूकः कविस्तदौचित्यं परिपालयेत् । औचित्यशून्यं निद्रावस्थायाम् अपि काव्ये न प्रयुञ्जीत इति अत्र तात्पर्यमस्ति। अयं श्लोकः आचार्यक्षेमेन्द्रवचनमनुसरति -

अलङ्कारास्त्वलङ्काराः गुणा एव गुणाः सदा ।
औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् ॥[1]

काव्येषु विभिन्नतत्त्वानाम् औचित्येन सन्निवेश एव सौन्दर्याधायकं भवतीति काव्यशास्त्रिणामभिमतम् । काव्येषु रसालङ्कारगुणरीत्यादितत्त्वानि तदैव सौन्दर्याधायकानि भवन्ति यदा तेषां विनियोजनम् औचित्यपूर्णं भवति । औचित्यस्य अभावे न केवलं काव्यस्य वैशिष्ट्यं काव्यत्वञ्च न्यूनं भवति अपि तु काव्यकर्तुः कवेः प्रतिष्ठापि न्यूनतां याति । अत एव ध्वन्यालोककारेण उक्तम्-

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।

[1] औचित्यविचारचर्चा का ४

औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥ [1]

एवं रूपेण एच्. वि. नागराजवर्याः स्वकीयशार्दूलविक्रीडितशतके काव्यरचनाविषयकान् बहून् विचारान् प्रास्तुवन् । तत्र तत्र पूर्वकवीनाम् आलङ्कारीकाणां च सिद्धान्तस्य प्रभावोऽपि दृश्यते । परन्तु आधुनिककवयः अनेन लाभान्विताः भवन्ति इत्यत्र नास्ति सन्देहलेशोऽपि ।

**********

## ब्रह्मसूत्रे मुण्डकोपनिषदुक्तः अक्षरस्य भूतयोनित्वविचारः

**विद्वान् निरञ्जन भट्टः**

**प्राध्यापकः, अद्वैतवेदान्तविभागः**

प्रस्थानत्रयान्तर्गतस्य शारीरकमीमांसाशास्त्रस्य प्रथमाध्यायस्य द्वितीयपादे षष्ठमिदमधिकरणम् अदृश्यत्वाधिकरणम् । अधिकरणेऽस्मिन् अथर्ववेदसम्बद्धायाः मुण्डकोपनिषदः वाक्यमिदं विषयो भवति –"अथ परा यया तदक्षरमधिगम्यते" ,"यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः[2]" इति । अत्र अदृश्यत्वादिगुणैः निर्दिष्टं भूतयोनित्वं प्रधानस्य वाशारीरस्य अथवा परमेश्वरस्य इति त्रिकोटि ,कः संशयः । पूर्वस्मिन् अन्तर्याम्यधिकरणे द्रष्टृत्वादिचेतनधर्माणां श्रवणात् अन्तर्यामी परमेश्वर एवेति निर्धारितम् । किन्तु अत्र द्रष्टृत्वादीनाम् अश्रवणात् अदृश्यत्वादिगुणको भूतयोनिः प्रधानमेव स्यात् इति संशयसद्भावात् अस्याधिकरणस्य पूर्वाधिकरणस्य च प्रत्युदाहरणसङ्गतिः ।

अत्र –

---

[1] ध्वन्यालोक तृ उ

[2] मुण्डकोपनिषत् ६,५.१.१ –


ISSN: 2320-740X

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ।

यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्[1] ॥

इति दृष्टान्ते अचेतनानामेव पदार्थानां श्रवणात् अचेतनं प्रधानमेव भूतयोनिशब्देन निर्दिष्टं स्यात् इति पूर्वपक्षः । दृष्टान्ते ऊर्णनाभेः पुरुषस्य च ग्रहणात् चेतनस्यापि निर्देशो वर्तते इति चेत्तत्र केवलं चेतनं , सूत्रयोनिर्वा केशलोमादियोनिर्वा न भवति । किन्तुचेतनाधिष्ठितस्य अचेतनस्यैव कीटशरीरस्य सूत्रयोनित्वंपुरुषशरीरस्य वा केशलोमादियोनित्वमित्यतः न दोषः । पुनः पूर्वत्र अधिकरणे प्रधानस्य , अदृश्यत्वादिधर्मसम्भवेऽपि द्रष्टृत्वादिकं न सम्भवतीत्यतः प्रधानस्य अन्तर्यामित्वं निराकृतम् । अत्र तु अदृश्यत्वादिधर्माः प््रधानस्य न सम्भवन्तीत्यत्र विरुध्यमानधर्माभावात् प्रधानमेव भूतयोनिशब्देन निर्दिष्टम्। यदि वाक्यशेषे –"यः सर्वज्ञः सर्ववित्[2]" इति यत् सर्वज्ञत्वं सर्ववित्त्वं च संसूचितं तन्न अचेतने प्रधाने सम्भवति इत्युच्यते – तर्हि नात्र दोषः ,"यया तदक्षरमधिगम्यते" ,"यत्तदद्रेश्यम्" इत्यत्र निर्दिष्टात् अक्षरादनन्तरम् –"अक्षरात्परतः परः[3]" इति यः अक्षरात् परः श्रुतः सः सर्वज्ञः सर्ववित् च सम्भवति । किन्तु अक्षरशब्देन निर्दिष्टं भूतयोनित्वं प्रधानस्यैव भवितुमर्हति इति । यदा योनिशब्दः निमित्तवाची भवति तदा तु शारीरस्यापि भूतयोनित्वं सम्भवति । जीवकर्मनिमित्तत्वात् सर्वभूतसृष्टेः इत्येवं पूर्वपक्षः प्राप्तः ।

अदृश्यत्वादिगुणको धर्मोक्तेः इति । यः अदृश्यत्वादिगुणैः निर्दिष्टः – अयमत्र सिद्धान्तः भूतयोनिः सः परमेश्वर एव भवितुमर्हति नान्यः । तत्रेदं लिङ्गं भवति'धर्मोक्तेः' इति । 'यः सर्वज्ञः सर्ववित्' इति सर्वज्ञत्वं सर्ववित्त्वं चेति यः धर्मः निरुच्यमानो दृश्यते सः परमेश्वरं विहाय अन्यत्र अचेतने प्रधाने , अन्तःकरणाद्युपाधिपरिच्छिन्ने जीवे वा न सम्भवति । पुनश्च'अक्षरात् सम्भवतीह विश्वम्' इत्यत्र भूतयोनेः

[1] मुण्डकोपनिषत् ७.१.१ –

[2] मुण्डकोपनिषत् ९.१.१ –

[3] मुण्डकोपनिषत् २.१.२ –

अक्षरस्य जायमानप्रकृतित्वेन अपादानसंज्ञाद्वारा पञ्चमीस्मरणपूर्वकं निर्देशानन्तरं वाक्यशेषे जायमानप्रकृतित्वेन सर्वज्ञस्य प्रत्यभिज्ञानं श्रूयते –

यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।

तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥

इति । 'तस्मात्' इति यत् भूतयोनित्वेन उपक्रान्तं तस्यैव प्रत्यभिज्ञानम् अत्र भवतीत्यतः अक्षरशब्देन निर्दिश्यमानस्य भूतप्रकृतेः एव सर्वज्ञत्वं सर्ववित्त्वमिति च धर्मः इति ज्ञायते । तेन भूतयोनित्वेन निर्दिष्टात् अक्षरात् परत्वेन श्रूयमाणस्य सर्वज्ञत्वादिधर्मः इति यदुक्तं तन्निराकृतं भवति । अपि च "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्[1]" इति अक्षरस्य परविद्याधिगम्यत्वेन प्रक्रम्य पूर्वमेव तस्य वेद्यब्रह्मत्वेन परामर्शात् भूतयोनित्वेन अभिहितात् अक्षरात् परः न कश्चिदस्ति इति ।

पुनरत्र'परा चैवापरा च' इति वेदितव्यत्वेन द्वे विद्ये निर्दिष्टे ,ऋग्वेदादिलक्षणा अपरा विद्या , अक्षरविषया परा विद्या चेति । यदि अदृश्यादिगुणसहितमक्षरं परमेश्वरव्यतिरिक्तं स्यात् तर्हि निःश्रेयसफलिका च परा इति ,अक्षरविषयकत्वेनोक्ता विद्या परा न स्यात् । अभ्युदयफलिका अपरा विद्या विभागः परिकल्पितः । अक्षरमिति प्रधानमुक्तं चेत् प्रधानविद्यायाः निःश्रेयसफलत्वं केनापि नाङ्गीक्रियते इति हेतोः अक्षरात् भूतयोनेः परः परमात्मा इत्यतः तिसृणां विद्यानां प्रतिज्ञा स्यात् । किन्तु वेदितव्यत्वेन द्वे एव विद्ये निर्दिष्टे ।

तथैव ब्रह्मणः सर्वात्मकत्वविवक्षायामेव "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति[2]" इति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा समुपपद्यते । अचेतनस्य प्रधानस्य ज्ञानेन तु तत्कार्यज्ञानं सम्भवति चेदपि तत्कार्यकोटिबहिर्भूतानाम् आत्मनां ज्ञानं न भवति । एवमेव भोक्तुः जीवस्य ज्ञानेनापि जीवकार्यभिन्नं

---

[1] मुण्डकोपनिषत् १३.२.१ –

[2] मुण्डकोपनिषत् ३.१.१ –


ISSN: 2320-740X

भोग्यम् अज्ञातमेव भवतीत्यतः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा विरुध्येत इति इदमत्र भूतयोनिः ब्रह्मैव इत्यत्र हेत्वन्तरं भवति ।

पुनश्च"स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह[1]" इति उपक्रमे ब्रह्मविद्यामेव प्रधानतया निर्दिश्य वेदितव्यत्वेन च विद्यायाः परापररूपेण विभागं प्रदर्श्य यया अक्षराधिगमः भवति सा परेति तस्या एव ब्रह्मविद्यात्वं प्रतिपादयति । यदि अक्षरशब्देन ब्रह्मणो निर्देशः न स्यात् तर्हि अत्रोक्ता ब्रह्मविद्यासमाख्या बाधिता भवति । यदि परविद्यायाः एव प्राधान्यं तर्हि कुतो मध्ये अपरविद्यायाः प्रतिपादनमिति चेत्अपरविद्या नित्यफलजनिका न भवतीति ज्ञात्वा तत्र विरक्तिं प्राप्य परविद्यायां , प्रवृत्तिसिद्ध्यर्थं मध्ये तत्प्रस्तावः ।

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति[2] ॥

इति ब्रह्मविद्यायाः उपक्रमे ब्रह्मविद्यायाः प्रशंसार्थम् ऋग्वेदादिरूपकर्मविद्यायाः अपरविद्यान्तर्गतायाः निन्दावचनम् उपन्यस्तम् । ततः अपरविद्यायाः विरक्तो यः स एव परविद्यायाम् अधिकृतो भवतीति दर्शयति श्रुतिः –

परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्[3] ॥ इति ।

किञ्च दृष्टान्ते अचेतनानां पृथिव्यादीनां श्रवणात् भूतयोनेरपि अचेतनत्वमेवेति यदुक्तं तदपि अयुक्तमेव । दृष्टान्तदार्ष्टान्तिकयोः अत्यन्तं साम्यं भवेदिति न कोऽपि नियमः वर्तते । यदि अत्यन्तं साम्यमङ्गीक्रियते तर्हि दृष्टान्ते पृथिव्यादीनां स्थूलत्वमस्तीत्यतः दार्ष्टान्तिकः भूतयोनिरपि स्थूल एव

[1] मुण्डकोपनिषत् १.१.१ –

[2] मुण्डकोपनिषत् ७.२.१ –

[3] मुण्डकोपनिषत् १२.२.१ –

भवेदिति प्रधानवादिनामपि अनिष्टापत्तिः स्यात् । तस्मात् अदृश्यत्वादिगुणोपपादितः भूतयोनिः परमेश्वर एव इति भवति ।

भेदव्यपदेशात् न प्रधानम् इत्यत्र ,परमेश्वर एव भूतयोनिः भवितुमर्हति विशेषणात् न शारीरः विशेषणभेदव्यपदेशाभ्यां च नेतरौ इति । – हेत्वन्तरेण विभज्य प्रदर्शयति"दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रः[1]" इति जीवभिन्नत्वेनैव प्रकृतभूतयोनेः विशेषणं प्रसिद्धम् । जीवस्तु अविद्याकृतनामरूपादिपरिच्छिन्नोपाधौ अभिमानवान् इत्यतः दिव्यत्वादिकं न तस्य सम्भवति । अतोऽत्र भूतयोनिपदवाच्यत्वं साक्षात् उपनिषत्प्रतिपाद्यस्य परमेश्वरस्यैव भवितुमर्हति । तथैव –'अक्षरात् परतः परः' इति प्रधानभेदेन भूतयोनेः व्यपदेशदर्शनात् प्रधानम् अत्र भूतयोनिशब्दप्रतिपाद्यं न भवति । सर्वस्यापि नामरूपादीनां कारणशक्तिः ,ईश्वरमाश्रित्य यत्तिष्ठति ,भूतानां संस्काराः यस्मिन् निहिताः , जीवेश्वरोपाधिभूतं स्वस्य सर्वविकारेभ्यः परञ्च यदस्ति अव्याकृतशब्दवाच्यं तदेव अक्षरात् इत्यत्र अक्षरमिति निर्दिष्टम् । तस्मात् अव्याकृतापरनाम्नः अक्षरात् परः इति परमात्मनो भेदेन व्यपदेशः दृश्यते । नात्र साङ्ख्यमतपरिकल्पितं स्वतन्त्रं प्रधानम् अक्षरशब्दवाच्यत्वेन कल्प्यते । यदि प्रधानमेव अव्याकृतशब्दवाच्यं भूतसंस्काराश्रयं कल्प्यते श्रुतिविरोधाभावात् इत्युच्यते तर्हि न तत्र सिद्धान्तहानिः । तस्मादत्र अव्याकृतशब्दवाच्यात् अक्षरात् भेदः प्रदर्शितः इत्यतः भूतयोनिः परमेश्वर एव प्रतिपादितः इति अवगम्यते ।

'रूपोपन्यासाच्च' इत्यपि तृतीयं सूत्रं परमेश्वरस्य भूतयोनित्वम् उपपादयितुम् आरब्धम् । तत्रादौ वृत्तिकारमतम् उपस्थापयन्ति –'अक्षरात् परतः परः' इत्येतदुक्त्वा 'एतस्माज्जायते प्राणः' इति प्राणादीनां सृष्ट्यपदेशो दृश्यते । तदनन्तरम् –

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।

---

[1] मुण्डकोपनिषत् २.१.२ –


ISSN: 2320-740X

वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा[1] ॥

इति भूतयोनेः सर्वविकारात्मरूपत्वम् उपन्यस्तम् । सर्वस्यापि कारणत्वात् परमेश्वरस्यैव एतादृशं सर्वविकारात्मकं रूपम् उचितं भवति । शारीरस्तु अल्पपरिमाणः इत्यतः अस्य एतादृशं रूपं न सम्भवति । अचेतनस्य प्रधानस्य सर्वभूतान्तरात्मत्वं नोपपद्यते इत्यतः अयं रूपोपन्यासः न प्रधानस्यापि । अत्रोक्तः रूपोपन्यासः प्रकृतस्य भूतयोनेरेव इति कथं निर्धार्यते इति चेत् अत्र ,'एषः' इति प्रकृतस्यैव अनुकर्षणं दृश्यते । 'एतस्माज्जायते प्राणः' ,'एष सर्वभूतान्तरात्मा' इति तु भूतयोनिमनुलक्ष्यैव प्रवृत्तं दृश्यते । तत्र दृष्टान्तः एष वेदवेदाङ्गपारगः इति व्यवहारो भवति ,यथा लोके उपाध्यायम् अधिकृत्य तस्मादधीष्व – तद्वदत्रापि द्रष्टव्यम् । अत्र यः अदृश्यत्वादिगुणैः निर्दिष्टो भूतयोनिः तस्य विग्रहवत्त्वरूपम् उपपादयितुं न प्रवृत्तम् । किन्तुतस्य सर्वात्मत्वप्रतिपादनार्थमेव सर्वविकारात्मकं रूपम् भूतयोनेः उपन्यस्तमिति नात्र दोषः। श्रुत्यन्तरेऽपि यथा –"अहमन्नमहन्नमहन्नादः[2]" इति सर्वात्मत्वप्रदर्शनार्थमेव अन्नान्नादरूपत्वम् उक्तं तथैव अत्रापि इति तदाशयः ।

– पुनरत्र स्वमतं निरूपयन्ति भाष्यकाराः'अग्निर्मूर्धा' इत्यादिना उपन्यस्यमानं न भूतयोनेः रूपम् , किन्तु जायमानान्तर्गतत्वेन उपन्यासात् अत्र सूत्रात्मा त्रैलोक्यशरीरः उच्यते इति ।

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।

खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥

इति पूर्वं पृथिवीपर्यन्तस्य जायमानत्वेन निर्देशः कृतः । पुनः उत्तरत्र 'तस्मादग्निः समिधो यस्य सूर्यः' इति उक्त्वा 'अतश्च सर्वा ओषधयो रसाश्च' इति एतावत्पर्यन्तं जायमानत्वेनैव निर्देशः करिष्यते । अतः अकस्मात् मध्ये भूतयोनेः रूपोपन्यासः अग्निर्मूर्धा इत्यनेन नोपपद्यते । भूतयोनेः सर्वात्मकत्वं रूपं

[1] मुण्डकोपनिषत् ४.१.२ –

[2] तैत्तिरियोपनिषत् ६.१०.३ –

सर्वास्यापि सृष्टिकथनसमाप्तेरनन्तरं कथयति –"पुरुष एवेदं विश्वं कर्म" इत्यादिना इत्यतः अत्र हिरण्यगर्भस्यैव रूपम् उपन्यस्तम् । तथा च –

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।

स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम[1] ॥

इति श्रुतिः तस्य उत्पत्त्यादिकम् उपदिशति । स्मृतिरपि त्रैलोक्यशरीरस्य प्रजापतेः उत्पत्तिं बोधयति –

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।

आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत[2] ॥

इति । यद्यपि अयं विकारभूतःतथापि प्राणस्वरूपेण सर्वभूतान्तरावस्थायित्व ,मस्य सम्भवति । भाष्यकाराणाम् अभिप्राये तु –"पुरुष एवेदं विश्वं कर्म" इति श्रौतस्मार्तादिरूपं यत् सफलं कर्म तपश्च तत्सर्वरूपः अयं भूतयोनिरेवेति यो रूपोपन्यासः स एव परमेश्वरप्रतिपत्त्यर्थं हेतुर्भवति इति ।

**********

## मन्त्राधिकरणस्य संशयप्रकारः

**डा. गोविन्द गोपालकृष्ण हेगडे**

**प्राध्यापकः, मीमांसाविभागः**

पूर्वमीमांसायां प्रथमाध्याये प्रथमपादे चतुर्थाधिकरणं मन्त्राधिकरणम् । अधिकरणस्यास्य विषयः मन्त्रः । तेषामेव प्रामाण्यस्य विचार्यमाणत्वात् । मन्त्राणां धर्मे प्रामाण्यम् उत् न इति सामान्यतः संशयः । विधिमन्त्राधिकरणानुसारेण मन्त्राणां विधौ अनन्तर्भावात् विधिवत् मन्त्राणां धर्मे प्रामाण्यं वक्तुम् अशक्यम् । मन्त्रे स्तुतिबुद्धेः अप्रतीयमानत्वात् अर्थवादवत् विधेयार्थस्तावकत्वेन प्रामाण्यं वक्तु दुश्शकम् । मन्त्रैः

---

[1] ऋक्संहिता १.१२१.१० –

[2] वायुपुराणम् ७७.४ –



ISSN: 2320-740X

प्रयोगसमवेतार्थस्मृतिः जायते इति चेत् अनधिगताबाधितार्थबोधकत्वाभावात् यथार्थतया प्रामाण्यमपि न सिद्ध्येत् । अतः मन्त्राणां प्रयोगसमवेतार्थस्मरणरूपप्रयोजनवत्वमात्रमङ्गीकर्तुमुचितम् । ध्यानाद्युपायान्तरेणापि प्रयोगसमवेतार्थस्मृतिसम्भवात् नियतमन्त्राम्नानस्य वैयर्थ्यं स्यादित्यतः मन्त्रोच्चारणस्य अदृष्टार्थत्वमेवेति पूर्वपक्षसङ्क्षेपः । दृष्टे सम्भवति अदृष्टस्यान्याय्यत्वात् मन्त्राणां प्रयोगसमवेतार्थबोधकत्वेनैव धर्मे प्रामाण्यम् । प्रयोगसमवेतार्थस्मरणं च सम्भवत्प्राप्तिकत्वेऽपि मन्त्रैरेव स्मर्तव्यमित्याकारकनियमाङ्गीकारेण नियतमन्त्राम्नानस्य सार्थक्यं साध्यते । तथा च मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेन प्रामाण्यं प्रयोजनवत्त्वं वा सिद्धमपि पदार्थविधया प्रामाण्यं निरूप्यते । एवं च मन्त्राधिकरणस्य सारः मया सङ्क्षेपेण प्रकटीकृतः ।

अथ अधिकरणस्य संशयप्रकारे परिदृश्यमानमतभेदाः विमर्शयिष्यन्ते । भाष्यकारप्रभृतयः शास्त्रदीपिकाकारपर्यन्ताः प्राचीनविद्वांसः प्रथमाध्याये प्रथमपादे विधीनां विधायकत्वेन धर्मे प्रामाण्ये निरूपिते द्वितीयपादे विध्यतिरिक्तानाम् अर्थवादमन्त्रनामधेयादीनां धर्मे प्रामाण्यमस्ति वा न वा इत्येवं अर्थवादाधिकरणस्य संशयप्रकारं दर्शितवन्तः । आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानां तस्मादनित्यमुच्यते [1] इति जैमिनिसूत्रे वेदवाक्यानां क्रियार्थत्वात् क्रियाभिन्नार्थप्रतिपादकानाम् अर्थवादमन्त्रनामधेयादीनां अनित्यत्वं प्रतिपादितम्। अतः सूत्रानुसारात् प्राचीनैः अर्थवादाधिकरणे एव विध्यतिरिक्तानाम् अर्थवादमन्त्रनामधेयादीनां प्रामाण्याप्रामाण्यसंशयः कृतः। नन्वेवं सति मन्त्रप्रामाण्याप्रामाण्यविचारस्यापि अर्थवादाधिकरणविषयान्तर्गतत्वात् पृथगधिकरणरचनायाः वैयर्थ्यं खलु इति चेत् अर्थवादाधिकरणे विध्यतिरिक्तानाम् अर्थवादमन्त्रादीनां सामान्यतः प्रामाण्ये सिद्धे मन्त्राधिकरणे तावत् विशेषतः मन्त्रप्रामाण्यप्रकारः निरूप्यते। अतः सार्थकं पृथगधिकरणम् ।

नवीनास्तु भाट्टदीपिका, मीमांसाकौस्तुभादिषु अर्थवादाधिकरणे तावत् केवलार्थवादानामेव प्रामाण्याप्रामाण्यविचारं कृत्वा मन्त्राधिकरणे मन्त्राणां धर्मे प्रामाण्यम् अस्ति न वा इति संशयमुद्भाव्य अधिकरणम् अग्रे सारितवन्तः । 'आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' इति विध्यतिरिक्तानाम् अर्थवादादीनां धर्मे अप्रामाण्यबोधके पूर्वपक्षसूत्रे सामान्यतः विध्यतिरिक्तानाम्

---

[1] जैमिनिसूत्रम् ११-२-

अर्थवादमन्त्रादीनाम् अप्रामाण्ये बुद्धेऽपि 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः'[1] इति सिद्धान्तसूत्रेण केवलस्यार्थवादस्य विध्येकवाक्यत्वेन धर्मे प्रामाण्यं निरूपितम्। अतः मन्त्राणां धर्मे कथं प्रामाण्यमित्ययं विचारः तत्सूत्रात् नावगम्यते । अतः मन्त्राधिकरणे मन्त्राणां धर्मे प्रामाण्यम् अस्ति उत अप्रामाण्यमिति संशयप्रकारं दर्शितवन्तः। तदुक्तं मीमांसाकौस्तुभे खण्डदेवाचार्यैः 'यत्तु मूले आदावर्थवादमन्त्रनामधेयानां त्रयाणां सामान्यतः अप्रामाण्यपूर्वपक्षं कृत्वा तथैव सिद्धान्तसूत्रे निराकरणं कृतम्। तत् पृथगधिकरणे मन्त्रनामधेययोः पृथगप्रामाण्यस्य निराकरिष्यमाणत्वेन पुनरुक्तत्वादनुपयुक्तत्वाच्च उपेक्षितम्। मूले तु शिष्यशिक्षार्थं कृतमिति वेदितव्यम्' इति। तथा च भाष्यकारप्रभृतयः प्राचीनविद्वांसः मन्त्राणामपि अर्थवादाधिकरणयुक्त्या धर्मे प्रामाण्ये सिद्धे पुनः मन्त्राधिकरणे प्रामाण्याप्रामाण्यविचारप्रसक्त्यभावात् मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेन प्रयोजनमस्ति नवेति संशयं प्रकटितवन्तः। खण्डदेवप्रभृतिनवीनमीमांसकास्तु मन्त्राधिकरणे मन्त्राणां धर्मे प्रामाण्यम् अस्ति न वा इति संशयं प्रकटीचक्रुः। एवं संशयप्रकारविषये विदुषां मतभेदः वरीवर्ति ।

मम तु एवं प्रतिभाति यत्- 'आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानां तस्मादनियमुच्यते' इति सूत्रेणैव विध्यतिरिक्तानाम् अक्रियार्थानाम् अप्रामाण्यमित्यवगम्यते। अर्थवादाधिकरणसिद्धान्तसूत्रेण विधिना त्वेकवाक्यत्वात् इत्यादिना विध्यतिरिक्तवेदभागस्य विध्येकवाक्यत्वेन प्रामाण्यम् इति अर्थवादमन्त्रनामधेयसाधारण्येन सिद्धान्तयित्वा अर्थवादेषु विशेषरूपेण स्त्युत्यर्थत्वेन एकवाक्यत्वमिति प्रतिपाद्यते। स्तुत्यर्थत्वेन इति पदं वा उपलक्षणविधया प्रयोगसमवेतार्थस्मारकत्वादिपरमपि भवति। तथा च 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इति सूत्रे केवलार्थवादस्यैव विध्येकवाक्यत्वेन प्रामाण्यप्रकारनिरूपणात् मन्त्राधिकरणे मन्त्राणां प्रामाण्यस्यावगतत्वात् मन्त्राणां प्रामाण्यप्रकारः एव निरूपणीयः। एवं नामधेयप्रामाण्याधिकरणे च नामधेयानां प्रामाण्यप्रकारः एव निरूपणीयः। अतः प्राचीनोक्तः संशयप्रकारः एव सूत्रानुगुणः इति । नवीनानामभिप्रायः सूत्रानुगुणः न भवति। तथा च मन्त्राधिकरणसंशयप्रकारविषयकमतभेदे प्राचीनप्रकारः एव युक्तः इति। किञ्च 'मन्त्राणां धर्माधर्मयोः प्रामाण्यमस्ति नवे'ति संशयाकारः भाट्टदीपिकायामुल्लिखितः। तत्र अधर्मशब्दोल्लेखः असङ्गतः

[1] जैमिनिसूत्रम् १७-२-


ISSN: 2320-740X

प्रतिभाति। पूर्वपक्षसिद्धान्तोभयोरपि मन्त्राणामधर्मे प्रामाण्यस्य अस्वीकारात्। कौस्तुभे तु अधर्मशब्दरहित एव संशयोल्लेखः कृतः । वस्तुतः अयमपि संशयो न तथा युक्तः प्रतिभाति। संशये हि एका कोटिः पूर्वपक्षस्य अपरा सिद्धान्तस्य भवति। अत्र मन्त्राणां धर्मे प्रामाण्यं नास्ति इति कोटिः न पूर्वपक्षस्य नापि सिद्धान्तस्य । पूर्वपक्षिणापि अधिकाराख्यप्रकरणेन यागाद्यङ्गत्वेन अदृष्टार्थोच्चारणद्वारा मन्त्रविनियोगस्य स्वीकारात्, तदर्थं 'बर्हिर्देवसदनं दामि इति मन्त्रमुच्चारयेत्' इति वाक्यकल्पनस्य आवश्यकत्वात्, तत्र च मन्त्रस्य पदार्थविधया प्रामाण्यस्य सिद्धान्तिन इव अनिवार्यत्वात् ।

अतः 'मन्त्रार्थः विवक्षित उत ने'ति अथवा 'मन्त्राः अर्थप्रत्यायनार्थाः उत अदृष्टार्थाः' इति संशय एव सङ्गच्छते । यदि तु प्रामाण्याप्रामाण्यविचारपर्यवसायी एव संशयः उपन्यसनीय इति मन्यते, तर्हि एवं संशयो वक्तव्यः- 'मन्त्राणां पदार्थविधया केवलं स्वोच्चारणरूपधर्मप्रमाणत्वमुत स्वप्रतिपाद्यार्थसम्बन्धिक्रियारूपधर्मप्रमाणत्वमिति' ।

अनुशीलितग्रन्थाः –

१.शाबरभाष्यम्

२.भाट्टदीपिका

३.मीमांसाकौस्तुभः

४.जैमिनीयन्यायमाला

**********

## भोजनप्रश्नविचारः

**डा. सुधांशुकुमार नन्दः**

**प्राध्यापकः, वास्तु- जौतिष डिप्लोमा**

ज्यौतिषशास्त्रस्य सिद्धान्त-संहिता-होरारूपकं स्कन्धत्रयात्मकं स्वरूपमाचार्यैः प्राचीनकालादेव समुपस्थापितम्। बृहत्संहितायां वराहमिहिरेण स्पष्टतया अभाणि यथा-

**ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम्** ।

**तत्कात्स्न्योपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता ॥**

**स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ ।**

**होरान्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः ॥** [1]॥

पुनः वेदस्य इव ज्यौतिषस्यापि जातक-गोल-निमित्त-प्रश्न-मुहूर्त्त-गणिताख्यानि षडङ्गानि परिलक्ष्यन्ते। यथोक्तम् -

**जातकगोलनिमित्तप्रश्नमुहूर्ताख्यगणितनामानि ।**

**अभिदधतीह षडङ्गान्याचार्या ज्योतिषे महाशास्त्रे ॥**[2] **॥**

स्कन्धेन साकम् अङ्गानां समन्वयोऽपि वर्तते। तत् कथं विद्यते इत्यस्मिन् विषये प्रश्नमार्गकारः अवर्णयत्- गणितगोलौ सिद्धान्तान्तर्गतौ ,निमित्तं तु संहितायाः ,जातकप्रश्न-मुहूर्ताः होरास्कन्धस्य विषया इति। एतेषु प्रश्नशास्त्रम् अन्यतमं वर्त्तते।

**अस्य** भोजनविषयकप्रश्नस्य विस्तृतविचारः प्रश्नशास्त्रे वर्णितोऽस्ति। भोजनविचारावसरेऽस्मिन् लग्नादिभावैः के विषयाः विचिन्तनीयाः तदादौ उक्तं विद्यते। यथा प्रश्नायने –

**शरीरपात्रभक्ष्याणि पानीयं दातृमानसम् ।**

**उपदंशोऽन्नसेकश्च गुणोऽन्ने सहभोक्तृता ।।**

**पूर्तिरुक्तकथाः पश्चाच्छयनं लग्नतः क्रमात् ।**

**चिन्त्यानि भोजनप्रश्ने लग्नेशाशाभिवक्त्रता ॥**[3] **॥**

1.बृ९-१ .स.

**2.प्र.मा.१-६**

**3.प्र.अ.१२.१-२**


ISSN: 2320-740X

अर्थात् लग्नात् शरीरम् ,द्वितीयस्थानात् भोजनपात्रम् ,तृतीयस्थानात् भक्ष्यपदार्थाः ,चतुर्थस्थानात् पानीयद्रव्याणि ,पञ्चमात् मनोभावः ,षष्ठस्थानात् व्यञ्जनपदार्थाः ,सप्तमस्थानाद् अन्नसेकपदार्थाः तक्रादीनि च अष्टमस्थानात् अन्नस्य गुण्यागुण्यम् ,नवमस्थानात् सहभोक्तारः ,दशमस्थानात् उदरपरिपूरणम् , एकादशस्थानात् भोजनसमयस्य वार्तालापः द्वादशस्थानात् भोजनात्परं शयनचिन्ता च विचारणीया। प्रश्नमार्गेऽपि विषयोऽयं वर्णितोऽस्ति। यथा –

**पूर्तिरमन्त्रम्भक्ष्यम्पेयम्भोजयितृभाव उपदंशः।**

**सेचनमन्नं सहभुक् पूर्तिकथा शयनमपि लग्नात् ॥[1]॥**

उपर्युक्तभावोक्तविषयाणामाधारेण पट्टिका अधः दीयते–

पृच्छकस्य प्रश्नसमये कर्काटकलग्नं चेदधोलिखितप्रकारेण भावाद्भोजनप्रश्नविचारः कार्यः।

| | | | |
|---|---|---|---|
| मीनः ,9 सहभोक्तारः | मेषः,10 उदरपरिपूरणम् | वृषभः,11 भोजनसमयस्य वार्तालापः | मिथुनः,12 भोजनात्परं शयनचिन्ता |
| कुम्भः ,8 अन्नस्य गुण्यागुण्यं | प्रश्नकालिक- लग्नकुण्डली | | कर्कः ,लग्नं , 1शरीरम् |
| मकरः,7 अन्नसेकपदार्थानि | | | सिंहः,2 भोजनपात्रम्, |
| धनुः,6 व्यञ्जनपदार्थाः | वृश्चिकः,5 मनोभावः | तुला,4 पानीयद्रव्याणि | कन्या,3 भक्ष्यपदार्थाः |

1२७.१७.मा.प्र.

**अस्य फलनिर्देशक्रमः**

भोजनप्रश्नविचारसमये प्रश्नलग्नाद् भोक्त्रुः शरीरचिन्तनं कार्यम्। तत्तु लग्नस्थशुभाशुभग्रहाधारेण वाच्यम्। तत्र हि –

**स्वास्थ्यं शुभत्वं शुभयोगतोऽन्य-**

**दन्यस्य योगादुचितं च वाच्यम् ।**

**तत्तद्ग्रहोक्तं च रसादि सर्वं**

**योगेक्षणाद्यैर्बलतो विचिन्त्यम् ॥[1]॥**

प्रश्नलग्नाद् द्वितीये कुजशनैश्चरौ भवतश्चेद् भोजनपात्रं म्लानं वाच्यम्। चन्द्रश्चेद् भोजनपात्रं गोलाकारमिति ज्ञेयम्। शनिश्चेद् भिन्नपात्रं ,द्वितीयभावे स्थिरराशौ शुभग्रहाश्चेत् सुन्दरपात्रमिति वक्तव्यम्। तथा चोक्तम् –

**म्लानं वृत्तं च भिन्नं च कुजार्काविन्दुरर्कजः ।**

**पात्रं धात्वादिना चोह्यमुभये ग्रहयोगतः ॥[2]॥**

प्रश्नलग्नात्तृतीये सूर्यः शुक्रो वा भवति चेन्मूलपदार्थः भोजने आसीदिति वक्तव्यम्। गुरुश्चेत् पक्वपदार्थः। पुनश्च जीवराशौ शुक्रचन्द्रौ भवतश्चेत् भोजने अपूपादि आसीदिति ज्ञातव्यम्।

एतादृशरीत्या अन्येषां भावानां)चतुर्थभावाद् द्वादशभावपर्यन्तं (विचारः प्रसङ्गेऽस्मिन् पुरुषोत्तमेन पूर्णतया प्रतिपादितः।

**ग्रहाणां रसविचारः**

---

1.प्र.अ.१२-३

2.प्र.अ.१२-४


ISSN: 2320-740X

प्रसङ्गेऽस्मिन् कः ग्रहः केन रसेन संयुक्तः तस्य वर्णनं क्रियते। ग्रहाणां रसज्ञानवशात् दैवज्ञः पृच्छकस्य भोजने कस्य रसस्य प्राधान्यमासीत् इति ज्ञातुं शक्नोति। बृहत्पाराशरहोराशास्त्रानुसारं सूर्यादिग्रहाणां रसाः एवं वर्णिताः -

**कटुश्च लवणास्तिक्तो मिश्रितो मधुरोऽम्लकः।**

**कषायः क्रमशो ज्ञेयाः सूर्यादीनामिमे रसाः ॥[1]॥**

बृहज्जातकानुसारम् –

**कटुकलवणतिक्तमिश्रिता मधुराम्लौ च कषाय इत्यपि ॥[2]॥**

प्रश्नमार्गानुसारम् –

**शुक्रो मधुरस्निग्धश्चन्द्रः शीतोऽङ्गिरोबुधौ रूक्षौ ।**

**लवणकषायः सूर्यः सौरः कटुकः कुजस्तीक्ष्णः ॥[3]॥**

अर्थात् शुक्रस्य मधुरस्निग्धद्रव्यं ,चन्द्रस्य शीतलद्रव्यं ,जीवबुधयोः रूक्षद्रव्यं ,सूर्यस्य लवणकषायरसयुक्तद्रव्यं ,शनेः कटुरसयुक्तद्रव्यं ,कुजस्य तु तिक्तरसयुक्तद्रव्यं भवति । पुनश्च –

**मधुरस्तीक्ष्णसमेतस्तिक्तकषायाम्लकटुकलवणानि ।**

**गुरुसूर्यसौरिबुधभृगुभौमेन्दूनां परे ब्रुवते ॥[4]॥**

अर्थात् गुरुसूर्यसौरिबुधभृगुभौमेन्दूनां क्रमेण मधुरस्तीक्ष्णसमेतस्तिक्तकषायाम्ल-कटुकलवणरसाः भवन्तीति अन्ये कथयन्ति।

प्रश्नायनमतम् यथा –

---

1३५-३.हो.पा.बृ.

2१४-२.जा.बृ.

3१८-२७.मा.प्र.

4१९-२७.मा.प्र.

**अर्कादीनां क्रमाद् रूक्षं लवणं कटुमम्लकम् ।**

**मधुरं च कषायं च तिक्तं केचिद् वदन्ति हि ॥[1]॥**

अर्थात् सूर्यस्य रूक्षं ,चन्द्रस्य लवणं ,कुजस्य कटुः ,बुधस्य अम्लः ,गुरोः मधुरः ,शुक्रस्य कषायः , शनेश्च तिक्तरस इति केषाञ्चन जनानां मतम्।

उपर्युक्तश्लोकानामध्ययनेन ज्ञायते यद्ग्रहाणां रसविचारावसरेऽस्मिन् किञ्चित् मतबैविध्यं दृश्यते। चतुरदैवज्ञः स्वबुध्या ग्रहाणां रसज्ञानं कृत्वा भोजनं केन रसेनोपेतं भवति, इति वदेत्।

**राश्यानुरोधेन द्रव्यनिर्णयः**

**मेषराशौ भवेच्छागं वृषे गावयमुच्यते ।**

**धनुर्मिथुनसिंहेषु मत्स्यमांसादिभोजनम् ।।**

**नक्रालिकर्किमीनेषु परिपक्वफलान्वितम् ।**

**तुलाकन्याघटेष्वेव शुद्धान्नमिति कीर्तयेत् ।।**

**घृतयुक्तं पायसान्नं गुरोर्भोजनमीरितम् ।**

**क्षौद्रापूपपयोर्युक्तव्यञ्जनं भोजनं भृगोः ॥[2]॥**

**भोजनमात्राज्ञानम्**

एवंप्रकारेण राशिवशाद् द्रव्यज्ञानप्रतिपादनात् परं सः आरूढराशिस्थितिवशात् भोजनस्य मात्रां कथयति। यथा आरूढे चरराशिश्चेत् त्रिवारं भोजनं वाच्यम् ,स्थिरराशिश्चेद् एकवारं ,द्विस्वभावराशिश्चेद् द्विवारं भोजनं वाच्यम्। पुनश्च पुरुषग्रहाणां युतिदृष्टिश्च आरूढराश्युपरि चेत् क्षुधा न भवति चेदपि भोजनं मिलति। तथा चोक्तम् -

**आरूढे च चराद्ये त्रिः सकृद् द्विर्मुक्तिमादिशेत् ।**

---

1 .प्र१८-१२.अ.

2.प्र.अ.१२.२७-२९


ISSN: 2320-740X

**पुंभेऽशुभशुभालोकयोगेऽक्षुत्क्षुत्कृशाकृशे ॥[1]॥**

एवमेव प्रश्नशास्त्रे वर्णितस्य भोजनप्रश्नविचारस्य शैली निश्चयेन दैवज्ञस्य हृदयस्पर्शनं करोति।

**सहायकग्रन्थसूची -**

1. **बृ.पा.हो. -** बृहत्पाराशरहोराशास्त्रम्
2. **बृ.जा** - बृहज्जातकम्
3. **प्र.अ.**- प्रश्नायनम्
4. **प्र.मा. -** प्रश्नमार्गः
5. **बृ.स. -** बृहसंहिता

**********

## तारानुकूल्यचिन्तने ज्ञेयाः अंशाः

**डा. रमानन्दभट्टः एन्**

**प्राध्यापकः, वास्तु-ज्योतिषडिप्लोमा**

अथ पञ्चाङ्गेषु नक्षत्रं प्रधानम् । तदाह माधवः **तिथि-तिथिदल-योग-वार-तारा जगति भवन्ति यथोत्तरं बलिष्ठा**[2] इति । तत्कारणमप्याह सः -

**यथा निहन्ति प्रबलो गुणोऽन्यस्त्याज्यत्वदोषं तिथिवासरादेः ।**
**तथैव कश्चिन्न हि तारकायास्ततश्च नक्षत्रबलं प्रसिद्धम्[3] ॥**

---

**1३०-१२.अ.प्र.**

[2] विद्यामाधवीयम् – ५.०५ ।

[3] विद्यामाधवीयम् – ५.१३ ।

प्रबलोऽन्यो गुणो यथा तिथिवासरादिजातदोषान् नाशयति तथा नास्ति कोऽपि गुणो नक्षत्रकृतदोषान् नाशयितुं समर्थः । अतो नक्षत्रबलं कर्मसु प्राधान्यं भजते ।

अतस्तदुच्यते -

**जन्मनक्षत्रमारभ्य नित्यभान्तं हि गण्यते ।**

**नवभिर्हरते भागो नव ताराः प्रकीर्तिताः ॥**

**जन्मसम्पद्विपत्क्षेमप्रत्यक्साधननैधनम् ।**

**मित्रं परममैत्रं च नवताराः प्रकीर्तिताः[1] ॥**

जन्मनक्षत्रात् नित्यनक्षत्रं गणयित्वा तां सङ्ख्यां नवभिः हरेत् । तदा यद्येकमवशिष्यते तर्हि जन्मतारा इति, द्वे यदि सम्पत्तारा इति, यदि त्रीणि विपत्तारा इति, चत्वारि यदि क्षेमतारा इति, पञ्च यदि प्रत्यरतारा इति, षड्यदि साधकतारा इति, सप्त यदि वधतारा इति, अष्टौ यदि मैत्रतारा इति, नव यदि परममैत्रतारा चेति ज्ञातव्यम् ।

अत्र जन्मनक्षत्रात् प्रथमनवनक्षत्राणि जन्मनक्षत्राणीति, द्वितीयनवनक्षत्राणि अनुजन्मनक्षत्राणीति, तृतीयनवनक्षत्राणि त्रिजन्मनक्षत्राणिति च कथ्यन्ते । एतेषामेव प्रथम-द्वितीय-तृतीयपर्याय(आवर्तन)नक्षत्राणीति नामान्तरं विद्यते ।

अथैतासु नवसु तारासु त्याज्यत्वं कथ्यते ।

**जन्मविपत्प्रत्यरवधजन्माष्टमराशितारकास्त्याज्याः ।**

**साष्टमगृहगाः शुभेषु त्यजन्ति षष्ठव्ययौ चान्ये[2] ॥**

जन्मवधताराः-प्रत्यर-विपत्-, जन्माष्टमराशिताराश्च वर्ज्याः । एतासु तारासु जन्म-प्रत्यर-विपद्-वधतारा यथोत्तरमधिकदोषदा भवन्तीति ज्ञेयम् । ततश्च -

---

[1] सङ्ग्रहमाधवी – ३६-३७ ।

[2] विद्यामाधवीयम् २.४० ।


ISSN: 2320-740X

**अष्टाशीतितमोंऽशो यस्मिन् जन्मादिगणनया भवति ।**

**वैनाशिकं तदृक्षं त्यजन्ति केचित्तमेवांशम्[1] ॥**

जन्मनक्षत्रपादात् अष्टाशीतितमो (८८) नवांशः यस्मिन् नक्षत्रे पतति[2] तद्वैनाशिकं नक्षत्रं कथ्यते । तद्वर्ज्यम् । केचन तमेव नवांशं वर्जयन्ति । न तु समग्रं नक्षत्रम् ।

**जन्मर्क्षात्पूर्वनक्षत्रं सप्तविंशतिभं भवेत् ।**

**सप्तविंशतिनक्षत्रं सर्वकर्मसु वर्जयेत्[3] ॥**

जन्मनक्षत्रात् पूर्वतनं नक्षत्रं परममैत्रतारा चेदपि वर्ज्यम् ।

**जन्मादिनवताराणां फलानि -**

**जन्मर्क्षे देहनाशाय कृतं कर्म भविष्यति ।**

**सम्पत्करे तु तत्कर्म सम्पदामास्पदं भवेत् ॥**

**व्यापदं कुरुते यस्मात् विपत्करमिति स्मृतम् ।**

**क्षेमेण तु कृतं कर्म क्षेमारोग्यकरं भवेत् ॥**

**कार्यसम्पन्निषेधित्वात्प्रत्यरं त्विति कीर्तितम् ।**

**साधकः साधयेदर्थानचिरादश्रमादपि ॥**

**निधनं हि भवेद्यस्मात्सप्तमो वधसंज्ञितः ।**

**मैत्रं तु मित्रसम्प्रीतिं कुर्यात्कार्यफलोदयम् ॥**

**परमं मैत्रमासाद्य यत्कार्यं कुरुते नरः ।**

**तत्कार्यं सुकरं तस्य सिद्ध्यत्येव न संशयः[1] ॥**

---

[1] विद्यामाधवीयम् २.४१ ।

[2] जन्मनक्षत्रात् द्वाविंशे वा त्रयोविंशे नक्षत्रे पतति ।

[3] मुहूर्तपदव्याश्चतुर्थश्लोकव्याख्याने वरदीपिकायाम् ।

| तारा | फलम् | तारा | फलम् | तारा | फलम् |
|---|---|---|---|---|---|
| जन्म | देहपीडा | क्षेमः | आरोग्यम् | वधः | नाशः |
| सम्पत् | सम्पत्प्राप्तिः | प्रत्यरः | कार्यभङ्गः | मैत्रम् | कार्यफलसिद्धिः |
| विपत् | आपत्प्राप्तिः | साधकः | कार्यसिद्धिः | परममैत्रम् | क्षिप्रं कार्यसिद्धिः |

अथ ताराबलनिर्णयेऽपवादादिविशेषांशा निरूप्यन्ते । तत्रादौ जन्मताराविषय उच्यते ।

**आद्ये जन्मनि नव्यभुक्तिवसनालङ्कारपुण्यैर्विना**

**सर्वं कर्म शुभाशुभं परिहरेद्भुक्तिं नवां चार्भकः ।**

**हित्वाभ्यङ्गविधिं निषेकसहितं क्षौरं च शिष्टं शुभं**

**कार्यं कार्यमुशन्ति केचिदृषयो जन्मर्क्षयोरन्ययोः**[2] **॥**

प्रथमजन्मतारायां नवान्नभोजनम्, नववस्त्रधारणम्, नवाभरणधारणम्, होमादिपुण्यकर्माणि कार्याण्येव । अन्यानि शुभाशुभकर्माणि वर्ज्याणि । शिशोरन्नप्राशनमपि प्रथमजन्मनि न कर्तव्यम् । द्वितीय-तृतीयजन्मनोरभ्यङ्गक्षौरक-निषेक-र्माणि न कार्याणि । अन्यानि शुभाशुभकर्माणि कार्याण्येव ।

अथ विपदादीनां विषय उच्यते -

**आद्यात्तु जन्मनक्षत्रात्त्रिपञ्चस्वरतारकाः ।**

**विशेषतो वर्जनीयास्सर्वेषु शुभकर्मसु**[3] **॥**

प्रथमपर्याये **विपत्प्रत्यरवध**तारास्सर्वशुभकर्मस्ववश्यं समग्रतया वर्ज्या एव । द्वितीयादौ विशेष उच्यते।

**सर्वानेव विपत्तिपञ्चमवधेष्वाद्येषु भेष्वंशकान्**

**मध्येष्वाद्यतुरीयपावकमितानन्त्येषु वा वर्जयेत् ।**

---

[1] भरद्वाजस्य वचनमिदमिति मुहूर्तपदव्याश्चतुर्थश्लोकव्याख्याने वरदीपिकायाम् ।

[2] विद्यामाधवीयम् ३.२३ ।

[3] आचारसङ्ग्रहस्य वचनमिदमिति मुहूर्तपदव्याश्चतुर्थश्लोकव्याख्याने वरदीपिकायाम् ।


ISSN: 2320-740X

**सत्कर्मा बलवान् शुभांशकगतो दृष्टश्च सौम्यैर्ग्रहै-**

**र्जन्मप्रत्यरजान्विपद्वधभवान्दोषान् विधुर्बाधते[1] ॥**

प्रथमपर्याये विपत्वधताराः स-प्रत्यर-मग्रतया त्याज्या एव । द्वितीयपर्याये तु केवलं विपत्तारायाः प्रथमः पादः, प्रत्यरतारायाः चतुर्थपादः, वधतारायाः तृतीयपादश्च त्याज्यो भवति । इतरे पादाः शुभकर्मसु ग्राह्याः । तृतीयपर्याये त्वेतासां विपत्वधतारा-प्रत्यर-णां क्रमेण प्रथमचतुर्थतृतीयपादा विकल्पेन वर्ज्याः । अर्थाद्यद्येतेषां पादानामधिपाः पापास्तर्ह्येवैते पादा वर्ज्याः, अन्यथा ग्राह्या एव[2] । अन्ये पादास्तु ग्राह्या एव ।

अत्र कश्चन विचारो दृश्यते शास्त्रे । "असतामन्त्ये[3]" इति मुहूर्तपदव्यां तारानुकूल्यनिर्णये प्रथमे वर्गे विपत्वधता-प्रत्यर-रास्सर्वात्मना निन्द्याः, मध्ये त्वेतासां प्रथमचतुर्थतृतीयपादा वर्ज्याः, अन्ते त्वासामेवासतामंशा वर्ज्या इत्युक्तम् । अत्र तृतीयपर्याये विपत्वधता-प्रत्यर-राणां सर्वे पापांशा वर्ज्या वा प्रथमचतुर्थतृतीयपादसम्बन्धिनः पापांशा वर्ज्या इति विचिकित्सा । अत्र पक्षद्वयम् । तृतीयपर्याये विपत्वधता-प्रत्यर-राणां सर्वे पापांशा वर्ज्या इति प्रथमः पक्षः, केवलं प्रथमचतुर्थतृतीयपादसम्बन्धिनः पापांशा वर्ज्या इत्यन्यः पक्षः । वरदीपिकायां तद्दर्शितम् –

**त्रिपञ्चस्वरतारासु क्रमादन्त्येषु केचन ।**

**वदन्त्युग्रांशका ग्राह्याः कुवेदाग्निमिता न चेत्[4] ॥**

तृतीयजन्मर्क्षात् तृतीय-पञ्चम-सप्तमताराणां पापाधिपराश्यंशा अपि ग्राह्या यदि ते क्रमेण प्रथम-चतुर्थ-तृतीयपादा न । तर्हि अस्मिन् पक्षे एतासां ताराणां प्रथम-चतुर्थ-तृतीयपादाः पापांशाश्चेन्न

[1] विद्यामाधवीयम् ३.२४ ।

[2] "तृतीयजन्मभात्तेषु पापभागान् विवर्जयेत्" इत्याचारसङ्ग्रह इति मुहूर्तपदव्याश्चतुर्थश्लोकव्याख्याने वरदीपिकायाम् ।

[3] मुहूर्तपदवी – ०४ ।

[4] मुहूर्तपदव्याश्चतुर्थश्लोकव्याख्याने वरदीपिकायाम् ।

ग्राह्या, अन्यथा ग्राह्या एवेति । अत एव माधवीयेऽपि "**वा वर्जयेत्**" इत्युक्तम् । एवमेव केषुचिद्देशेषु सदाचारो दृश्यते । मम दृष्ट्या अस्य द्वितीयपक्षस्यैव महत्त्वं दृश्यते । यत आह नारदः –

**जन्मर्क्षाद्दशमं ततोऽपि दशमं जन्मर्क्षमित्युच्यते ।**

**त्रिष्वाद्याद्दशमं तदर्धफलदं तस्मात्तदर्धं फलम्[1] ॥**

आद्यपर्यायस्थनक्षत्राणां पूर्णं फलम्, तदर्धं द्वितीयपर्याये, ततोऽप्यर्धं तृतीयपर्याय इति नारदः । अस्माद्द्वितीयपर्याये यानि नक्षत्राण्यथवा तेषां पादास्त्याज्या इत्युक्तं ततोऽधिकं तृतीये न स्यादिति ज्ञायते । यदि तृतीयपर्याये सर्वे पापांशास्त्याजास्तर्हि द्वितीयापेक्षया तृतीयपर्याय एव त्याज्यभागा अधिका जायन्ते । यत्रानिष्टमल्पं तत्र त्याज्यमधिकं भवति । एतन्न युज्यत इति मे मतिः । यतो दृष्टान्तः । शतभिषग्जन्मभं चेदुत्तराषाढानक्षत्रं तृतीयपर्याये वधतारा भवति । उत्तराषाढा प्रायस्सर्वकर्मग्राह्यैव शुभा च । "**अन्त्येऽसताम्**" इत्यत उत्तराषाढानक्षत्रस्य द्वितीयतृतीयचरणौ मकर-कुम्भांशकौ । तयोरधिपतिश्शनिः । अतस्तौ चरणौ पापांशकौ । अतो वर्ज्यौ । इदानीमार्द्रा जन्मभं चेदुत्तराषाढा द्वितीयावृत्तौ वधतारा भवति । तर्हि वधतारायास्तृतीयश्चरणो वर्ज्यः । अत्र द्रष्टव्यं यद्द्वितीयपर्याये दोषाधिक्येऽपि वधताराया एक एव चरणो वर्ज्यः, तृतीये दोषाल्पत्वेऽपि तृतीयचतुर्थचरणौ द्वावपि वर्ज्यौ भवतः । एवं वैपरीत्यदर्शनात् "**अन्त्येऽसताम्**" इत्यस्य तृतीयजन्मर्क्षात् तृतीय-पञ्चम-सप्तमताराणां केवलं प्रथम-चतुर्थ-तृतीयपादा एव पापाधिपराश्यंशाश्चेत्त्याज्या नान्य इति पक्षः साधीयान् इति मे भाति । इत्येवं पूर्वोक्तोदाहरणे शतभिषजि जातस्य तृतीयवधताराया उत्तराषाढायाः केवलं तृतीयचरणः पापांश इति वर्ज्यो न द्वितीय इति निर्णयः ।

[1] इति मुहूर्तपदव्याश्चतुर्थश्लोकव्याख्याने वरदीपिकायाम् ।


ISSN: 2320-740X

मुहूर्तचिन्तामणौ तु “**अथ शुभाः सर्वे तृतीये स्मृताः**[1]” इति तृतीये सर्वास्ताराश्शुभा इत्युक्तम् । अन्यत्र

**प्रथमे प्रथमं त्याज्यं द्वितीये तु तृतीयकम् ।**

**तृतीये पञ्चमं त्याज्यं वधं सर्वत्र वर्जयेत्**[2] **॥**

इति प्रथमपर्याये जन्मभम्, द्वितीयावर्तने विपद्भम्, तृतीयपर्याये च प्रत्यरिः, सर्वत्र वधतारा च वर्ज्येत्युक्तं दृश्यते ।

षड्बलसहितश्चन्द्रश्शुभक्रियायां शुभांशकस्सन् शुभग्रहैर्दृष्टश्चेदेष विपत्वधतारादो-प्रत्यर-षो निवारितो भवति ।

सामान्यतइदमेव **गो“[३]मां[५]सं[७] के[१]व[४]लं[३] त्याज्यम् ”**इति कथयन्ति । ताराणां प्रथमावृत्तौ ३-५-७-ताराः सम्पूर्णं त्याज्याः । द्वितीयावृत्तावेतासामेव केवलांशास्त्याज्याः । तृतीयावृत्तावेते पादा विकल्पेन वर्ज्याः इति । एवं नियमो दृश्यते चेदपि, **वध“◌ं सर्वत्र वर्जयेद् ”** इति वधतारात्याग एव शिष्टाचारत्वेन लोके दृश्यते । तदुक्तम् -

**जन्माष्टमर्क्ष-तश्चन्द्रौ वधर्क्षं च विशेषतः ।**

**विवर्ज्याः कर्तृदोषेषु सर्वेषु शुभकर्मसु**[3] **॥**

**चन्द्राष्टमदोषाद्यपवादः -**

**स्वकीयजन्माष्टमराशिपत्योर्मैत्र्यां न जन्माष्टमराशिदोषः ।**

**जन्मेशकर्मेश्वरमित्रभावः क्षिणोति वैनाशिकदोषमुग्रम्**[4] **॥**

---

[1] मुहूर्तचिन्तामणिः ४.१३ ।

[2] सङ्ग्रहमाधवी – ४० ।

[3] मुहूर्तपदव्याश्चतुर्थश्लोकव्याख्याने वरदीपिकायाम् ।

[4] विद्यामाधवीयम् ३.२५ ।

जन्मराश्यधिपतेर्जन्माष्टमराश्यधिपतेश्च मिथो मैत्री यदि वर्तेत तर्हि पूर्वोक्तो जन्माष्टमचन्द्रदोषो न भवति। उदाहरणार्थम् - सिंहराशेरधिपती रविः, तस्मादष्टमराशिर्मीनस्तदधिपतिर्गुरुः । एतयोर्मिथो मित्रत्वं विद्यते । अतस्सिंहराशिजानां जन्माष्टमचन्द्रदोषो न भवति । तथैव जन्मराशि-दशमराशीशयोर्मित्रत्वमस्ति यदि तर्हि पूर्वोक्तो वैनाशिकदोषो न भवति । वैनाशिकनक्षत्रे सप्तविंशतिनक्षत्रे च क्रमेण अष्टाशीतितमोंऽशोऽष्टोत्तरशततमांशश्च शिष्टैर्वर्ज्यते न तु पूर्णं नक्षत्रम् ।

**अनिवार्यप्रसङ्गेषु दानम् -**

**जन्मत्रिपञ्चसप्ताख्यास्तारा नेष्टफलप्रदाः ।**

**अनिष्टपरिहाराय दद्याद्दानं द्विजातये ॥**

**शाकं गुडं च लवणं सतिलं काञ्चनं क्रमात्[1] ।**

तारानुकूल्यं नास्ति चेत् अनिवार्यप्रसङ्गे ब्राह्मणेभ्यो दानं दत्त्वा शुभकार्याणि कार्याणीति । तत्र देयद्रव्याणि -

| **तारा** | **देयद्रव्यम्** | **तारा** | **देयद्रव्यम्** |
|---|---|---|---|
| जन्मतारा | शाकम् | प्रत्यरतारा | लवणम् |
| विपत्तारा | गुडम् | वधतारा | तिलसहितं काञ्चनम् |

**तारानुकूल्यचिन्तने केचन विशेषांशाः -**

विवाहे – वध्वाः – जन्मतारात्रयमपि शुभदम् । वरस्याद्यं जन्मर्क्षं नेष्टमवशिष्टे शुभे[2] । आद्यगर्भस्य जन्मनक्षत्रं सर्वशुभकर्मसु वर्ज्यम्[1] ।

[1] मुहूर्तचिन्तामणेः ४.१३ श्लोकव्याख्याने नारदवचनमिति पीयूषधारायाम् ।

[2] “स्त्रीजन्मत्रयमाहुरत्र शुभदम्” - विद्यामाधवीयम् – ८.२४ ।

 ISSN: 2320-740X

**प्रयाणे प्रत्यरं श्रेष्ठं मौञ्ज्री विपदि शोभना ।**

**प्रत्यरं केचिदिच्छन्ति विवाहेऽपि शुभावहम्[2] ॥**

प्रयाणे विवाहे च प्रत्यरतारा शुभदा भवति । उपनयने विपत्तारा न दोषाय । इमेंऽशाः अस्मत्प्रदेशे शिष्टाचारे वर्तन्त इति सप्रमाणं निरूपिताः ।

एवं तारानुकूल्यचिन्तनं सापवादं निरूपितम् । इदं तारानुकूल्यं कृष्णपक्ष एव द्रष्टव्यमिति नारदः श्रीपतिभट्टश्च । शुक्ले तु चन्द्रस्य बलित्वात्ताराबलं स्वतस्सिद्धमिति भावः । तथा च नारदः – "**कृष्णे बलवती तारा शुक्लपक्षे बली शशी**" । श्रीपतिश्च सार्थवादमाह –

**न खलु बहुलपक्षे शीतरश्मेः प्रभावः कथितमिह हि तारावीर्यमार्यैः प्रधानम् ।**

**अतिविकलशरीरे प्रेयसि प्रेषिते वा प्रभवति खलु कर्तुं सर्वकार्याणि योषा ॥**

**शुक्ले पक्षे शीतरश्मिर्बलीयो न प्राधान्यं ताराकायास्तु तत्र ।**

**शक्त्या युक्ते विद्यमानेऽपि कान्ते न स्वातन्त्र्यं योषितः क्वापि दृष्टम्[3] ॥**

एवं मतमस्ति चेदपि नक्षत्रबलमेव मुख्यमिति माधवाचार्येण विद्यामाधवीये सुष्ठु निरूपितम् । "यथा निहन्ति ...." इत्यादिस्स श्लोकोऽस्य लेखनस्यादावेव दर्शित इत्यतो नाधिकं विव्रियते । अत उभयोः पक्षयोरपि नक्षत्रबलं द्रष्टव्यमेवेति निर्णयः । तथैवाचारोऽपि ।

इत्येवं गुरुपादाब्जप्रसादतस्तारानुकूल्यविषयो यथामति निरूपितः ॥ **शम्** ॥

**ग्रन्थसूची**

---

[1] मुहूर्तचिन्तामणिः १.३४ । तत्रैव पीयूषधारायां नारदवचनमपि द्रष्टव्यम् – "न जन्ममासे न जन्मर्क्षे न जन्मदिवसेऽपि वा । आद्यगर्भसुतस्यापि दुहितुर्वा करग्रहः" ॥

[2] कालविधानपद्धतिः – ८२ तमः श्लोकः ।

[3] मुहूर्तचिन्तामणेः ४.१२ श्लोकव्याख्याने पीयूषधारायाम् ।

१. **विद्यामाधवीयम्** – विष्णुशर्मविरचितमुहूर्तदीपिकाव्याख्यासहितम् – डा. आर्. शामाशास्त्रिवर्यैः शोधितम् – मैसूरुप्राच्यविद्यासंशोधनालयतः १९२३ तमे वर्षे प्रकाशितम् ।

२. **मुहूर्तपदवी** – वरदीपिकाव्याख्यासहिता – अनन्तपद्मनाभतन्त्रिभिः सम्पादिता – तेषामभिनन्दनसमित्या उडुपिनि २००९ तमे वर्षे प्रकाशिता ।

३. **सङ्ग्रहमाधवी –** नेम्पु अनन्तेशभट्टवर्यैः वाङ्मयप्रकाशनेन २०२२ तमे वर्षे प्रकाशिता ।

४. **मुहूर्तचिन्तामणिः –** पीयूषधाराव्याख्यासहिता – केदारदत्तजोशिवर्यैः सम्पादिता - मोतीलाल बनारसीदासप्रकाशनेन २००८ तमे वर्षे प्रकाशिता ।

५. **कालविधानपद्धतिः** – सरस्वतीमहल् इत्यस्मात् २००६ तमे वर्षे प्रकाशिता ।

**********

## संस्कृतवाङ्मये शाब्दबोधः

(तर्कदृष्ट्या लघु विवेचनम्)

**डा. राघवेन्द्र पी आरोल्ली**

**प्राध्यापकःन्यायविभागः ,**

**लेखनसारः**

न्यायदर्शने अभ्युपगतेषु चतुर्षु प्रमाणेषु शब्दोऽपि अन्यतमः । शब्दात् यथार्थज्ञानस्य उत्पत्तिः कथं भवति । अभेदसम्बन्धेन कुत्र कुत्र अन्वयः भवति । वाक्यात् जायमानः बोधः कीदृशः भवति । कारकाणां कथम् अन्वयः । कर्तरिकर्मणिप्रयोगयोः वैशिष्ट्यम् किम् इति अस्मिन् लेखने चिन्तितम् अस्ति।


ISSN: 2320-740X

**उपोद्घातः**

अस्मिन् संसारे अनेके जीविनः परस्परं विचाराणां विनिमयार्थं विविधानां साधनानाम् उपयोगं कुर्वन्ति । कश्चन देहचेष्टया स्वकीयान् विचारान् प्रकटयति । अन्ये केचन विलक्षणैः ध्वनिभिः, चित्रमुखेन वा विचारस्य प्रकटनं कुर्वन्ति । एतेषु साधनेषु भाषा इति उत्कृष्टं साधनम् अस्ति । अतः अस्मिन् प्रपञ्चे प्रदेशभेदेन कालानुगुणं च अनेकाः भाषाः समुत्पन्नाः सन्ति । तासु भाषासु संस्कृतभाषा प्राचीनतमा अपि नवीना सुव्यवस्थिता च अस्ति । भाषा नाम अर्थबोधकानां व्यवस्थितानां पदानां समूहः एव । एषा भाषा अस्माभिः विवक्षितान् विषयान् प्रकाशयति । प्रकाशनस्य तस्य शाब्दबोधः इति नाम्ना शास्त्रेषु व्यवहारः दृश्यते ।

संस्कृतभाषायां वाक्यैः अर्थस्य अधिगमः केन प्रकारेण भवति इति विषये अस्माकं दार्शनिकैः विस्तृतं चिन्तनं कृतम् अस्ति । अतः शाब्दबोधः प्रथमान्तमुख्यविशेष्यकः, धात्वर्थव्यापारमुख्यविशेष्यकः, भावनामुख्यविशेष्यकः इति प्रधानतया त्रयः पक्षाः दार्शनिकेषु दृश्यन्ते । तेषु तर्कशास्त्रे प्रथमान्तमुख्यविशेष्यकः शाब्दबोधः अङ्गीकृतः अस्ति ।

**पदार्थोपस्थितिः**[1]

श्रवणेन्द्रियेण शब्दानां प्रत्यक्षं भवति । तेषु सार्थकाः शब्दाः वर्णात्मकाः भवन्ति । यथा गजः, अश्वः इत्यादयः । तत्र गजादीनां शब्दानां कश्चन अर्थः अस्ति । स च अर्थः शब्दस्य श्रवणे सति स्मर्यते । तस्मात् शब्दस्य अर्थस्य च कश्चन सम्बन्धः अस्ति इति अवगम्यते । यतः परस्परं सम्बद्धयोः एव पदार्थयोः एकस्य ज्ञानेन अपरस्य स्मरणं भवति । यथा मेघनां प्रत्यक्षे सति वृष्टिः स्मर्यते । मेघवृष्ट्योः कार्यकारणभावरूपः सम्बन्धः अस्ति । तथैव शब्दार्थयोः अपि शक्तिः इति कश्चन सम्बन्धः अस्त्येव ।

---

1 उपस्थितिशब्दस्य स्मरणम् इति अर्थः । शब्दस्य श्रवणे सति अर्थस्य यत् स्मरणं भवति तदेव पदार्थोपस्थितिः इति कथ्यते ।

**पदानि**

सार्थकेषु शब्देषु काञ्चन व्यवस्थाः संस्कृतवाङ्मये एव पश्यामः । अत्र सर्वाणि अपि पदानि विभक्तिप्रत्ययेन सहितानि भवन्ति एव । सुपां तिङांश्च प्रत्ययानां विभक्तिः इति संज्ञा वर्तते । तेषु सुपां प्रथमादिसप्तविभागाः सन्ति । प्रथमादिविभक्तौ एकवचन-द्विवचन-बहुवचनभेदेन पुनः विभागत्रयं दृश्यते। एवं तिङ्-प्रत्ययानां परस्मैपदि-आत्मनेपदिभेदेन विभागद्वयम्, एकैकत्र पुरुषत्रयम्, एकैकस्मिन् पुरुषे वचनत्रयमिति विभागाः सन्ति । सुप्-विभक्तिसहितानां तिङ्-प्रत्ययसहितानां वा शब्दानां पदम्[1] इति संज्ञा अस्ति । एतदेव सूत्रयति अक्षपादः 'ते विभक्त्यन्ताः पदम्'[2] इति । किन्तु पदार्थस्य कथनकाले सूत्रितं यत् 'व्यक्त्याकृतिजातयस्तु पदार्थः'[3]इति । अत एव शक्तं पदम् इति अपि व्यवहारः न्यायनये दृश्यते । 'वनं गच्छति' इत्यादौ द्वितीयाविभक्तिप्रकृतिभूतस्य वनादेः वृक्षसमूहादौ शक्तेः सत्त्वात् वनेति भागेऽपि पदम् इति व्यवहारः अस्ति ।

**अभेदान्वयबोधः**

वाक्येषु सुबन्तानि तिङन्तानि च पदानि भवन्ति । यथा 'गणेशः मधुरं खादति' इत्यादीनि । अत्र गणेशः मधुरम् इति च सुबन्तपदम्, खादति इति तिङन्तपदम् । यत्र वाक्ये सुबन्तपदानि समानविभक्त्यन्तानि समानवचनान्तानि च भवन्ति तत्र पदार्थयोः अभेदः[4] संसर्गो भवति । यथा - 'दशरथपुत्रः रामः सीतां पश्यति 'इत्यस्मिन् वाक्ये दशरथपुत्रः रामः इति पदद्वयं प्रथमाविभक्तौ एकवचनान्तं श्रूयते । अतः अनेन वाक्येन यः दशरथपुत्रः स एव रामः, यः रामः स एव दशरथपुत्रः इति

1 सुप्तिङन्तं पदम् (पाणिनीयाष्टाध्यायी - १/४/१४)

2 न्यायसूत्रम् - २/२/५९

3 न्यायसूत्रम् - २/२/६७

4 अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना च पदेनोपस्थापितस्यैव संसर्गमर्यादया भासते । (व्युत्पत्तिवादः)


ISSN: 2320-740X

अनयोः अभेदः ज्ञायते । अत्र अनेन वाक्येन दशरथपुत्राभिन्नः रामः इति बोधः भवति । तस्यैव अभेदान्वयबोधः इति नाम्ना व्यवहारः अस्ति ।

समासस्थले तु विशेषणवाचकपदं विशेष्यवाचकपदात् अव्यवहितपूर्वम् अस्ति चेत् तयोः अभेदेन एव अन्वयः अनुभूयते । यथा - 'कोकिलः मधुरध्वनिं करोति' इत्यस्मिन् वाक्ये मधुरध्वनिः इत्यत्र ध्वनिरिति विशेष्यवाचकं भवति, मधुरेति विशेषणवाचकम् अस्ति । तयोः अव्यवहितपूर्वापर्यस्य सत्त्वात् अभेदः एव । मधुरः एव ध्वनिः इत्यर्थः । अतः राजपुरुषः इत्यादिषु तत्पुरुषस्थलेषु अपि राजपदस्य राजसम्बन्धी इत्यर्थः लक्षणया स्वीक्रियते । तस्मात् राजसम्बन्ध्यभिन्नः पुरुषः इति शाब्दबोधः तत्र सम्भवति ।

एवमपि क्वचित् 'शतं ब्राह्मणाः', 'वेदाः प्रमाणम्' इत्यादिषु असमानवचनान्तपदोपस्थापितेषु अर्थेषु अपि अभेदान्वयबोधः सम्भवति । तत्र विंशत्यादीनां सङ्ख्यानाम् एकवचनान्तेन एव निर्देशः इति अनुशासनात्[1] 'शतं ब्राह्मणाः 'इत्येव प्रयोगः सम्भवति । 'वेदाः प्रमाणम्' इत्यादौ तु वेदानां प्रमाणत्वं शब्दत्वावच्छिन्नम् एकमेव इत्यतः विभक्त्युपस्थापितसङ्ख्यायाः प्रमाणत्वे अन्वयसम्भवात् एकवचनम् इति ध्येयम् । एतादृशस्थलेषु जात्यैकवचनम् इति व्यवहारः दृश्यते ।

**वाक्यात् शाब्दबोधवर्णनम्**

'शिवः तण्डुलं पचति' इत्यस्मिन् वाक्ये त्रीणि पदानि श्रूयन्ते । तत्र 'शिवः' इति पदं कर्तारं बोधयति, प्रथमाविभक्त्यन्तं च अस्ति । 'तण्डुलम्' इति पदं कर्म बोधयति । 'पचति' इति क्रियापदेन पचनक्रिया तथा विक्लत्तिरूपं फलं च ज्ञायते । अत्र अयं विशेषः - तण्डुलम् इत्यत्र द्वितीयाविभक्तिरपि श्रूयते, तया कर्मत्वस्य स्मरणं भवति । एवं पचति इत्यत्र 'ति' इति आख्यातप्रत्ययेन कर्तृत्वस्य नाम कृतेः

1 विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः । (अमर. २/९/८३)

स्मरणं भवति । इत्थं 'चैत्रः तण्डुलं पचति' इत्यस्मात् वाक्यात् क्रमेण चैत्र-तण्डुल-कर्मत्व-विक्लत्ति-पचनरूपाणाम् अर्थानां स्मरणं भविष्यति । वाक्याद् उपस्थितानाम् एतेषाम् अर्थानां परस्परं सम्बन्धः(संसर्गः) एव शाब्दज्ञाने भासते[1] । प्रकृते तण्डुलं कर्म भवति इत्यतः तण्डुले कर्मत्वम् अस्ति । तस्मात् तण्डुलस्य कर्मत्वेन सह सम्बन्धः भवति वृत्तित्वम् । एवं च 'तण्डुलम्' इति पदात् 'तण्डुलवृत्तिकर्मत्वम्' इति ज्ञानं भवति ।

**कर्मत्वम्**

कर्मत्वं नाम किमिति चिन्तायां धात्वर्थतावच्छेदकफलशालित्वम् इति वदामः । तथा हि - गच्छति इत्यत्र धातुना गमनक्रिया ज्ञायते । तस्याः फलं ग्रामादिना जायमानः संयोगः । सः संयोगः प्रकृते धात्वर्थतावच्छेदकः भवति । एतादृशस्य संयोगस्य आश्रयः ग्रामादिः भवति । अतः तत्र ग्रामादिकं कर्म भवति । प्रकृते पचतेः अर्थः भवति पचनक्रिया । तस्याः फलं भवति तण्डुलानां विक्लत्तिः । तच्च फलं तण्डुलेषु अस्ति । इत्थं च धात्वर्थस्य क्रियायाः यत् फलं तत् ग्रामतण्डुलादीनां कर्मत्वं सम्पादयति । अतः विक्लत्यादिफलेन निरूपितं भवति तण्डुलादौ विद्यमानं कर्मत्वम् । विक्लत्यादिकं फलं च तण्डुलादिनिष्ठकर्मत्वनिरूपकं भवति । अतः द्वितीयाविभक्त्यर्थः कर्मत्वं निरूपकत्व- सम्बन्धेन धात्वर्थविशेषणे विक्लत्तौ फले अन्वेति । तथा तण्डुलनिष्ठकर्मत्वनिरूपकविक्लत्याद्यनुकूलपचनानुकूलकृतिः इति 'तण्डुलं पचति' इत्यनेन वाक्येन लभ्यते। कृतेः च आश्रयतासम्बन्धेन कर्तरि अन्वयः भवति ।

**कर्तरिकर्मणिप्रयोगाः**

---

1 शाब्दबोधे चैकपदार्थे अपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते । (व्युत्पत्तिवादः)

 ISSN: 2320-740X

इत्थं यत्र आख्यातेन कर्तृत्वबोधः भवति । तत्र सर्वत्रापि कर्तृवाचकपदं प्रथमान्तम् एव भवति । अत्रानुशासनमपि अनभिहिताधिकारे विद्यमानं 'कर्तृकरणयोस्तृतीया'[1]इति प्रमाणं भवति । अनेन अनुशासनेन आख्यातेन कर्तृत्वस्य अभिधानं यत्र न भवति तत्र कर्तृत्वस्य अभिधानार्थं तृतीयाविभक्तिः भवति इत्यर्थः अवगम्यते । यथा 'हरिः चित्रं पश्यति'इत्यत्र आख्यातप्रत्ययेन कर्तृत्वस्य अभिधानात् हरिपदोत्तरं तृतीया नागता, अपि तु उत्सर्गतः प्रथमाविभक्तिः[2] आगता । 'चित्रकर्मकदर्शनानुकूलकृत्याश्रयः चैत्रः'इति अस्माद् वाक्याद् बोधः भवति । 'रमेशेन फलानि खाद्यन्ते'इत्यत्र तु आख्यातेन कर्तत्वं न बोधितम् । अपि तु कर्मत्वम् उक्तम् अस्ति । अत्रः कर्तृत्वस्य बोधनार्थं रमेशपदोत्तरं तृतीयाविभक्तिः श्रूयते । अतः अत्र रमेशकर्तृकखादनक्रियाकर्मत्ववन्ति फलानि इति बोधः सम्भवति । अस्मिन् वाक्ये आख्यातेन कर्मत्वस्य बोधनात् अयं कर्मणिप्रयोगः भवति । अत एव अस्मिन् वाक्ये कर्मवाचकात् फलशब्दात् अनन्तरं प्रथमाविभक्तिः भवति । 'कर्मणि द्वितीया'[3]इति अनुशासनम् अपि आख्यातादिना कर्मणः अनभिधाने कर्मवाचकात् द्वितीया भवति इतीममर्थं कथयति । एवमेव करणत्वादिकारकाणामपि साक्षात्सम्बन्धेन परम्परासम्बन्धेन वा धात्वर्थक्रियायाम् अन्वयः सम्भवति।

**उपसंहारः**

इत्थं पदज्ञानेन उपस्थितानां पदार्थानां परस्परं सम्बन्धः यस्मिन् ज्ञाने भासते तस्य ज्ञानस्य शाब्दबोधः इति नाम्ना व्यवहारः भवति । तत्र पदज्ञानं नाम शब्दः करणं भवति । अतः शब्दः प्रमाणम् इति सिद्धम्।

**आकरग्रन्थाः**

1 पाणिनीयाष्टाध्यायी - २/३/१८

2 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः'इति वचनात् उत्सर्गतः प्रथमाविभक्तिः प्रयुज्यते ।

3 पाणिनीयाष्टाध्यायी - २/३/२

- पाणिनीयाष्टाध्यायी
- न्यायसिद्धान्तमुक्तावली
- व्युत्पत्तिवादः
- अमरकोषः

**********

## जातककौस्तुभः

**विद्वान् नागपतिः हेगडे**

**प्राध्यापकः, ज्यौतिषविभागः**

होरास्कन्धे प्रत्येकमपि व्यक्तेः शुभाशुभफलचिन्तनं क्रियते इति तु सुविदितमेव । ग्रहस्थितियुतिगत्यनुसारम् उक्तानां फलानाम् अनुभवे न्यूनाधिकतायाः निर्धारणे ग्रहाणां बलाबलज्ञानमपेक्षितम् । सामान्यतः फलकथनग्रन्थेषु ग्रहाणां बलाबलनिर्धारणक्रमः निरूपितः । किन्तु तत्र गणितप्रक्रिया न प्रतिपादिता । तच्च गणितप्रक्रिया जातकपद्धतिग्रन्थेषु प्रतिपादिता । ग्रहाणां बलाबलस्य स्फुटज्ञानादेव फलकथने स्फुटत्वमायातीति शास्त्रराद्धान्तः । अतः जातकपद्धतिग्रन्थानामपि अध्ययनं करणीयमेव भवति दैवज्ञेन ।

होराग्रन्थेषु जातकपद्धतिग्रन्थाः अपि अन्तर्भवन्ति । **"जातकमिति प्रसिद्धं यल्लोके तदिह कथ्यते होरा"**[1] इति कल्याणवर्मणो वचनात्स्पष्टोऽयं विषयः । सत्सु अनेकेषु पद्धतिग्रन्थेषु केशवदिवाकरदामोदरानन्तदैवज्ञादिकृतेषु केशवीयजातकपद्धतिः अन्यतमा प्रसिद्धा च । **"जातस्य बालस्येदं पूर्वजन्मान्तरार्जितसदसत्कर्मजनितशुभाशुभनिरूपकं शास्त्रं जातकमित्युच्यते । जातकस्य**

[1]सारावलि अ.-२ श्लो.सं.-४ ।

 ISSN: 2320-740X

**जातकशास्त्रस्य पद्धतिं मार्गं क्रमेण निरूपणमित्यर्थः ।"**[1] इत्यनेन जातकपद्धतिशब्दस्यार्थः स्पष्टः ।

केशवीयजातकपद्धतेः दैवज्ञदिवाकरकृतप्रौढमनोरमाव्याख्या समुपलभ्यते । किन्तु नामानुसारं प्रौढानामेव मनोहरा सा व्याख्या । परन्तु नारायणदैवज्ञेन विरचिता व्याख्या **"जातककौस्तुभः"** सुलभतया अवगम्यते । तथा ग्रन्थे विद्यमानानां रहस्यार्थानामपि प्रकाशः व्याख्यायां वर्तते इति तेनैवोक्तं यथा - **"...श्रीमत्सकलदैवज्ञोत्तमगोविन्दसूनुना नारायणदैवज्ञसार्वभौमेन विरचितः सकलरहस्यार्थप्रकाशकः जातककौस्तुभः..."**[2]। इति । तथा सोदाहरणं सरलया शैल्या प्रतिपादनात् शास्त्रे रुच्युत्पादकेयं व्याख्या ।

**जातकपद्धतिग्रन्थकर्तुः परिचयः**

**'केशवीयजातकपद्धतिः'** इत्याख्यस्य ग्रन्थस्य प्रणेता कौशिकगोत्रोत्पन्नः केशवदैवज्ञः । अयं केशवः सुप्रसिद्धस्य ग्रहलाघवकर्तृगणेशदैवज्ञस्य पिता । अस्य केशवस्य ग्रहकौतुकाख्यः करणग्रन्थो वर्तते । तस्मिन् ग्रन्थे ग्रन्थारम्भकालः १४१८ शक इति उल्लिखितं वर्तते । यदि चतुर्विंशे वयसि केशवेन ग्रन्थरचना कृता तर्हि तस्य जन्मकालः १३७८ शक इति वक्तुं शक्यते । अस्य गुरोः नाम वैद्यनाथः तथा पितुर्नाम कमलाकरः तथा वासस्थानं पश्चिमसमुद्रस्य पूर्वतीरस्थितः नन्दिग्राम इति मुहूर्त्ततत्त्वस्य पुष्पिकाद्वारा ज्ञायते । तत्रोक्तम् –

**"ज्योतिःशास्त्रमहार्णवादुदाहरन्मौहूर्त्ततत्त्वं बहु-**
**व्याप्यल्पं गुरुवैद्यनाथचरणद्वन्द्वे रतः केशवः ।**
**नन्दिग्रामगतः सुतस्तु कमलज्योतिर्विदग्र्यस्य तत्-**
**योऽधीते स विराजते सदसि चादेशी यशस्वी क्षितौ ॥"**[3] इति ।

---

[1]केशवीयजातकपध्दतेः नारायणकृतव्याख्यायां मङ्गलश्लोकविवरणे ।

[2]केशवीयजातकपध्दतेः नारायणकृतव्याख्यायां पुष्पिकायाम् ।

[3]मुहूर्ततत्त्वस्य पुष्पिका ।

अस्य ग्रन्थस्य व्याख्यायां गणेशदैवज्ञः लिलेख **“नन्दिग्रामगतः अपरान्तदेशे पश्चिमसमुद्रस्य पूर्वतीरस्थितो नन्दिग्रामः प्रसिद्धस्तत्र गतः निवासीत्यर्थः ।”**[1]

अनेन केशवेन बहवः ग्रन्थाः लिखिताः । तेषां नामानि द्रष्टुं शक्यते गणेशदैवज्ञकृतायां मुहूर्ततत्त्वव्याख्यायाम् । तत्रोक्तम् –

**“सोपायं ग्रहकौतुकं खगकृतिं तच्चालनाख्यं तिथेः**
**सिद्धिं जातकपद्धतिं सविवृतिं तत्ताजके पद्धतिम् ।**
**सिद्धान्तेऽप्युपपत्तिपाठनिचयं मौहूर्ततत्त्वाभिधं**
**कायस्थादिजधर्मपद्धतिमुखं श्रीकेशवार्योऽकरोत् ॥**

**ग्रहकौतुकटीकावर्षग्रहसिद्धितिथिसिद्धिग्रहचालनगणितदीपिकाजातकपद्धतितट्टीकाताजिकपद्धति सिद्धान्तपाठकायस्थाद्याचारपद्धतिकुण्डाष्टलक्षणादिग्रन्थजातनिबन्धानन्तरमहं केशवो मुहूर्त्ततत्त्वं वक्ष्ये ।”**[2] इति । अत्रोक्तेषु ग्रन्थेषु बहव इदानीं नोपलभ्यन्ते । केवलं ग्रहकौतुकजातकपद्धति-ताजिकपद्धतिमुहूर्ततत्त्वग्रन्थाः समुपलभ्यन्ते ।

**जातककौस्तुभव्याख्याकर्तुः परिचयः**

केशवीयजातकपद्धतिग्रन्थमधिकृत्य बहवः दैवज्ञाः व्याख्याम् अलिखन् । तेष्वन्यतमः प्रसिद्धश्च नारायणदैवज्ञाः । सत्सु बहुषु नारायणेषु गोविन्दसूनुरयं नारायणः । निसृष्टार्थदूत्यभिधा लीलावतीव्याख्या मरीच्यभिधा सिद्धान्तशिरोमणिव्याख्या पाटीसारश्चैतेषां ग्रन्थानां रचनाकारः मुनीश्वरोऽस्य नारायणस्य शिष्यः । मुनीश्वरगुरुरित्यतोऽस्य जन्मकालः मुनीश्वरजन्मतः पञ्चदशवर्षेभ्यः पूर्वमिति कल्पनेन १५१० शकः स्यादिति कल्पयितुं शक्यते । ‘चौखम्बा सुरभारती’ प्रकाशनद्वारा प्रकाशिते

[1]मुहूर्ततत्त्वव्याख्या (दैवज्ञगणेशकृतव्याख्या) ।

[2]मुहूर्ततत्त्वव्याख्या (दैवज्ञगणेशकृतव्याख्या) ।


ISSN: 2320-740X

आचार्यलोकमणिदाहलेन प्रणीते 'भारतीयज्योतिषशास्त्रस्येतिहासः' इत्यस्मिन् पुस्तके समुल्लिखितम् – **"नारायणाख्येन दैवज्ञेन १५४० शके केशवपद्धतिटीका प्रणीता "**[1] इति ।

**ग्रन्थस्य व्याख्यायाश्च रचनाकालः**

जातकपद्धतिग्रन्थरचनाकालस्य विषये स्पष्टता नास्ति । ग्रन्थे तद्विषये किमपि नोक्तं ग्रन्थकारेण। किन्तु ग्रन्थकर्तुः जन्मकालः १३७८ शकवर्ष इत्यतः सामान्यतः १४१० शकवर्षे ग्रन्थरचना अभूदिति ऊहितुं शक्यते ।

एवमेव जातककौस्तुभाख्यस्य व्याख्यानस्य रचनाकालोऽपि न ज्ञातः । ग्रन्थरचनाकालः यथा कल्पितः तथैव अत्रापि कल्पनीयं व्याख्यातुः जन्मकालात् । व्याख्यातुः नारायणस्य जन्मकालः १५१० शकवर्षः इति कल्पितः इत्यतः १५५० शकवर्षे व्याख्यायाः रचना अभवदिति ऊहा करणीया ।

[1]भारतीयज्योतिषशास्त्रस्येतिहासः पृ.सं.-२०३

# केशवीय-जातकपद्धति-ग्रन्थोक्तदिशा कालबलविचारः

**गणेश भट्टः**

**शोधच्छात्रः**

ग्रहाणां बलाबलज्ञानं विना सर्वत्र जातकोक्तफलनिर्णयः दशाक्रमादि फलनिर्णयश्च कर्तुमशक्योऽतो बलसाधनाध्याय आरभ्यते। होराशास्त्रे ग्रहबलनिर्णये षड्बलानि प्राधान्येन अवलोक्यन्ते। तद्बलं स्थानदिक्कालनिसर्गचेष्टादृष्टिभिः षड्विधम्। अत्र स्थानबलं प्राधान्येन स्वीक्रियते तथा कालबलं च। दिग्बलानन्तरं समयजं कालबलमुच्यते। तच्चतुर्धा नतोन्नतबलम्, पक्षबम्, दिनरात्रिषु त्रिभागबम्, स्वहोरा-दिन-मासाब्दबलम्। तत्रादौ नतोन्नतबलमाह

"अथो समयजं रूपं सदा स्याद्विदस्त्रिंशद्भक्त नतोन्नते शशिकुजार्कीणां परेषां बले"

अथ- अनन्तरं विदः बुधस्य सदा दिवारात्रौ रूपमेव बलं स्यात्। नतं त्रिंशत् ३० भक्तं शशिकुजार्कीणां चन्द्रभौमशनीनां बलं स्यात्। उन्नतं त्रिंशत् ३० भक्तं यल्लब्धं तदेव परेषां रविगुरुशुक्राणां रूपाद्यं बलं भवति। अथान्यत्कालबलभेदत्रयमाह,

"शुक्लेऽन्त्ये तिथिहृद्गतैष्यतिथयो वीर्यं सतां भूच्युतं
पापानां द्विगुणं विधोरिदमथाह्नस्र्यंशकेषु क्रमात्।
सौम्यार्कार्किभुवां निशः शशिसिताराणां च रूपं सदे -
ज्यस्याथाङ्घ्रिचयाद्बली किल समामासद्युहोरेश्वराः॥"

आदौ पक्षबलमुच्यते शुक्लपक्षे गततिथयः सावयवाः ग्राह्याः। अन्त्ये कृष्णपक्षे एष्यतिथयः सावयवाः ग्राह्याः। ताः पञ्चदशभिः १५ भाज्याः, लब्धं रूपादि शुभग्रहाणां चन्द्रबुधगुरुशुक्राणां पक्षबलं स्यात्। तदेव रूपोच्युतं कार्यम्। पापग्रहाणां रविभौमशनैश्चराणां बलं स्यात्। इदमत्रागतं बलं चन्द्रस्य द्विगुणं कार्यम्। चन्द्रस्य वक्ष्माणचेष्टाबलमपि पक्षबलतुल्यं भवति। कारणाच्चन्द्रस्य पक्षबलं द्विगुणं कार्यम्।

अत्र केचित् क्षीणचन्द्रं पापग्रहमिच्छन्ति तदसत् पापयुक्तः बुधः पापः। चन्द्रस्य यवनेश्वरवाक्यत्वाच्छुभत्वमेव दृश्यते । बुधस्य तु सर्वसम्मतत्वात्पापयुक्तस्तु पापः।

सारावल्यामपि शुक्लप्रतिपद्दशके मध्यबलः कीर्त्यते यवनवृद्धैः । श्रेष्ठो द्वितीयदशके स्वल्पबलश्चन्द्रमा तृतीये च । अत्र चन्द्रस्य तृतीयदशके पापत्वं ब्रूयात् नत्वल्पबलत्वम् । तथा च क्षीणचन्द्रमा पाप इत्यन्यमतम् । एवं मतभेदे पद्धतिकारैर्यवनेश्वरमतमेवाङ्गीकृतम् । यतश्चन्द्रस्य चेष्टाकेन्द्रजं बलं पक्षबलं च सममेव भवतीति पक्षवीर्यं द्विघ्नं चन्द्रस्योऽक्तम् । चन्द्रस्य शुभत्वे पक्षबलं चेष्टाबलं च सममेव भवति । पौर्णिमान्ते गततिथयः पञ्चदशभाजकोऽपि पञ्चदशेति चन्द्रस्य पक्षबलं रूपं पौर्णिमान्ते चन्द्रस्य चेष्टाकेन्द्रजं बलं रूपम् । तद्यथा चन्द्रात्सूर्ये शोधिते शेषं षड्राशिपरिमितम् । अत्र भाजको षडिति चन्द्रस्य चेष्टाबलं रुपमिति तुल्यम् । अमान्ते एष्यतिथयः पूर्णं भाजकः पञ्चदश इति । चन्द्रस्य पक्षबलं पूर्णम् अमान्ते व्यर्केन्दुरिति , चन्द्रात्सूर्ये शोधिते पूर्णं भाजकः षडिति चेष्टाबलं पूर्णमिति तुल्यमतो द्विगुणमित्युक्तम् । चन्द्रस्य पापत्वाङ्गीकारे अमान्ते फलद्वयतुल्यता नायाति । यथा अमान्ते शुभस्य पक्षबलं पूर्णम् । इदं रूपमध्ये शोधितं सत् पापग्रहाणां बलं रूपतुल्यं भवति । चन्द्रस्य पापत्वात्पक्षबलं रूपम् । अमान्ते चन्द्रस्य चेष्टाबलं पूर्णम् इति प्रत्यक्षविरोधात्कृष्णपक्षे चन्द्रस्य शुभतैवेति सिद्धम् ।

अथ वर्षादि बलमाह । अंघ्रिचयात्पादवृध्यासमामासद्युहोरेश्वराः क्रमेण बली स्यात् । अत्र जात्यैकवचनम् एतदुक्तं भवति । वर्षाधिपो यो ग्रहः स्यात्तस्यैकं पादं बलं स्यात् । यो मासाधिपस्तस्य पादद्वयं बलम् । यो दिनाधिपो वारस्तस्य पादत्रयम् । यो कालहोराधिपस्तस्य पादचतुष्टयं बलं स्यात् । वर्षेशमासेशयोरानयनार्थं श्रीकेशवदैवज्ञैः स्वटीकायां सुगमोपायः कृतः। सोत्रलिख्यते द्विष्टोद्युपिंडोरदभू १३२ युतोऽर्कयुकूखांगानि ३६० हृत्खाग्नि ३० हृतः फलेयुते वेदैः ४ गुणैः ३ स्त्रि ३ द्वि २ हतेद्रि ७ शेषितेऽर्काद्बह्मतुल्ये करणेद्भमासपौ । उदाहरणम्

 ISSN: 2320-740X

ब्रह्मतुल्यादहर्गणः १४७३०५ । द्विष्टः १४७३०५ । एकत्र रदृभू १३२ युतः १४२४३७ अपरत्रार्कः १२ युतः१४७३१७ प्रथमः खाङ्गाग्नि ३६० हृतो लब्धं ४९१० प्रथमं वेद ४ युतम् ।४१३ ।द्वितीयं गुणयुतं ४९१३। प्रथमं त्रिगुणं १२३९ द्वितीयं द्विगुणं ९८२६ उभयत्र सप्त ७ भक्ते सति शेषं ०।५। वर्षेशो रविः। मासेशो भृगुः ।

अथग्रहलाघवादहर्गणात् वर्षेशमासेशयोरानयनार्थं श्रीमद्गणेशदैवज्ञोक्तः प्रकारो लिख्यते

"द्विष्टोऽयं ग्रहलाघवद्युनिचयश्चक्राहतैः षट् शरैः ५६

षट् दस्त्रैः २६ श्चयुतः सबाणतयनः १२५ सेषुश्च ५ खाङ्गाग्निभिः ३६० ।

खाज्यांशैर्विहृतः फले गुण३ यम २ घ्नेचक्रनिघ्नाक्षखो -

येतेद्वीवियुतेनगोर्वरितकेस्तोकात्समामासपौ ॥"

अस्योदाहरणम् , ग्रहलाघवद्युनिचयः ९६ षद्विष्टः ९६ एकत्रचक्रा ६ हतैः षट् शरैः ३३६ युतः ४३२ अपरत्रचक्राहतैः षट् दस्त्रैः १५६ युतः २५२ प्रथमः सबाण १२५ तयनः ५५२ द्वितीयः सेषुः २५७ प्रथमः खांगाग्निभि ३६० र्हृतः फलं १ द्वतीयः खाज्यांशै ३० र्हृतः फलं ८ प्रथमं १ गुणघ्नं ३ द्वितीयं ८ यमघ्नं १६ प्रथमं चक्रनिघ्ना ३० युतं ३३ द्वतीयं चक्र ६ घ्नश्चन्ययुतं १६ प्रथमंद्वियुतं ३५ द्वतीयंत्रियुतं १९ उभयत्रापिसप्तभक्तेसति शेषं ०।५।

एवं पूर्वोक्तावेववर्षेशमासपौ जातौ । अथ होरेशानयनं तत्रादौ वारप्रवृत्तिमाह

" चरार्ध देशान्तरयोर्वियोग योगेत्यपानीयपलैश्वसम्यक् ।

सूर्योदयादूर्ध्वमृणेधनेद्योवारप्रवृत्तिं मुनयो वदन्ति ॥१॥

वारप्रवृत्तेर्घटिकाद्विनिघ्नाः कालाख्यहोरापतयःशराप्ताः।

दिनादिपाद्या रविशुक्रसौम्यशशाङ्कसौरेज्यकुजाः क्रमेण ॥२॥"

दिनपतेः सकाशात् गणना क्रमः , रेखातः पश्चिमयोजनानि धनानि ४ खांघ्रूनानि जातानि देशान्तर पलानि ३ चरपलानि ८४ ऋणं उभयोर्धनऋणयोरनतरं ८१ ऋणं सूर्योदयादूर्ध्वमृणे इत्युक्तत्वात्

सूर्योदयादूर्ध्वमाभिर्घटीभिः १।१२।जाता वारप्रवृत्तिः। अथेष्टकालः ५१।२८। वारप्रवृत्तिर्ऋणघटीभिः १।२१ हीनः ५०।७।अथैता वारप्रवृत्तेः सकाशात् घटिकाः ५०।७। द्विनिघ्नाः १००।१४। शराप्तागताः कालहोराः २० वर्तमाना बुधहोरा । दिनेशः प्रसिद्धः, अत्र चन्द्रः । एवं कालबलं ज्ञात्वा अन्यबलेषु संयोज्य ग्रहाणां बलाबलं चिन्त्यते । अत्र ग्रहाणां बलाबलज्ञानं किमर्थम् इति चेत् जातकस्य चिन्तनावसरे एतस्य अवश्यकता वर्तते ।

**********

## पाश्चात्त्यमनोविज्ञानिनां दृष्ट्या स्वप्नावस्थायाः स्वरूपम्

**सुदर्शनभट्टः**

**शोधछात्रः**

**लेखसारांशः** - सर्वादौ मनोविज्ञानस्य स्वरूपं कथ्यते । तदन्तरं सिग्मण्डफ्रैड् दृष्ट्या स्वप्नावस्थायाः स्वरूपं प्रदर्श्यते । ततःपरं कार्लयुङ्गमतानुसारं का नाम स्वप्नावस्था इत्यादि विचाराः तथा स्वप्नावस्थायाः प्रयोजनानि लेखेऽस्मिन्न उपस्थाप्यन्ते ।

मनोविज्ञानम् - मनोविज्ञानम् अध्यात्मदर्शनस्य अङ्गभूतमिति सर्वत्र प्रतीतिरस्ति । भारतीयानां मनोवैज्ञानिकं चिन्तनं वेदोपनिषत्सु वर्णितम् । किन्तु पाश्चात्त्याः अपि मनोविषये स्वीयचिन्तनं प्रकटयन्ति । तेषां साहित्यक्षेत्रे मनोविज्ञानमपि मुख्यं स्थानं भजते । अधुना मनोविज्ञानमिति पदम् आङ्ग्लभाषयां "psychology" नाम्ना जगतीतले प्रसिद्धम् । "psyche" "logos" इति ग्रीक्भाषापदद्वयेन "psychology" शब्दः निष्पद्यते । psyche इत्युक्ते आत्मा, मनः, एवं logos इत्युक्ते विज्ञानमित्यर्थः। आहत्य मनोविज्ञानम्, आत्मविज्ञानमिति psychology शब्दस्यार्थः । प्रथमवारं ग्रीक् देशीयः तत्त्वज्ञानी, मनःशास्त्रज्ञः अरिस्टाटल् महोदयेन psychology शब्दः प्रयुक्तः । तदनन्तरं मनोविज्ञानस्यार्थे बहवः psychology शब्दप्रयोक्तारः दृश्यन्ते ।

 ISSN: 2320-740X

मनोविज्ञानं व्याख्यातुं बहूनि वाक्यानि विद्यन्ते । यथा "चेतनात्मकं मनः[1]" इति डेकार्टे कथयति। एवं "मनोविज्ञानञ्च प्रकृतिविचारपरस्य शास्त्रस्य कोऽपि विभागः यः मानवानां चेष्टारूपं भाषारूपञ्च शिक्षितम् अशिक्षितस्य व्यवहारं परिशीलयति[2]"। इत्थं मनेविज्ञानविदः स्वीयं व्याख्यानं ददति अन्ते मनोविज्ञानं नाम व्यवहारस्य विज्ञानमिति लक्षणम् आधुनिकैः मनोविज्ञानिभिः निगदितम् ।

मनोविज्ञानक्षेत्रे बहवः कृतभूरिपरिश्रमाः विद्वांसः दृश्यन्ते । प्राचीनकालीनाः अस्माकं दर्शनप्रणेतारः आद्याः मनोविज्ञानिनः । ग्रीक्देशीयाः Plato, Socrates , Aristotle प्रभृतयः मनोविज्ञानिनाम्ना प्रथिताः विराजन्ते । Descartes, Woodworth, Sigmund Freud, Carl Jung, इत्यादयः मनोविज्ञानक्षेत्रे मूर्धन्यस्थानमलङ्कुर्वन्ति । सर्वे दार्शनिकाः मनोविज्ञानिनः इत्युक्तिरपि प्रसिद्धा । तेषां ग्रन्थेषु चेतनात्मकस्य मनसः स्वरूपं तत्र अनुभूयमानानामनुभवानाम् उल्लेखः परिदृश्यते। मनोविज्ञाने अवस्थात्रयविषयः – भारतीयाः मनोविज्ञानिनः वेदन्तादिदर्शनेषु प्रतिपादितम् अवस्थात्रयमेव समर्थयन्ति । पाश्चात्त्याः विद्वांसः तेषां प्रयोगबलेन स्वीयव्याख्यां जाग्रदाद्यवस्थाविषये यच्छन्ति । अस्मिन् पत्रे तु विशेषतः स्वप्नावस्थायाः स्वरूपं कथ्यते ।

पाश्चात्त्यमनोविज्ञानं कथयति जाग्रदवस्थायाम् अनूभूतविषयवस्तूनां संस्काराः एव स्वाप्नावस्थायाः कारणमिति । एतदंशं मनसि निधाय पाश्चात्त्यमनोविज्ञानी सिग्मण्डफ्रैड् स्वस्य स्वप्नसिद्धान्तं स्थापयामास । प्रथमतः का नाम स्वप्नावस्था इति अवदत् "सुप्तमनसि अन्तर्निहित-इच्छायाः सूक्ष्मविचाराणाम् निद्रावस्थायां दर्शनमेव स्वप्नः अथवा सुप्तमनसि अन्तर्निहित-इच्छायाः

[1] Mind is that substance which has consciousness. (शिक्षामनोविज्ञानम्)

[2] Psychology is that division of natural science which take human behaviour –the doings and sayings both learned and unlearned – pills burry (शिक्षामनोविज्ञानम्)

निद्रावस्थायाम् अनुभवपुरस्सरं समाप्तिः स्वप्नावस्था" इति । प्रत्येकं जीवजन्तोः भिन्नप्रकारकस्वप्नाः अनुभवपथे आगच्छन्ति । अतः फ्रैड् वदति स्वप्नः प्राधान्यतया त्रिविधः । निष्क्रियस्वप्नः, भ्रमात्मकस्वप्नः तथा अत्रैव अवान्तरभेदः कल्पनात्मकस्वप्नः इति । क्रमशः तेषां विवरणं प्रदर्शयामः ।
निष्क्रियस्वप्नः - प्रायः स्वप्नाः जाग्रदवस्थाधारिताः भवन्ति इति प्राच्य-पाश्चात्त्यदार्शनिकानां मतम् । तमेवांशम् आधारीकृत्य निष्क्रियस्वप्नस्याऽपि स्वरूपं प्रदर्श्यते । प्रातः काले सुप्तस्य कदाचित् अर्धनिद्रावस्था भवति । तस्याम् अवस्थायां स्वप्नः आयाति स्वाप्नपदार्थोऽपि दृश्यते । तथा पुरतः विद्यमानबाह्यवस्तूनि अपि दृश्यन्ते । सः निष्क्रियस्वप्न इति व्यवहारः । एतस्यामवस्थायाम् आगतानां स्वप्नानां निर्दिष्टोद्देश्यमेव न भवति । अतः निष्क्रियस्वप्नः इति फ्रैड् प्रयोगपुरस्सरं प्रदर्शयामास ।

भ्रमात्मकस्वप्नः - कस्यचित् स्वप्ने कदाचित् जलस्य सेचनात् शीतस्पर्शस्यानुभवः तथा अग्निस्पर्शात् पादः दग्धः इत्यनुभवः भवति स्वप्नोत्थितस्य तु शरीरे जलस्यांशः वा अग्निः वा न दृश्यते । एतादृशस्वप्नः भ्रमात्मकमिति कथ्यते । भ्रमात्मकस्वप्नविषये फ्रैड् कथयति सुप्तमनसि पूर्वाधारितसंस्कारः दृढीयान् अस्ति संस्कारस्यानुभवः कदाचित् स्वप्नरूपेणानुभूयते इति ।

कल्पनात्मकस्वप्नः- लोके प्रसिद्धव्यक्तीनां दर्शनेन तद्वत् अहमपि भवामि इति सर्वेऽपि चिन्तयन्ति । उदाहरणार्थं प्रधानमत्री, नटः, नटी इत्यादयः । कश्चित् स्वप्नावस्थायाम् एकस्मिन् दिने अहं सुप्रसिद्धः नटोऽस्मि इति चिन्तयति । उत्थाय पश्यति सः सामान्यः एव । एतादृशस्वप्नाः कल्पनात्मकस्वप्नाः इति कथ्यन्ते । सुप्तमनसि विद्यमान-इच्छापूर्तये एव स्वप्नाः आविर्भवन्ति इति फ्रैड् कथयति ।

**कार्लयुङ्ग्मतानुसारेण स्वप्नावस्था**

"स्वस्य सुप्तमनसि विद्यमानविचारविनिमयानां समग्रावधारणार्थं या निद्रायाम् अनुभूयते सा स्वप्नावस्था इति । तथा युङ्गः कथयति स्वप्नावस्थायाः बहूनि कारणानि वर्तन्ते । केवलं जाग्रदवस्थाधारितानुभवाः स्वप्नावस्थायाः कारणं नास्ति । किन्तु सुप्तमनसि विद्यमानधार्मिक-


ISSN: 2320-740X

आध्यात्मिकविषयाः अपि स्वप्नावस्थां जनयन्ति । फ्रैडस्यापेक्षया किञ्चित् अग्रे गत्वा आध्यात्मिकानूभूतयेऽपि स्वप्नाः सन्तीति वदति । एषः नाडीनां विकारतया अपि स्वप्नाः आगच्छन्ति इति अभिप्रैति ।

स्वप्रावस्थायाः प्रयोजनम् – समेषां जीवजन्तोः स्वप्नदर्शनेन विविधभावनाम् उद्दीपनं भवति । तेन मनसः तत्राऽपि अनुमस्तिष्कस्य उल्लासः भवति । सम्पूर्णनरमण्डलस्य उत्तेजकता लभ्यते । तेन जीविनः स्वस्थाः भवन्ति । अतः समेषां जीवने स्वप्नस्य स्थानं मुख्यमस्ति । स्वप्नावस्थायाः प्रयोजनविषये एतौ फ्रैड् –युङ्गौ इत्थं कथयतः" जीविनां कृते मानसिकशान्तिं प्रयच्छति " इति । इत्थं पाश्चात्त्यमनोविज्ञानिनः स्वप्नावस्थायाः स्वरूपं निर्दिशन्ति ।

परिशीलित ग्रन्थाः

१. शिक्षामनोविज्ञानम् (Educational Psychology) – K.S Venkataraghavacharya, published in 1982(Tirupati)

२. THE INTERPRETATION OFDREAMS

prof. Sigmund Freud, published in 1913 (New York)

३. MEMORIES, DREAMS, REFLECTIONS -Carl Jung, published in 1989 (Reissue) परिशीलित अन्तर्जालीयसूचि

www.psychologytoday.com

https://www.verywellmind.com

**********

# नैषधं विद्वदौषधम्

**शरण्यः पि**

**शोधच्छात्रः**

जगतः सर्ववाङ्मयेषु प्राचीनं विशालञ्च भवति संस्कृतवाङ्मयम् । वाङ्मयेऽस्मिन् वेदाः, न्यायमीमांसादिदर्शनानि, धर्मशास्त्रपुराणानि, व्याकरणज्योतिषादीनि वेदाङ्गानि च वर्वृतति। काव्यान्यपि वाङ्मयेऽस्मिन् मुख्यं स्थानं भजन्ते। तानि काव्यानि 'रामादिवद्वर्तितव्यं न रावणादिवत्'[1] इति उपदेशप्रदायकानि, आह्लादजनकान्यपि वर्तन्ते। तत् काव्यं प्रधानतया गद्यं पद्यमिति द्विविधम्। तत्र पद्यकाव्यम् अनेकविधम् । तस्मिन् 'सर्गबन्धो महाकाव्यं तत्रैको नायकः स्मृतः'[2] इति लक्षितं महाकाव्यं प्रधानम् । आहत्य पञ्चमहाकाव्यानि प्रसिद्धानि। तानि च -

कालिदासस्य महाकाव्यद्वयम् – रघुवंशं कुमारसम्भवञ्च। भारवेः किरातार्जुनीयम्। माघस्य शिशुपालवधम्। श्रीहर्षस्य नैषधीयचरितम्।

अमीषु महाकाव्येषु विदुषां काव्यास्वादयितॄणां औषधसमानं भवति नैषधीयचरितम्। 'उदिते नैषधे काव्ये क्व माघः क्व च भारविः' 'नैषधं विद्वदौषधम्' इत्यादिवचनानि नैषधकाव्यस्य माहात्म्यं कवेः श्रीहर्षस्य पाण्डित्यं च प्रकटयन्ति। द्वाविंशतिसर्गात्मके नैषधीयचरिते वस्तुवर्णनं रमणीयं वर्तते। अस्य काव्यस्य उपजीव्यन्तु महाभारतमेव। महाभारतस्य वनपर्वणि विद्यमानं नलोपाख्यानमिति प्रसङ्गं स्वीकृत्य कविः महदिदं काव्यं प्राणैषीत्। वीरसेनसुतस्य निषधाधिपतेः नलस्य, विदर्भराजकुमार्याः दमयन्त्याश्च परस्परम् आकृष्टिः, विरहिणः नलस्य दमयन्तीं प्रति हंसद्वारा सन्देशप्रेषणम्, इन्द्रादिदेवानां सहयोगेन प्रेमसाफल्यम्, नलदमयन्त्योः विवाहः, विवाहे देवतानाम्, देवानाम्, प्रसिद्धानां राज्ञाञ्च उपस्थितिः, कलेः

[1]साहित्यदर्पणम् १

[2]साहित्यदर्पणम् ६

 ISSN: 2320-740X

क्रोधः, कलिना सह युद्धे नलस्य पराजयः, नलस्य वनवासः, कार्कोटविशात् विरूपितेन नलेन अयोध्यायां सारथिरूपेण वासः, दमयन्त्या नलप्राप्त्यर्थं मिथ्यास्वयंवरघोषः, नलप्राप्तिः, तयोः समागमः इति महाभारतस्य कथामाश्रित्य स्ववर्णनकौशलेन नैषधीयचरितं श्रीहर्षेण व्यरचि ।

एतादृशे महति काव्ये न केवलं रसालङ्कारध्वन्यादिकाव्यशास्त्रीयविषया अपि तु न्यायवेदान्तादिशास्त्रान्तराणामपि विचाराः उपलभ्यन्ते । काव्यानां बृहत्त्रयीषु किरातार्जुनीयशिशुपालवधाभ्यां सह इदमपि काव्यम् अन्यतमम् ।

**निपीय यस्य क्षितिरक्षिणः कथां तथाद्रियन्ते न बुधाः सुधामपि।**

**नलः सितच्छत्रितकीर्तिमण्डलः स राशिरासीन्महतां महोज्वलः॥**[1]

नलस्य यशः सर्वासु दिक्षु व्यापृतमासीत् । तादृशस्य नलस्य कथामृतपानेन तुष्टाः विद्वांसः देवताश्च अमृतं न आद्रियन्ते स्म इति नलस्य चरित्ररूपं वस्तुनिर्देशात्मकं मङ्गलं कविना आचरितम्। एतादृशेऽस्मिन् नैषधे काव्ये अर्थगौरवम्, पदलालित्यम्, रसप्रवाहः एव न, भारतीयसंस्कृतेः आत्मरूपिणां धर्मार्थकाममोक्षाणां प्राप्तिमार्गः अपि विद्यते। नैषधीयचरितस्य पञ्चाशदधिकाः व्याख्याग्रन्थाः उपलभ्यन्ते। तेषु प्रसिद्धटीकाकारेण विद्याधरेण नैषधस्य वैशिष्ट्यमेवम् उपवर्णितम् –

**अष्टौ व्याकरणानि तर्कनिवहः साहित्यसारो नयो**

**वेदार्थावगतिः पुराणपठितिर्यस्यान्यशास्त्राण्यपि।**

**नित्यं स्युः स्फुरितार्थदीपविहिताज्ञानान्धकाराण्यसौ**

**व्याख्यातुं प्रभवत्यमुं सुविषमं सर्गं सुधीः कोविदः॥**

[1]नैषधीयचरितम् १.१

अनेन परमदार्शनिकस्य विद्याविशारदस्य श्रीहर्षस्य पाण्डित्यं ज्ञायते । नैषधीयचरितमहाकाव्यं शृङ्गाररससरिदेव वर्तते चेदपि, अस्मिन् दर्शनानि, व्याकरणम्, ज्यौतिषम्, अश्वशास्त्रम्, पाकशास्त्रमित्यादीनि बहुविधानि औषधानि कविना निवेशितानि ।

त्रयोदशसर्गे एकस्मिन् पद्ये पञ्चनलीवर्णनं कविना कृतम्। यत्र इन्द्रः, अग्निः, यमः, वरुणश्च चतस्रः देवताः नलस्य रूपं धृत्वा दमयन्तीपरिणयार्थं समागच्छन् । सर्वेषां राज्ञां परिचयानन्तरं देव्या सरस्वत्या एतासां देवतानां मध्ये विद्यमानस्य निजनलस्य, छद्मवेषधारिणां चतसृणां देवतानां च वर्णनं एकेनैव पद्येन श्लेषेण काक्वा च क्रियते ।

**देवः पतिर्विदुषि नैष धराजगत्या निर्णीयते न किमु न व्रियते भवत्या।**

**नायं नलः खलु तवातिमहानलाभो यद्येनमुज्झसि वरः कतरः परस्ते॥**[1]

अत्र इन्द्रपरके अर्थे धरा अजा इति पदच्छेदे कृते इन्द्रस्य देवत्वं ज्ञायते । अथवा धरान् अजति इति धराजः इन्द्रः इत्यपि व्याख्यानं शक्यते । एतादृशः स्वर्गाधिपतिः एव भवत्या वरणीयः, एतं विहाय अन्यः कः भवत्याः पतिः ? इति सरस्वत्याः वचसि इन्द्रपरकः अर्थः ।

धरो वाहनम् अजः छागः इति धराजः स गतिशरणम् इति द्वितीयः अर्थः अग्निपरकः । अयं मेषवाहनः, आग्नेयदिशः अधिपतिः, नायं नलः अपि तु अनलः अतः किमर्थं एनं न इच्छति इति अग्निपरकः अर्थः श्लोकात् बोध्यते ।

अजति शृङ्गाभ्यां खुरैर्वा तेन या गतिर्गमनं तयोपलक्षितः, अर्थात् शृङ्गाभ्यां पर्वतं भञ्जयति महिषः तादृशः महिषवाहनः यमः संसारस्यास्य रक्षकः, दक्षिणदिशः स्वामी, नायं नलः किन्तु भवत्याः प्राणानां लाभः अस्य परिणयेन सिध्यति, किमर्थम् एनं यमं भवति न वरयति ? इति यमपरकः अर्थः।

---

[1]नैषधीयचरितम् १३.३४


ISSN: 2320-740X

वरुणपरकार्थे धराजं पृथिव्यां जायन्ते इति धराजानि स्थावरजङ्गमभूतानि तेषां गतिर्जीवनोपायः जलं तस्य पतिः वरुणः । अर्थात् पृथिव्यां विद्यमानानां स्थावरजङ्गमरूपिणां जीविनां कृते जीवनोपायः जलं, तस्य जलस्य अधिपतिः वरुणः । विष्णोः भक्तः अयं वरुणः, अग्नेः अपेक्षयापि प्रभावी, अतः एतं कथं भवति त्यजति?

हे विदुषि, त्वं किमर्थम् एतां देवतां नल इति न मन्यसे ? किमर्थं न वरयसि? अयं तृणविशेषः न, महान् पण्डितः। एतं नाङ्गीकरोषि चेत् तव महती हानिर्जायते। अन्यः कः तव पतिः भवति? अतः एषः एव तव पतिः।

**उदयति स्म तदद्भुतमालिभिर्धरणिभृद्भुवि तत्र विमृश्य यत्।**

**अनुमितोऽपि न बाष्पनिरीक्षणाद्व्यभिचचार न तापकरो नलः॥**[1]

न्यायस्यानुमानप्रमाणे **'यत्र यत्र धूमः तत्र तत्र वह्निः'** इति व्याप्तिः, अस्याधारेण दमयन्त्याः सख्यः तस्याः अश्रुपातेन 'यत्र यत्र बाष्पं तत्र तत्र अनलः' अर्थात् नलस्याभावः इति अनुमानेन जानन्ति। एवमत्र दमयन्त्याः अश्रुपातं ज्ञात्वा तस्याः मनसः भावनां गृह्णन्ति सख्यः इति कारणेन तासां विद्वत्ता ध्वन्यते।

प्रथमसर्गे च –

**मनोरथेन स्वपितीकृतं नलं निशि क्व सा न स्वपती स्म पश्यति।**

**अदृष्टमप्यर्थमदृष्टवैभवात् करोति सुप्तिर्जनदर्शनातिथिम्॥**[2]

निद्राणा सा भैमी वाञ्छया स्वप्राणेश्वरीकृतं नलं क्व निशि न पश्यति स्म? सर्वासु निशासु दृष्टवत्येव। सुप्तिः कदाचित् अदृष्टमप्यर्थं धर्माधर्मसामर्थ्याज्जनदर्शनातिथिं करोति। 'अदृष्टं दृश्यते स्वप्नेऽननुभूतं

[1]नैषधीयचरितम् ४.१८

[2]नैषधीयचरितम् १.३०

कदापि न' इत्यादिस्वप्नसम्बद्धाः विचाराः अपि तत्र तत्र कविना निवेशिताः। एवं नैषधीयचरितकाव्यं विद्वज्जनहृदि सर्वदा विराजते इति काव्याध्ययनेन स्पष्टं जायते।

**********

## लक्षणाविचारः

**शशांक भट्टः**

**आचार्यद्वितीयवर्षम्**

शाब्दबोधकारणीभूतः पदपदार्थयोः सम्बन्धः वृत्तिरित्युच्यते । सा च वृत्तिः शक्तिलक्षणाभेदेन द्विविधा । तत्र शक्तिर्नाम अस्मात्पदादयमर्थो बोद्धव्यः इति ईश्वरसङ्केतः । यथा घटपदात् घटो बोद्धव्यः इतीश्वरेच्छया घटपदस्य घटे शक्तिः । एवं शक्यसम्बन्धो लक्षणा[1] । यथा गङ्गायां घोषः इत्यत्र गङ्गापदशक्यार्थः प्रवाहः तत्सम्बन्धः संयोगादिः तदाश्रयः तीरमिति गङ्गापदस्य तीरे लक्षणा ।

सा च लक्षणा जहत्स्वार्थाऽजहत्स्वार्थभेदेन द्विविधा । जहत् स्वार्थं यया सा इति व्युत्पत्त्या जहत्स्वार्थलक्षणा उच्यते । यज्जन्यबोधे शक्यार्थः न विषयः किन्तु लक्ष्यार्थः एव विषयः तत्र जहल्लक्षणा[2]। यथा गङ्गायां घोषः इत्यत्र तीरवृत्तिर्घोषः इति हि बोधो जायते । तस्य च शक्यार्थप्रवाहाविषयकलक्ष्यार्थतीरमात्रविषयकत्वात् ।

एवं न जहत् स्वार्थं यया इति व्युत्पत्त्या अजहत्स्वार्थलक्षणोच्यते । यज्जन्यबोधे शक्यार्थलक्ष्यार्थोभयविषयकत्वं तत्र अजहत्स्वार्थलक्षणा । यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य

---

[1] लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः ॥ (कारिकावली श्लो.सं-८२)

[2] यत्र वाच्यार्थस्यान्वयाभावः तत्र जहती । (तर्कसङ्ग्रहदीपिका-शब्दखण्डः)

 ISSN: 2320-740X

काकबिडालादिसाधारणदध्युपघातकत्वावच्छिन्ने लक्षणा । तज्जन्यबोधस्य च शक्यार्थकाकलक्ष्यार्थबिडालोभयविषयकत्वात् ।

अत्रायं विशेषः - गङ्गायां घोषः इत्यत्र गङ्गापदं गङ्गातीरत्वेन गङ्गातीरे लाक्षणिकमिति लक्षणाग्रहः गङ्गातीरवृत्तिर्घोषः इति च शाब्दबोधः यदा तदानीं तत्रापि शक्यार्थलक्ष्यार्थोभयविषयकत्वात् अजहत्स्वार्थलक्षणैव । यदा च तीरत्वेन मात्रेण लक्षणाग्रहः, तीरवृत्तिर्घोषः इति च शाब्दबोधः तदा जहत्स्वार्थैव । एवमेव यष्टीः प्रवेशय इत्यादावपि यष्टिधरत्वेन शाब्दबोधे एव अजहत्स्वार्थत्वं, केवलपुरुषत्वेन बोधे तु जहत्स्वार्थत्वमेव ।

तत्र शक्यसम्बन्धः किंरूपः इति जिज्ञासायां शक्यसम्बन्धः अविनाभावः इति प्राञ्चः । यष्टीः प्रवेशय इत्यादौ यष्टिधरयष्ट्योः एवं सर्वत्रैव लक्ष्यार्थशक्यार्थयोरविनाभावस्य सत्त्वादविनाभाव एव सम्बन्धः इति ।

तत्र विप्रतिपद्यन्ते नव्याः – घटमुच्चारय इत्यादौ घटपदार्थकलशस्य घटपदस्य च कालतः देशतो वा अविनाभावस्य असत्त्वादविनाभावः न सम्बन्धः किन्तु साक्षात्परम्परान्यतरसम्बन्ध एव इति । गङ्गायां घोषः इत्यादौ संयोगादिः साक्षात्सम्बन्ध एव, द्विरेफमानय इत्यादौ द्विरेफपदस्य स्ववाच्यरेफद्वयघटितपदवाच्यत्वरूपपरम्परासम्बन्धेन भ्रमरः अर्थः ।

लक्षणायां कल्पनीयायां बीजं किमिति शङ्कायां तत्र तात्पर्यानुपपत्तिरेव लक्षणाबीजं नत्वन्वयानुपपत्तिरिति । गङ्गायां घोषः इत्यत्र यद्यपि गङ्गारूपप्रवाहस्य घोषाधारत्वान्वयानुपपत्त्या लक्षणाबीजत्वसम्भवेऽपि यष्टीः प्रवेशयेत्याद्यजहत्स्वार्थायां शक्यस्यान्वयायोग्यत्वाभावात् लक्षणानुपपत्तिः । तात्पर्यानुपपत्तिस्तु तत्रापि वर्तते । लक्ष्ये तात्पर्यं विना लक्षणायाः अनुदयात् इति सम्प्रदायः ।

तत्राप्यन्वयानुपपत्त्यैव निर्वाहे तात्पर्यानुपपत्तेः लक्षणाबीजत्वकल्पनमयुक्तमिति मणिकाराः । तेषामयमाशयः - गङ्गायां घोषः इत्यादौ पूर्वोक्तन्यायेन लक्ष्ये तात्पर्यग्रहात्पूर्वमेव मुख्यस्यान्वयायोग्यत्वज्ञानेन लक्षणाकल्पनं सम्भवति । यष्टीः प्रवेशयेत्याद्यजहत्स्वार्थायां तावत् प्रकरणादिना प्रवेशयेत्यस्य भोक्तृकर्मकप्रवेशनपरत्वं स्वीकृत्य अत्रापि अन्वयानुपपत्तेरेव सुवचत्वात् तात्पर्यानुपपत्तेः तद्बीजकल्पनं न साध्विति नव्यानामाशयः ।

अतद्भावेऽपि तदुपचारः[1] इत्यनेन न्यायसूत्रकाराः अपि शक्यसम्बन्धस्य लक्षणात्वं प्रतिपादयन्ति । तच्छब्दावाच्यो योऽर्थः तस्मिन् तच्छब्दस्य प्रयोगे निमित्तानि दश प्रोक्तानि सूत्रे । सामीप्यं पुरस्कृत्य गङ्गाशब्देन तीरमभिधीयत इति सूत्रे गङ्गापदप्रयोगादवगम्यते । तत्राहुः भाष्यकाराः – 'गङ्गायां गावश्चरन्ति' इति गङ्गापदात् देशोऽभिधीयते सन्निकृष्टः इति ।

**********

## आख्यातवाच्या भावना

**महेश चिदम्बर भट्टः**

**आचार्यद्वितीयवर्षम्**

भगवान् जैमिनिमहर्षिः वेदबोधितेष्टानिष्टसाधनताकरूपधर्माधर्मयोर्निणयात्मकज्ञानार्थं "द्वादशलक्षणीत्यपरनामधेयं मीमांसाशास्त्र" प्रणिनाय । ते अपौरुषेयात्मकं वेदं विधिमन्त्रनामधेयनिषेधार्थवादभेदाच्चतुर्धा विभाजयामासुः । तत्र मानान्तरेण अप्राप्तस्य प्रापणात्मकः विधिः उत्पत्तिविनियोगप्रयोगाधिकारभेदाच्चतुर्विधः । तत्राङ्गप्रधानसम्बन्धबोधकविनियोगविधेः

[1] सहचरणस्थानतादर्थ्यवृत्तमानधारणाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाकटान्नपुरुशेष्वतद्भावेऽपि तदुपचारः । ( न्या सू २-२-६३)


ISSN: 2320-740X

सहकारिभूतानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि षट्प्रमाणानि सन्ति । एतत्सहकृतेनानेन विनियोगविधिना परोद्देश्यप्रवृत्तकृतिकारकत्वरूपाङ्गत्त्वं ज्ञाप्यते । तत्र लिङ्गादिप्रमाणान्तरानपेक्षः शब्दः एव श्रुतिरित्युच्यते । सा विधात्र्यभिधात्रीविनियोक्त्रीभेदात्त्रेधा विभक्ता वर्तते । तत्र विधात्री लिङ्गाद्यात्मिका । अभिदात्री व्रीह्यादिश्रुतिः । यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री । सा च विभक्तिरूपा, समानाभिधानरूपा, एकपदरूपा चेति त्रिविधा । तत्र "व्रीहिभिर्यजेत" इत्यादौ तृतीयादिविभक्तिरूपश्रुत्या व्रीह्यादीनां यागाद्यङ्गत्त्वमवगम्यते । "पशुना यजेत" इत्यत्र 'यजेत' इत्याख्याताभिहितसङ्ख्यायाः भावनाङ्गत्त्वं समानाभिधानश्रुत्या । एकपदश्रुत्या च तस्याः कर्तृपरिच्छेदद्वारा यागाङ्गत्त्वमिति ज्ञायते ।

अत्र आख्यातेन कर्ता नोच्यते चेदपि आख्याताभिहिता भावना कर्तारं विना अनुपपन्ना इत्यतः सा एव कर्तारमाक्षिपति । अतः आक्षेपलभ्यः कर्ता इति । एवं कर्तुः उपस्थितत्त्वात् कर्तृपरिच्छेदद्वारैव सङ्ख्यायाः भावनायामन्वयः ।

अत्र शङ्का :- आख्यातश्रवणे यथा भावनाप्रतीतिः भवति तथा कर्तुरपि प्रतीतेः आख्यातवाच्यः एव कर्ता भवतु । अत्र यदि भावनयैव आक्षेपेण कर्तृलाभात् पुनः आख्यातवाच्यत्वं कर्तुः मास्तु इति उच्यते तर्हि कर्त्रा एव भावनाक्षेपः भवतु, आख्यातवाच्यत्वं भावनायाः मास्तु इत्यपि वक्तुं शक्यते । अतः आख्यातवाच्या भावना इति वक्तुं न शक्यते इति ।

किं च भावनायाः कर्त्रा सहैव सम्बन्धः इति नास्ति । कारकान्तरेणापि अस्ति सम्बन्धः । कारकाणां क्रियान्वयनियमात् । अतः भावना कर्तारमेव झटित्याक्षिपतीति नास्ति । परार्थानामङ्गानां

परस्परमङ्गाङ्गीभावः नास्तीति वारणानां सर्वयज्ञार्थत्त्वाधिकरणोक्तन्यायेन[1] कर्तुः भावनया एव सम्बन्धः न कारकान्तरेण इति ज्ञायते। अतः भावना कर्तारं झटित्याक्षिपेत्। तस्मादाक्षेपलभ्या भावना इत्येव युज्यते। किं च भावनाक्षेपसंभवात् कर्तुः वाच्यत्वं मास्तु इति न वक्तुं शक्यते । यद्येवं यस्यार्थस्यान्यथालाभः भवति तस्यार्थस्य वाच्यत्वं मास्तु इत्युच्येत तर्हि यथा कर्तुः आक्षेपेण लाभः तथा कारकान्तराणामपि आक्षेपसम्भवात् विभक्तीनां तत्तत्कारकवाचकत्वं न स्यात् ।अतः अपि आख्यातवाच्यः कर्ता इति । यदि आख्यातवाच्यः कर्ता न स्यात् आक्षेपलभ्यः स्यात् तर्हि " न हि शाब्दमशाब्देनान्वेति " इति न्यायेन सङ्ख्यायाः कर्तरि अन्वयः न स्यात् । यदि शाब्दमशाब्देनान्वेति इति नियमः न स्वीक्रियेत तर्हि ऊहादिकं लुप्येत । आग्नेययागे "अग्नये जुष्टं निर्वपामि" इति अग्निदेवताविशिष्टनिर्वापप्रकारकत्त्वरूपनिर्वापमन्त्रः अस्ति । विकृतौ सौर्ययागे तदीयसूर्यदेवताविशिष्टनिर्वापप्रकारत्वरूपनिर्वापमन्त्रः अपेक्षितः । अतः "सूर्याय जुष्टं निर्वपामि" इत्येवमूहः कर्तव्यः । परन्त्विदानीं सूर्यायेति पदाभावेपि सः अर्थः मनस्यस्ति चेदपि कार्यं सिद्ध्यतीति भवति । अतः 'जुष्टं निर्वपामि' इत्येतावान्मन्त्रप्रयोगः आपद्यते । अतः "अग्नये" इत्यादि पदस्य स्थाने "सूर्याय" इत्यादिपदप्रक्षेपरूपः ऊहः नियमेन न स्यात् । अतः ऊहादेः लोपः प्रसज्येतेति ।

अपि च देवदत्तः पचतीत्यत्राख्यातप्रत्ययः कर्तारं बोधयति चेत् देवदत्तपदमपि कर्तारं बोधयतीति द्वयोः एकार्थबोधकत्त्वात्सामानाधिकरण्यमुपपद्यते । यद्याख्यातस्य भावनाबोधकत्वं तदा कर्तृवाचकत्वाभावात् सामानाधिकरण्यं न स्यात् । एवमेव " लः कर्मणि च भावे चाकर्मकेभ्यः" इति पाणिनिसूत्रेण लकारः कर्मणि कर्तरि च सकर्मकेभ्यः धातुभ्यः, भावे कर्तरि च अकर्मकेभ्यः धातुभ्यः भवतीत्युच्यते । एवं कर्तुः सकर्मकधातुप्रत्ययः, अकर्मकधातुप्रत्ययः इत्युभाभ्यामपि वाच्यत्वं स्पष्टं प्रतीयते । तस्मात् कर्तुः अवाच्यत्त्वे सूत्रविरोधोऽपि भवति इति ।

[1]जैमिनीयन्यायमालाविस्तरः 03.01.12


ISSN: 2320-740X

किं च कर्तुः आख्यातवाच्यत्वाभावे देवदत्तेन पचतीति प्रयोगापत्तिः । यतः " अनभिहिते[1]" इत्यधिकारे "कर्तृकरणयोस्तृतीया" इति सूत्रमस्ति । अतः अनभिहितयोः कर्तृकरणयोः तृतीया भवतीति सूत्रार्थः भवति । अत्र आख्यातेन कर्ता नाभिधीयते इत्यतः देवदत्तेन इति तृतीया स्यात् । कर्ता वाच्यः चेत् तेनैव सूत्रेण प्रथमाविभक्तिः भवति । अत्र प्रश्नः - कर्ता नाभिहितः चेत् तृतीया स्यात् । कर्ता आख्यातेनोक्तः चेत् बोधनीयः अर्थः अतिरिक्तः कोऽपि नास्ति । तस्मात्प्रथमाविभक्तिः कथं स्यादिति । तत्रोच्यते :- कर्तुः उक्तत्वेऽपि प्रथमा भवत्येव । "अभिहितकारकवाचिनी प्रथमा" इति वार्त्तिकानुसारेण अभिहितकारकमेवाभिधत्ते प्रथमा विभक्तिः इति । अथवा यत्र कर्ता उक्तः तत्र पुनः कोऽपि अभिधेयः इति नास्ति तस्मात्तत्र प्रातिपदिकार्थमात्रे प्रथमा इति ।

अत्र सन्देहः :- प्रातिपदिकार्थः प्रातिपदिकेनैवोक्तः, इदानीं प्रथमया पुनः उच्यते चेत्तस्याः वैय्यर्थ्यापत्तिः खलु इति । तत्रोच्यते :- केवलप्रातिपदिकाल्लिङ्गसङ्ख्याप्रतीत्यभावात् लिङ्गसङ्ख्याबोधार्थं प्रथमा अपेक्षिता भवति । अपि च "न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः" इति नियमात्प्रयोगसाधुत्वायापि प्रथमा आवश्यकी भवति । एवञ्च आख्यातेन अनभिहिते कर्तरि तृतीयाप्रयोगापत्तिः अपि भवति । तस्मादाख्यातवाच्यः कर्ता इति चेत्तत्रोच्यते :-

"अनन्यलभ्यश्शब्दार्थः" इति न्यायेन कर्तुः अन्यलभ्यत्वसम्भवात् आख्यातार्थः कर्ता इति वक्तुं न शक्यते । शब्दार्थः प्रकारान्तरेण लक्षणाक्षेपादिना न लभ्यते इत्यतः एव गङ्गापदस्य शक्यार्थः न तीरम् । एवमेव समभिव्याहारात्वाक्यार्थस्योपस्थितिर्भवतीत्यत एव वाक्यार्थे शक्तिः न स्वीक्रियते । एवमत्रापि कर्तुः भावनाक्षेपसम्भवात्कर्ता न आख्यातवाच्यः । आख्यातवाच्या तु भावना एव इति । अत्रैव लाघवमपि अस्ति । यदि कर्ता आख्यातवाच्यः स्यात्तदा वाच्यतावच्छेदकं गुरुभूतं भवति । यतः कृतिमान्हि कर्ता । कृतिमत्त्वञ्च कृतिरेव । अतः कृतिः वाच्यतावच्छेदिका भवति । कृतयस्तु अनेकाः भवन्तीत्यतः

[1]अष्टाध्यायी 2.3.1

अनेकवाच्यतावच्छेदककल्पना कर्तव्या भवति । यदा आख्यातवाच्या भावना इति वदामः तदा भावना नाम कृतिः इत्यतः कृतित्त्वं वाच्यतावच्छेदकं भवति ।कृतित्वं त्वेका जातिः । एवं लाघवादाख्यातवाच्या कृतिरिति।

कारकाणां क्रियान्वयनियमाद्यथा कर्ता भावनया सम्बद्धः तथा कारकान्तरेणापि । अतः भावना कर्तारमेवाक्षिपतीति वक्तुं न शक्यते इत्युक्तमासीत्, परन्तु यथा नियमेन कर्तुः भावनया सह सम्बन्धः अस्ति तथा कारकान्तरेण नास्ति । यतः तिष्ठतीत्यादिषु यथा कर्तुरुत्थिताकाङ्क्षा भवति न तथा कारकान्तराणामस्ति । अतः सा कर्तारमाक्षिपति । एवं भावनया कर्तुरेवाक्षेपात्तृतीयादिविभक्तयः अपेक्षिताः । नो चेत्कारकान्तरबोधो न स्यात् । अतः तृतीयादिविभक्तीनां करणादिवाचकत्वं न स्यादिति दोषः नास्ति । आख्यातश्रवणं विनापि तृतीयादिविभक्तिश्रवणेन करणत्वादिकारकबोधः भवति । अतः कारकान्तरबोधार्थं विभक्तयः अपेक्षिताः, कर्तृविषये तु तथा नास्ति । तस्मात्कर्तुः आक्षेपलभ्यत्वे न दोषः।

न हि शाब्दमशाब्देनान्वेति इति नियमेन शाब्दसङ्ख्यायाः अशाब्दकर्तर्यन्वयः न भवतीत्यतः कर्तुर्वाच्यत्त्वं स्वीकर्तव्यमिति यदुक्तं तन्न । यतः शाब्दशब्दस्य वृत्या उपस्थापितः इत्यर्थः । अत्र आख्यातस्य कर्तरि लक्षणां स्वीकुर्मः । अतः शाब्दस्यैकत्वस्य शाब्देन वृत्योपस्थापितेन कर्त्रा अन्वयः संभवतीत्यतः न नियमविरोधः । एवं कर्तरि लक्षणाङ्गीकाराद्देवदत्तः पचतीत्यत्र सामानाधिकरण्यमुपपद्यते। अत्र प्रश्नः :- इदं सामानाधिकरण्यं तु लाक्षणिकम् । शक्यार्थयोरेकत्वे सति यत्सामानाधिकरण्यं तत् मुख्यं सामानाधिकरण्यम् । कर्ता आख्यातवाच्यः इति स्वीक्रियते चेत् मुख्यसामानाधिकरण्यमेव संभवति खलु अतः किमर्थं लाक्षणिकं सामानाधिकरण्यं स्वीक्रियते इति । तत्रोच्यते :- कर्तुर्लक्षणयालाभसंभवात्तत्र शक्तिकल्पनम् नोचितमनन्यलभश्शब्दार्थः इति न्यायात् । तस्मादत्र मुख्यसामानाधिकरण्यासम्भवाल्लाक्षणिकं सामानाधिकरण्यं स्वीक्रियते । अन्यथा सिंहो देवदत्तः इत्यत्र मुख्यसामानाधिकरण्यापत्तिः । तत्र सिंहशब्दस्य सिंहसदृशशौर्यादिगुणविशिष्टः इत्येतादृशार्थं गौण्या


ISSN: 2320-740X

वृत्या स्वीकृत्य गौणसामानाधिकरण्यं स्वीकृतम् । यद्यत्रापि मुख्यसामानाधिकरण्यं वक्तव्यं तर्हि सिंहशब्दस्य देवदत्ते शक्त्यङ्गीकारापत्तिः । अतः तत्परिहाराय गौणसामानाधिकरण्यं स्वीकृतम् । तद्वदत्रापि लाक्षणिकसामानाधिकरण्यं स्वीक्रियते ।

किं च पूर्वपक्षिणां मतेऽपि लाक्षणिकसामानाधिकरण्यमेव भवति । यतः आख्यातवाच्यं कर्तृत्वं भवति आकृत्यधिकरणन्यायेन । देवदत्तपदं देवदत्तव्यक्तिं ब्रूते । नाम कर्तारं ब्रूते न तु कर्तृत्वं । अतः कर्तृत्ववति आख्यातस्य लक्षणा स्वीकर्तव्या एव भवतीत्यतः मतद्वयेऽपि लाक्षणिकसामानाधिकरण्यं समानम् इति ।

किं च कर्तुः आख्यातवाच्यत्वाभावे लः कर्तरीति स्मृतिविरोधः इति यदुक्तं तन्न । यतः इयं स्मृतिः कर्तुः आख्यातवाच्यत्वे न प्रमाणम् । यतः लः कर्मणि च भावे चाकर्मकेभ्यः[1] इति सूत्रस्य द्व्येकयोर्द्विवचनैकवचने, बहुषु बहुवचनम् इत्येताभ्याम् एकवाक्यत्वं भवति । अतः कर्तुः एकत्वे एकवचनात्मक लकारः द्वित्वे द्विवचनात्मक लकारः बहुत्वे बहुवचनात्मक लकारः भवतीत्यत्र प्रमाणं भवतीदं सूत्रम् । अतः न सूत्रविरोधः ।

यदि कर्ता आख्यातवाच्यः न स्यात् तदा "कर्तृकरणयोः तृतीया" [2] इति सूत्रेण अनभिहितत्वात् कर्तुः तृतीया स्यात् इति यः आक्षेपः उक्तः, तस्य परिहारः उच्यते – कर्तुरनभिधाने तृतीया भवतीत्युक्तम् । सा कर्तुः प्रतिपत्त्यर्थं वा तद्गतसंख्याबोधार्थं वा इति विकल्पः । भावनया एव कर्तुः आक्षेपात् अथवा लक्षणया बोधः भवतीत्यतः कर्तृबोधार्थं तृतीया नापेक्षिता । संख्या तु आख्यातेन उच्यते इत्यतः तद्बोधार्थमपि तृतीयापेक्षा नास्ति । अतः अत्र तृतीया न प्राप्नोति एवं च आख्यातेन कर्तुरनभिधाने दोषः कोऽपि नास्ति । अतः आक्षेपलभ्यः कर्ता आख्यातवाच्या भावना इति ।

---

[1]अष्टाध्ययी 3.4.69

[2]अष्टाध्ययी 2.3.18

सन्दर्भग्रन्थसूची –

1. मीमांसान्यायप्रकाशः ।
2. जैमिनीयन्यायमालाविस्तरः ।
3. सिद्धान्तकौमुदी ।
4. अष्टाध्यायी ।

**********

## अभेदपदार्थविचारः

**सी. हेच्. दुर्गा**

**आचार्यद्वितीयवर्षम्**

नीलं घटम् आनय इत्यादौ नीलपदोत्तरविभक्त्यर्थस्य कर्मत्वादेः कुत्र अन्वयः इति प्रश्ने सति न कुत्रापि इत्युच्यते । विभक्तिपदं साधुत्वार्थमेव प्रयुज्यते इत्येकः पक्षः | विशेषणविभक्तेरर्थः अभेदः इति अपरः पक्षः । ये तावत् विशेषणविभक्तेरर्थः अभेदः इति वदन्ति, ते अभेदप्रकारतावादिनः । तेषां मते को नाम असौ अभेदः इति विचारः क्रियते ।

- प्रथमः कल्पः - भेदसामान्याभावः अभेदः इति । एवं सति, नीलो घटः इत्यत्र घटे पटप्रतियोगिकभेदस्य सत्त्वात् भेदसामान्याभावः घटे भवतीति वक्तुं न शक्यते ।
- द्वितीयः कल्पः – भेदप्रतियोगिकः अभावः अभेदः इति । तथा सति नीलं जलमिति वाक्यस्य प्रामाण्यापत्तिः । नीलं जलम् इत्यत्र नीलपदोत्तरविभक्त्यर्थः भेदप्रतियोगिकाभावः, नीलभेदप्रतियोगिकाभावः - नीलभेदः घटत्वम् उभयं नास्ति इति प्रतीतिसाक्षिकाभावः । स च अभावः जले अबाधितः । अबाधितार्थबोधकत्वात् तस्य वाक्यस्य प्रामाण्यापत्तिः ।
- तृतीयः कल्पः – नीलभेदत्वावच्छिन्नाभावः विशेषणविभक्तेरर्थः । यदि एवमुच्यते , तर्हि नीलं

 ISSN: 2320-740X

घटमित्यत्र नीलपदात् नीलस्योपस्थितिः, अम्विभक्तितः नीलभेदत्वावच्छिन्नाभावस्य उपस्थितिः, तस्य घटपदात् उपस्थिते घटपदार्थे अन्वयः । नीलत्वस्य उपस्थितिः विशेषणविभक्तितः एव अस्तीत्यतः नीलपदार्थस्य वैय्यर्थ्यमायाति, तस्य अनन्वयप्रसङ्गः ।

- चतुर्थः कल्पः – भेदप्रतियोगिकाभावः एव विशेषणविभक्तेरर्थः किन्तु नीलपदसमभिव्याहारात् नीलभेदत्वावच्छिन्नाभावः लभ्यते इति । तथा सति नीलो घटः इत्यत्र नीलपदार्थस्य नीलत्वावच्छिन्नप्रतियोगिकत्वसम्बन्धेन विभक्त्यर्थैकदेशे भेदे अन्वयः । तस्य च भेदस्य नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावे अन्वयः । अयं च सम्बन्धः पदार्थ-पदार्थतावच्छेदकयोः सम्बन्धः । स च वृत्तिभास्यः एव भवति, न तु आकाङ्क्षाभास्यः । तेन पदार्थयोः संसर्गः आकाङ्क्षाभास्यः इति आदौ प्रतिज्ञातस्य भङ्गः ।
- पञ्चमः कल्पः – भेदः अभावश्च विशेषणविभक्तेरर्थः । नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भेदरूपपदार्थस्य अभावपदार्थे अन्वयः वक्तुं शक्यते । अयं च पदार्थयोः सम्बन्धः इत्यतः न पूर्वोक्तदोषः इति । परन्तु एवं सति स्थलद्वये शाब्दबोधानुपपत्तिः, एकत्र च अप्रामाणिकवाक्यस्य प्रामाण्यापत्तिर्भवति । यथा प्रमेयो घटः इत्यत्र प्रमेयपदार्थस्य प्रमेयत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भेदे अन्वयः वक्तव्यः । प्रमेयभेदः लभ्यते । तस्य च भेदत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावे अन्वयः चेत् प्रमेयभेदाभावः लभ्यते इति वक्तव्यम् । किन्तु लोके सर्वस्यापि प्रमेयत्वात् प्रमेयभेद एव अप्रसिद्धः । तेन अत्र शाब्दबोधानुपपत्तिः ।

एवञ्च लघुधर्मसमनियतगुरुधर्मस्य अभावप्रतियोगितावच्छेदकत्वं नास्ति इति नियमः । कम्बुग्रीवादिमान् घटः इति वाक्यम् । कम्बुग्रीवादिमत्व-घटत्वयोः समनियतत्वात् कम्बुग्रीवादिमत्वं प्रतियोगितावच्छेदकं न भवति । अर्थात् तदवच्छिन्नप्रतियोगिता नास्ति। यदि भेदः अभावश्च विशेषणविभक्तेरर्थः इत्युच्यते , तर्हि कम्बुग्रीवादिमतः

ISSN: 2320-740X

कम्बुग्रीवादिमत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भेदे अन्वयः वक्तव्यः । स च न सम्भवति इत्यतः शाब्दबोधानुपपत्तिः ।

अपि च नीलादिपदघटितनीलपटपरस्य "नीलो घटः" इति वाक्यस्य प्रामाण्यापत्तिः । नीलो घटः इत्यत्र नीलपदार्थः नीलत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भेदे अन्वेति , तेन नीलभेदः लब्धः । स च भेदः भेदत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावे अन्वेति तेन नीलभेदाभावः लभ्यते । घटस्यापि नीलत्वात् तत्र नीलभेदाभावस्य अन्वयः अबाधितः इति अबाधितार्थबोधकत्वात् अस्य वाक्यस्य प्रामाण्यापत्तिः ।

- षष्ठः कल्पः – विशेषणतावच्छेदकीभूतनीलत्वं प्रमेयत्वादिकमेव विशेषणविभक्त्यर्थः इति । किन्तु एवं सति नीलो घटः इत्यत्र नीलपदार्थस्य सुविभक्त्यर्थे विशेषणतावच्छेदकीभूतनीलत्वे अन्वयः वक्तव्यः भवति आधेयतासम्बन्धेन । किन्तु तदा नियमविरोधो भवति । "यथा हि तद्विशिष्टे अधिकरणे तदधिकरणतया तदन्वयः अनुभवविरुद्धः, तद्वत् तद्धर्मे आधेयतया तद्धर्मवतः अन्वयोऽपि" इति नियमः । तेन यथा ग्रामं गच्छति चैत्रः इत्यत्र आख्यातार्थकृतेः आश्रयतासम्बन्धेन तद्धर्मावच्छिन्ने – कृतित्वावच्छिन्ने अन्वयो अनुभवविरुद्धः (अपि तु अन्यधर्मावच्छिन्ने चैत्रे अन्वयः), तद्वत् प्रकृतेऽपि विभक्त्यर्थे नीलत्वे प्रकृत्यर्थस्य नीलस्य आधेयतया अन्वयः न भवति । अत एव ग्रामं गच्छति इत्यर्थे कर्म गच्छति इति वाक्यस्य न प्रामाण्यम् । कर्म गच्छतीत्यत्र कर्मपदोत्तरद्वितीयाविभक्त्यर्थे कर्मत्वे प्रकृत्यर्थस्य कर्मणः न आधेयतया अन्वयः । संसर्गतामते तावत् अयं दोषः नास्ति । नीलस्य घटे स्ववृत्तिनीलत्वसम्बन्धेन अन्वये न कापि क्षतिः । एतेषां मते नीलपटपरस्य नीलो घटः इति वाक्यस्यापि प्रामाण्यं वार्यते । नीलपदार्थः नीलपटः, तस्य स्ववृत्तिनीलत्वसम्बन्धेन अर्थात् नीलपटवृत्तिनीलत्वसम्बन्धेन नीलघटे अन्वयः वक्तव्यः, स च बाधितः एव । बाधितार्थबोधकत्वात् न तस्य वाक्यस्य प्रामाण्यापत्तिः ।


ISSN: 2320-740X

तत्तद्व्यक्तित्वावच्छिन्नभेदाभावः एव अभेदः विशेषणविभक्तेरर्थः इति समाधानान्तरम् । एवमपि दोषः वारयितुं शक्यते । नीलपटपर-नीलो घटः इति स्थले तद्व्यक्तिः इत्यनेन नीलपटव्यक्तिः ग्राह्या, नीलपटव्यक्तित्वावच्छिन्नभेदस्यैव नीलघटे सत्त्वात् नीलपटव्यक्तित्वावच्छिन्नभेदाभावः नीलघटे नास्ति इति न दोषः । परन्तु अस्मिन् कल्पे अपूर्वव्यक्तीनां शाब्दबोधानुपपत्तिः । वाक्यप्रयोगानन्तरं पदात् पदार्थोपस्थितिः अपेक्षिता । अपूर्वव्यक्तिबोधतात्पर्येण यत्र नीलः घटः इति वाक्यं प्रयुक्तं, तत्र तद्व्यक्तित्वस्य अपूर्वघटवृत्तितया शक्तिः पूर्वं न गृहीता । तथा च तत्र शक्तेरगृहीतत्वात् अपूर्वघटव्यक्तेः उपस्थितिरपि न भवति । तस्मात् शाब्दबोधानुपपत्तिः इति दोषः । संसर्गतामते अयं दोषः नास्ति । संसर्गज्ञानस्य शाब्दबोधात् पूर्वं नियमेन आवश्यकता नास्ति । तदभावेऽपि शाब्दबोधस्तु जायते ।

- पूर्वपक्षः – तर्हि भेदः अभावः एव विशेषणविभक्तेरर्थः । भेदे नीलादिपदार्थस्य अन्वयः तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भवति । अत्रापि तद्व्यक्तित्वं संसर्गकुक्षौ निवेशितमिति अपूर्वव्यक्तीनां शाब्दबोधानुपपत्तिः वार्यते ।
- सिद्धान्तः – एवमपि वक्तुं न शक्यते । नीलपदार्थस्य भेदे नीलत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन एव अन्वयः वक्तव्यः अन्यथा विशिष्टबुद्धित्वानुपपत्तिः। "विशेषणतावच्छेदकत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावे प्रतियोगिनः अन्वयः वक्तव्यः" इति नियमः अस्ति । तेन अत्र नीलत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनैव नीलस्य भेदे अन्वयः वक्तव्यः, न तु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन । अतः अस्मिन् कल्पे पूर्वोक्तदोषाः अनुवर्तन्ते ।

अतः अन्तिमः कल्पः उच्यते – अभेदस्तादात्म्यम् इति । तच्च स्ववृत्त्यसाधारणो धर्मः । असाधारण्यञ्च एकमात्रवृत्तित्वम् । तच्च स्वसमानाधिकरण-स्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं

यत् तदन्यत्वम् । स्वं – एतद्घटो न इति प्रतीतिसाक्षिकः एतद्घटभेदः, तदधिकरणं – तद्घटः, तद्वृत्तित्वं – घटत्वे, स्वं - एतद्घटो न इति प्रतीतिसाक्षिकः एतद्घटभेदः, तत्प्रतियोगि – एतद्घटः, तद्वृत्तित्वं घटत्वे इति उक्तोभयसंबन्धेन भेदविशिष्टं भवति घटत्वं, तदन्यत्वं तद्व्यक्तित्वे इति समन्वयः। अत्र विशेषणविभक्त्यर्थः तद्व्यक्तित्वं, तस्य तद्व्यक्तित्वेन रूपेण भानं नास्ति अपि तु भेदविशिष्टान्यत्वेन रूपेण । तथा च नीलो घटः इत्यत्र शाब्दबोधः - नीलवृत्तिभेदविशिष्टान्यत्ववान् घटः इति ।

**********

## विधेयविषये उच्चारणार्थकवर्णानाम् इत्संज्ञयैव निवृत्तिः

**नरसिंहगणेशभट्टः**

**आचार्यद्वितीयवर्षम्**

पाणिनीये शब्दतन्त्रे अनुबन्धनिमित्तककार्याणां स्वरादीनां सिद्ध्यर्थं धात्वागमप्रत्ययादेशादिषु आचार्यः पाणिनिः अनुबन्धान् आसञ्जयति। यथा तव्यत् प्रत्यये तकारस्य स्वरितसिद्धिः प्रयोजनम्। अनङादेशे 'ङिच्च' इति शास्त्रप्रवृत्तिः ङकरस्य इत्संज्ञायां प्रयोजनम्। टुक् आगमे कित्वस्य अन्तावयवत्त्वं प्रयोजनम्। एध वृद्धौ इति धातौ अकारस्य इत्संज्ञायाम् अनुदात्तेत्त्वात् 'अनुदात्तङित आत्मनेपदमि'ति शास्त्रस्य प्रवृत्तिः प्रयोजनम्॥ एतेषां समेषां हि हलन्त्यम्, उपदेशेऽजनुनासिक इत् इत्यादिना तत्तच्छास्त्रेण इत्संज्ञायां तस्य लोपः प्रवर्तते। यत्र तु इत्संज्ञायां सत्यां पूर्वोक्तसदृशानि न प्रयोजनानि तत्र उच्चरितस्य वैयर्थ्यात् लोपाभावेन फलाभावात् इत्संज्ञाऽपि न भवति, यथा काम्यच्प्रत्यये। परन्तु क्वचित् आचार्यः पाणिनिः केवलोच्चारणार्थकानामपि वर्णानाम् आदेशप्रत्ययादिषु नियोजनं करोति - यथा दिव औत् इत्यादि। इत्संज्ञाप्रयुक्तकार्याणां कित्टित्पित्तिदादिस्थलेषु सिद्ध्यर्थं तस्याः आवश्यकत्वेऽपि अत्र केवलमुच्चारणार्थकस्थले तत्प्रवृत्तेः अनपेक्षितत्त्वात् तेषामित्संज्ञां विनैव निवृत्तिः भवति उत सर्वत्रेव इत्संज्ञयैव लोपः इति विचारः अत्र प्रस्तूयते-

 ISSN: 2320-740X

तत्र तावत् नान्तरीयकतया वह्न्यानयनादौ सौकर्यार्थं परिगृहीतानां पात्रादीनां स्वयं निवृत्तिर्यथा, तथा **दिव औत् ,ऋत उत्** इत्यादिसूत्रेषु विधेयकोटिप्रविष्टानाम् औत्, उत् इत्यादौ विद्यमानानां तकाराणाम्, **ईदूदेद्द्विवचनं प्रगृह्यम्** इत्यादिसूत्रेषु उद्देश्यकोटिप्रविष्टानाम् ईत्, ऊत् इत्यादौ विद्यमानानां तकाराणाञ्च शास्त्रव्यापारं विनैव अकस्मादेव निवृत्तिरिति दीक्षितसिद्धान्तः। तेषां सिद्धान्तानुरोधेन अनुवादस्थल इव विधेयेऽपि स्वत एवोच्चारणार्थकवर्णानां निवृत्त्या इत्त्वस्य अप्रवृत्तौ न किञ्चिद्बाधकमित्यतो मास्त्वित्संज्ञा इत्याक्षेपस्तु न, वक्ष्यमाणप्रमाणविरोधात् । तथा हि -

**दिव औत्** इत्यादिसूत्रस्थ औदित्यादिविधायकपदे श्रूयमाणस्य तकारस्य लक्ष्ये ' इत्यादौ अश्रूयमाणत्वात् कल्प्यते यदस्त्यत्र तकारलोपः। स च न सम्भवतीत्संज्ञामन्तरा ।

**अद्ड्डुतरादिभ्यः पञ्चभ्यः** इति सूत्रस्थभाष्यविरोधादुच्चारणार्थकवर्णानां स्वयन्निवृत्तिरप्रामाणिकी, तत्र हि भाष्ये **अद्ड्** इत्यस्य डित्करणाभावे कतर अद् इत्यत्र टिलोपाभावात् **प्रथमयोः पूर्वसवर्णः** इति पूर्वसवर्णदीर्घमाशङ्क्य तदनु अनुनासिकोपधत्त्वादिति समाहितं न त्वुच्चारणार्थत्त्वादिति, प्रकृतस्थले च अकारस्य उच्चारणसौकर्यसम्पादनातिरिक्तं प्रयोजनं नास्ति, अतः तस्य उच्चारणार्थत्वान्निवृत्तिरिति समाधिः प्रदेयः, न त्वनुनासिकोपधत्त्वादिति, तथाऽकथनेन उच्चरणार्थानामपि विधेये इत्संज्ञालोपाभ्यामेव निवृत्तिरिति ध्वन्यते।

ननु हयवरडित्यादावुत्तरवर्णस्य पूर्ववर्णोच्चारणे सहायसम्पादकत्वं दृष्टं न तु पूर्ववर्णस्य उत्तरवर्णोच्चारणे, इत्यत एव भाष्यकारैः न त्वुच्चारणार्थत्त्वात् स्वयन्निवृत्तिरिति नोक्तमिति यदि ब्रूषे तर्हि तत्रापि इत्संज्ञाप्रवृत्तौ प्रमाणं गृहाण-

इत्संज्ञालोपातिरिक्तं फलं यदि न सम्भवति तर्ह्युच्चारणसामर्थ्यादित्संज्ञा न भवतीति वक्तुं शक्यते । यथा**काम्यच्चेत्यदि**सूत्रघटकककारादीनाम् इतरव्यावृत्तिरूपमपि फलं नास्तीत्यत एव नेत्संज्ञा।

येषूच्चारणार्थेषु वर्णेषु तु इत्संज्ञालोपातिरिक्तम् उच्चारणसौकर्यरूपफलान्तरं सम्भवति तेषु विशेषणार्थेषु स्वौजसादिसूत्रघटकजकारादिष्विव इत्संज्ञाविधायकशास्त्रं प्रवर्तत एव।

अनुबन्धानां विषये वैयाकरणानान्निकायेऽस्ति पक्षद्वयम्। 'अनेकान्ता अनुबन्धाः एकान्ताश्चे'ति तत्रैकान्ता अनुबन्धाश्चेति सिद्धान्तभूतः पक्षः। तस्मिंश्च पक्षे **दिव औत्** इत्यनेन विधीयमानस्य औतः अनेकाल्त्वात् **अनेकाल्शित्सर्वस्य** इति सर्वादेशत्त्वमापादितं भाष्ये, उच्चारणार्थानां स्वतो निवर्तकत्त्वे अनेकाल्त्वप्रतिपादनमसम्भवि।

**तित्स्वरितमिति** भाष्यमपि मानम् - तकार इत् यस्य सः तित्, यत् तित् तत् स्वरितसंज्ञम्भवतीति सामान्यातोऽर्थावधारिते प्रत्ययाप्रत्ययसाधारणस्य सर्वस्यापि तित्त्वस्य स्वरितत्त्वम्प्राप्नोति तथा सति **द्युभ्यामित्यादावपि** स्वरितत्त्वं स्यात्, तद्वारणाय वार्तिककृता वार्तिकमारब्धं **तिति प्रत्ययग्रहणं कर्तव्यमिति**। यद्युच्चारणार्थकवर्णानां शास्त्रव्यापारं विनैव निवृत्तिस्तर्हि स्वरितत्त्वशङ्कोत्थानमेवासङ्गतम्। किञ्चाऽऽदेशेषु स्वरवारणाय **तिति प्रत्ययग्रहणं कर्तव्यमिति** वार्तिकारम्भात् तत्र च तित्त्वाभावादेव स्वराप्रवृत्तौ वार्तिकारम्भः व्यर्थ एव स्यात्, तस्मात् सिद्ध्यत्युच्चारणार्थानामपि इत्संज्ञालोपाभ्यामपहार इति। एभिः प्रमाणैर्विधेयघटकोच्चारणार्थहलाम् इत्संज्ञालोपाभ्यामेव निवृत्तिः न तु स्वतः। यथा विधेयघटकोच्चारणार्थहलाम् इत्संज्ञालोपाभ्यान्निवृत्तिः तथैव विधेयघटकोच्चारणार्थाचामपि।

**वेरपृक्तस्येति भाष्यमत्र मानम्** - सूत्रघटकापृक्तग्रहणाभावे **दर्वि**रित्यत्र लोपमाशङ्क्य अनुनासिकपरस्य [अनुनासिकः परः=अवयवः यस्य इत्यर्थेन ] वेर्ग्रहणेन समाहितम्। तादृशश्च क्विबादिरेव भवति। यदि तत्रापि इकारस्योच्चारणार्थत्वात् शास्त्रव्यापरं विनैव निवृत्तिः तर्हि **वेरपृक्तस्येति** सूत्रस्य निर्विषयत्त्वप्रसङ्गः।


ISSN: 2320-740X

**इदितो नुम् धातोः** इति सूत्रस्थभाष्ये किमर्थं धातुग्रहणं ? तदभावे हि 'अभैत्सीत्' (भिद् धातोः कर्तरि लुङि प्रथमैकवचने रूपम्) इत्यत्र **च्लेः सिच्** इत्यनेन सिजादेशे , सिचः इकारस्य इत्संज्ञायां नुमः प्रसक्तिरुद्भाविता। पश्चात् सजादेशकरणेन समाहितम्। अत्र सिच इकारस्य उच्चारणातिरिक्तं प्रयोजनम् नास्ति। उच्चारणार्थक - अचां स्वतो निवर्तकत्वे इत्त्वाभावादेव नुमः प्राप्रिविरहे सजादेशकरणपूर्वकसमाधानं सुतराम् अयुक्तं स्यात्। अनेनापि स्पष्टं यदुच्चारणार्थहलामिव अचामपि इत्संज्ञालोपाभ्यामेव निवृत्तिः इति। एवञ्च उच्चारणार्थकानां वर्णानामपि इत्संज्ञयैव निवृत्तिः इति सिद्धान्तः॥

**********

## कालतुलना ।

**मुक्ता एस्.**

**शास्त्रिप्रथमवर्षम्**

न्यायवैशेषिकदर्शने समानतन्त्रे। वैशेषिकाणां सप्तपदार्थाः न्यायसम्मताः सन्ति। तेषु पदार्थेषु अन्यतमः पदार्थः 'द्रव्यम्'। द्रव्याणि नवविधानि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभेदात्। तत्र अन्यतमः कालः।

विभुद्रव्येषु अन्यतम एषः कालः रूपाभावाद् अप्रत्यक्षे सति अनुमानेन साधयन्ति नैयायिकाः। तदनुमानं यथा –

'इदानीं घट' इत्याकारकसूर्यपरिस्पन्दप्रकारकघटविशेष्यकप्रतीतिः परम्परासम्बन्धविषया साक्षात्सम्बन्धाभावे सति विशिष्टबुद्धित्वाद् इति।

'इदानीं घट' इत्यादिव्यवहारो भवति। भास्करः यदा वियति अस्मिन् स्थाने अस्ति तदैव घटः अत्र अस्तीति तात्पर्येण एषः प्रयोगः। 'असम्बन्धिनोः पदार्थयोः एकस्यामेव प्रतीतौ नैव भानम्' इति नियमेन

तयोः घट-तपनचलनयोः कश्चन सम्बन्धो वक्तव्यः। स न संयोगः तयोः असंयुक्तत्वस्य प्रत्यक्षसिद्धत्वात्। न तु समवायः तयोः अनयुतसिद्धत्वात्। इति तत्र कश्चन परम्परासम्बन्ध एव वाच्यः। स च सम्बन्धः स्वसमवायिसंयोगिसंयुक्तत्वसम्बन्धः। स्वं चलनम्। स्वसमवायी सूर्यः। तत्संयोगी कालः। तत्संयुक्तो घटः। इति कालघटितः परम्परासम्बन्धः। तेन सम्बन्धघटकतया कालसिद्धिः। एषः कालः जगताम् आश्रयः। कालवाचकशब्दोत्तरमपि सप्तम्याः आश्रयतार्थिकायाःप्रयोगात् तस्य आश्रयत्वं प्रत्यक्षसिद्धम्।

तथैव कालिकपरत्वापरत्वं प्रति असमवायिकारणत्वेनापि कालः सिद्ध्यति। कालिकपरत्वापरत्वे प्रति समवायिकारणं परत्वापरत्वाश्रयो द्रव्यम्। असमवायिकारणं किमिति प्रश्ने सति तत्समवायिकारणस्थः कश्चन संयोगो वक्तव्यः। इति तत्र अनुमानम् - 'कालिकपरत्वाऽपरत्वे असमवायिकारणसंयोगजन्ये भावत्वे सति कार्यत्वाद्, घटवदिति'। प्रत्येकस्य भावकार्यस्य असमवायिकारणं संयोगः। यथा घटस्य असमवायिकारणं कपालद्वयसंयोगः, ज्ञानस्य असमवायिकारणं आत्ममनस्संयोग इति। स संयोगो न पृथिवीपिण्डसंयोगः, पृथिव्यसंयुक्तपदार्थेऽपि कालिकपरत्वादेरुत्पादात् तत्र व्यभिचारात्। नापि आकाशदिगादिना विभुना संयोगो लाघवात्। तद्यथा, अनन्तजीवात्ममनोभिः संयोगे आकाशदिशोरेकेन संयोगे वा विनिगमनाभावः। अतः एकस्यैव अतिरिक्तस्य कालस्य कल्पने लाघवम्। इति कालिकपरत्वापरत्वासमवायिकारणसंयोगाश्रयतया कालसिद्धिः। अनेनैव कालिकपरत्वापरत्वबुद्धिं प्रति निमित्तकारणं भवति कालः। एवमेव जन्यसामान्यं प्रति कारणमस्ति कालः।

यदि एक एव कालस्तर्हि तत्र क्षणदिनमासादिभेदाः कथमिति प्रश्ने सति कथयन्ति – सौविध्यार्थम् उपाधिभेदात् काले क्षणादिविभाजनम्। तद्यथा, एकां चतुःक्षणवृत्तिनीं क्रियाम् आधारीकृत्य स्वजन्यविभागप्रागभावावच्छिन्नकर्मविशिष्टः क्षणः, पूर्वसंयोगावच्छिन्नविभागविशिष्टः क्षणः, पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावविशिष्टः क्षणः, उत्तरसंयोगावच्छिन्नकर्मविशिष्टः क्षण इति।


ISSN: 2320-740X

तत्तत्क्षणकूटैः लवनिमेषदिनादिव्यवहारः प्रवर्तते। निमेषो नाम नेत्रपुटयोर्द्रागेव संयोजनवियोजनम्। अनेन परिमाणेन मापितेन कालेन इतोऽग्रे संवत्सरपर्यन्तं कालैककानि मापितानि सन्ति। तद्यथा-

| **परिमाणम्** | **कालैककम्** | **अद्ययावता कालेन तुलना** |
|---|---|---|
| - | क्षणः | 66,650 micsec |
| द्वौ क्षणौ | लवः | 133 milsec 3 micsec |
| त्रयो लवाः | निमेषः | 40 cs |
| त्रयो निमेषाः | कक्षः | 1 sec 20 cs |
| त्रयः कक्षाः | काष्ठा | 3 sec 60 cs |
| त्रिंशत्काष्ठाः | कला | 1 min 48 sec |
| त्रिंशत्कलाः | मुहूर्तः | 54 min |
| त्रिंशन्मुहूर्ताः | दिवसः | 27 h |
| पञ्चदशदिवसाः | पक्षः | 16 d 21 h |
| द्वौ पक्षौ | मासः | 33 d 18 h |
| द्वौ मासौ | ऋतुः | 67 d 12 h |
| त्रय ऋतवः | अयनम् | 202 d 12 h |
| द्वे अयने | संवत्सरः | 405 d |

| | |
|---|---|
| सत्ययुगम् | २,८०,१७,००,००० संवत्सराः |
| त्रेतायुगम् | ९,६०,१२,००,००० संवत्सराः |
| द्वापारयुगम् | ६,४०,०८,००,००० संवत्सराः |

| | |
|---|---|
| कलियुगम् | ३,२०,०४,००,००० संवत्सराः |

| | | |
|---|---|---|
| एकसप्ततिः चतुर्युगम् | मन्वन्तरम् | १५,६२,२९,११,००,००० संवत्सराः |
| चतुर्दश मन्वन्तराणि | एकः कल्पः | ब्रह्मणः एको दिवसः |
| शत कल्पवर्षाणि | ४०,५०० कल्पाः | महाविष्णोरेको दिवसः |

महाविष्णोः शतवर्षाणां समाप्त्यनन्तरम् एतत्सर्वं भावकार्यात्मकं जगत् प्रलीयते। स महाप्रलय इत्युच्यते। एवं न्यायमते गणितस्य कालस्य अद्य यावता कालेन तौलनिकः अभ्यासः।

**सहायकग्रन्थसूची-**

न्यायसिद्धान्तमुक्तावलीसमेतं किरणावलीव्याख्यानम्।

**********

## श्रीमद्भागवतस्य परिचयः

**मनस्विनी.के.जि**

**आचार्यद्वितीयवर्षम्**

अष्टादशपुराणेषु श्रीमद्भागवतं परं वर्तते। यत्र प्रतिपदं कृष्णो गीयते। श्रीमद्भागवतं च वेदव्यासैः रचितं वर्तते। युगपर्यये द्वापरयुगे समनुप्राप्ते सति पराशरात् सत्यवत्यां हरेः अंशेन योगी व्यासः जातः। अतीतानागतवित् सः व्यासः दुर्निरीक्ष्यवेगेन कालेन हेतुना भुवि प्रतियुगं प्राप्तं युगधर्माणां सङ्करं, शरीरादीनां कालकृतं शक्तिह्रासम् अपि च स्व स्व वर्णाश्रमानुगुण धर्मानुष्ठानविषयकत्वरारहितान्, बुद्धिरहितान्, दुर्भगान् जनान् वीक्ष्य सर्वेषां जीवानाम् उपकाराय एकम् अविभक्तं वेदं चतुर्धा विभक्तवान्। एवमेव शूद्राणां, स्त्रीणां, द्विजबन्धूनां च वेदः श्रवणगोचरः न भवति इत्यतः महाभारतमपि विरचितवान्।

 ISSN: 2320-740X

एवं सर्वात्मना अपि लोकश्रेयसे प्रवृत्तस्य व्यासस्य हृदयं संतुष्टं नासीत्। सः व्यासः एकदा सरस्वती नद्याः तीरे उपविश्य एवं चिन्तितवान् ' एतावत् कृत्वा अपि मम मनसि सन्तोषः किमर्थं नानुभूयते?' इति। तस्मिन् समये देवर्षिः नारदः व्यासस्य आश्रमं प्रविष्टवान्। तदा तं नारदं व्यासः तस्य अपरितोषस्य कारणं पृच्छति। तदा नारदः वदति यत् त्वया यथा धर्मादयः अनुकीर्तिताः तथा भगवतः वासुदेवस्य महिमा नानुवर्णितः। अतः अखिलबन्धमुक्तये भगवतः लीलाः चित्तैकाग्र्येण अनुसर इति। एवं देवर्षि नारदेन संचोदितः भगवान् व्यासः इदं भागवतं रचितवान्।

अस्य पुराणस्य मङ्गलश्लोकः एवं वर्तते -

**जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्।**
**तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः।**
**तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा।**
**धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि॥** इति॥

श्लोकेस्मिन् परमसत्यस्य परब्रह्मणः अष्टौ विशेषणानि निरूपितानि। ते यथा -

1. **जन्माद्यस्य यतः तं परं धीमहि -** धीमहि इति आर्षप्रयोगः। ध्यायेम इत्यर्थः। अस्य जगतः जन्मस्तिथिभङ्गः यस्मात् भवति तं परं- परमात्मानं धीमहि।
2. **अन्वयात् इतरतश्च अर्थेषु (यः अस्ति) तं परं धीमहि -** अन्वयात् इतरः नाम व्यतिरेकः। अन्वयात् व्यतिरेकाच्च कार्येषु (अर्थेषु) यः अस्ति तं परं धीमहि। यथा घटादिषु अनुस्यूततया मृत्भवति एवमेव घटस्य नाशानन्तरमपि अवशिष्यते मृत् इत्यनेन सिद्धं यत् मृत् घटे अन्वयेन व्यतिरेकेण च अस्ति इति। तद्वत् यावन्तः जीवराशयः जगति सन्ति तेषु सर्वेष्वपि भवति परमात्मा- चैतन्यं। तेषां जीवराशीनां नाशे सत्यपि भवति परमात्मा - चैतन्यं। अतः अन्वयात् इतरतश्च अर्थेषु यः वर्तते तं परं धीमहि।
3. **यः अभिज्ञः तं परं धीमहि -** यः सर्वज्ञः वर्तते परमात्मा तं परं धीमहि।

4. **यः स्वराट् तं परं धीमहि** - स्वेनैव राजते इति स्वराट्। अर्थात् अयं परमात्मा दीपवत् स्वयं प्रकाशते अन्यान् वस्तूनपि प्रकाशयति। अतः सः स्वराट्। तादृशं परमात्मानं धीमहि।

5. **तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः तं परं धीमहि** - यस्मिन् ब्रह्मणि नाम वेदे विद्वांसः अपि मोहं प्राप्नुवन्ति अर्थात् इदमित्थम् इति निर्णेतुं न शक्नुवन्ति, तद्वेदं यः परमेश्वरः आदिकवये चतुर्मुखाय ब्रह्मणे हृदा मनसा प्रकाशितवान् तं परं धीमहि।

6. **तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गः मृषा / अमृषा तं परं धीमहि** - तेजो वारि मृदां विनिमयः - अन्यस्मिन् अन्यावभासः यथा मृषा - मिथ्या तद्वत् परमात्मनि सत्वरजस्तमसां परिणामभूतः सृष्टिः भूत-इन्द्रिय-देवतात्मकसृष्टिः मृषा – मिथ्या । एतेन **"ब्रह्मसत्यं जगन्मिथ्या"** इति सिद्धन्तः उपस्थापितः भवति । अधिष्ठानं सत्यम् आरोपितं वस्तु मिथ्या इति । अर्थात् मृगतृष्णिकायाम् अधिष्ठानं भवति तेजः तत्र आरोपितं जलं यथा मिथ्या भवति तद्वत् अत्र अधिष्ठानं भवति परमात्मा । तस्मिन् परमात्मनि प्रतीयते प्रपञ्चः। अत्र **अमृषा** इत्यपि पाठभेदः वर्तते। तदा तेजोवारिमृदां विनिमयः यथा अमृषा – सत्यम् इव भाति तद्वत् परमात्मनि त्रिगुणात्मकः सृष्टिः अमृषा इव भाति। नाम मृगतृष्णिकायां वारिबुद्धिः सत्यम् इति यथा भाति तद्वत् परमात्मनि त्रिसर्गः सृष्टिः अमृषा इव भाति तं परं धीमहि।

7. **धाम्ना स्वेन सदा निरस्तकुहकं तं परं धीमहि –** स्वेन धाम्ना अर्थात् स्वीयेन तेजसा निरस्तकुहकं नाम दूरिकृतं कपटम् अर्थात् यः परमात्मा स्वीयेन तेजसा सर्वमपि कपटं विनाशयति तं परं धीमहि।

8. **सत्यं परं धीमहि –** असतः सत्ताप्रदत्वात् सत्यः परमात्मा। नाम अयं प्रपञ्चः यद्यपि असत् तथापि सदिव भाति। तादृशम् असदपि सदिव भासयति परमात्मा। अतः सः परमार्थ सत्यः। तादृशं परमात्मानं धीमहि।

**तात्पर्यम्** - यस्य कारणात् एतस्य जगतः सृष्टिः , स्थितिः तथा प्रलयः भवति, यः सर्वेषु सद्रूपेषु पदार्थेषु अनुगतः अस्ति तथा असत् पदार्थेषु पृथक् अस्ति, जडः नास्ति , चेतनः अस्ति , परतन्त्रः


ISSN: 2320-740X

नास्ति , स्वयं प्रकाशः अस्ति, यः वेदार्थं ब्रह्मणे मनसा प्रकाशितवान्, यस्य संबन्धेन महान्तः विद्वांसः अपि मोहिताः भवन्ति, यत्र एतत् मिथ्याभूतः त्रिगुणात्मकः प्रपञ्चः सत्य इव भाति, एवमेव यः स्वीयेन तेजसा सर्वमपि कपटं नाशयति, तथैव परमार्थसत्यरूपश्च यः भवति तादृशं परमात्मानं वयं ध्यायेम।

**श्रीमद्भागवतस्य विषयवस्तु-** श्रीमद्भागवते महापुराणे समग्ररूपेण 18000 श्लोकाः विद्यन्ते। अतः अस्य नाम **"अष्टादशसाहस्री संहिता"** इति। अत्र द्वादशस्कन्धाः, 335 अध्यायाश्च सन्ति। तदुक्तम्-

**ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः।**

**पञ्चत्रिंशोत्तराध्यायस्त्रिशतीयुक्त ईश्वरी॥** इति॥

एवमत्र प्रथमे स्कन्धे 19, द्वितीये 10, तृतीये 33, चतुर्थे 31, पञ्चमे 26, षष्टे 19, सप्तमे 15, अष्टमे 24, नवमे 24, दशमस्कन्धस्य पूर्वार्धे 49, दशमस्कन्धस्य उत्तरार्धे 41, एकादशे 31, द्वादशे च 13 अध्यायाः क्रमशः सन्ति।एतेषु

**प्रथमे स्कन्धे** सूतस्य शौनकादिभिः ऋषीणां च समागमो नैमिषारण्यं प्रति भवति। ततः भगवद्वर्णनम्, अवतारकथनप्रसङ्गः, भगवच्चरित्रं, व्यासपाण्डवानां चरित्रं, परीक्षिताख्यानम्, अश्वत्थामदण्डवर्णनं, कुन्ती स्तवः, युधिष्ठिराय भीष्मेन धर्मोपदेशः, भीष्मस्य कृष्णस्तुतिः, भीष्ममुक्तिः, कृष्णस्य द्वारिकागमनं, कृष्णतिरोधानम्, युधिष्ठिरादीनां स्वर्गारोहणम्, परीक्षितकृतकलिनिग्रहः, परीक्षितस्य शापः, गङ्गातटे निवासः, तस्य समीपे शुकदेवस्य आगमनम् इत्यादयो विषयाः क्रमशः प्राप्यन्ते। **द्वितीयस्कन्धे** महापुरुषसंस्थानम्, विष्णुधारणकथा, ब्रह्मनारदसंवादः, परीक्षितशुकसंवादः, अवतारचरित्रं, पुराणलक्षणं, सृष्टिकारणम् इत्यादिविषयाः लभ्यन्ते। **तृतीयस्कन्धे** विदुरोद्धवसंवादः, उद्धवेन श्रीकृष्णस्य बाल्यलीलावर्णनं, द्वारिकावर्णनं, कंससंहारः, विदुरमैत्रेयसमागमः, साङ्ख्ययोगः इत्येतेषां विषयाणां प्रस्तावः अस्ति। **चतुर्थस्कन्धे** सतीचरित्रं, ध्रुवचरित्रं, पृथुचरित्रम् इत्यादीनां पुण्याख्यानानि प्रतिपाद्यन्ते। **पञ्चमस्कन्धे** प्रियव्रतस्य तद्वंशगतानां वर्णनं लभ्यते। **षष्ठस्कन्धे** अजामिलचरित्रं, दक्षसृष्टिनिरूपणं,

वृत्राख्यानं, मरुद्गणजन्मवृत्तान्तश्च कीर्त्यते। **सप्तमस्कन्धे** प्रह्लादचरित्रं, मनुष्यधर्मः, वर्णाश्रमधर्मः, अवधूतेतिहासः, गृहस्थधर्मः, मोक्षलक्षणं च प्रतिपाद्यते। **अष्टमस्कन्धे** स्वायम्भुव – स्वरोचिष – उत्तम - तामसानां चतुर्णां मनुष्याणां निरूपणं क्रियते। गजेन्द्रमोक्षः, समुद्रमन्थनं, बलिबन्धनं, मत्स्यावतारश्च अत्र आकर्षविषयाः भवन्ति। **नवमस्कन्धे** सूर्य-सोमवंशाख्यानम्, हरिश्चन्द्रोपाख्यानं, परशुरामकथा, नहुषपुत्रययात्युपाख्याम्, भरतवंशकथा च प्रमुखतया वर्ण्यन्ते। **दशमस्कन्धः** अतीव लोकप्रियो भवति। अत्र कृष्णस्य बाल्य – कुमार – किशोरलीलाः वर्ण्यन्ते। कृष्णस्य व्रज – मथुरा – द्वारिकासु निवासावसरलीलाः मधुराः आश्चर्यकराश्च सन्ति। कंस – वत्सासुर – वकासुर – अघासुर – प्रलम्बासुर – कालिय – धेनुकासुर – केशी – व्योमासुर – शम्बर – काशीराज – पूतना – शकटासुरादि दुष्टानां संहारवृत्तान्तः स्कन्धेऽस्मिन् लभ्यते। **एकादशस्कन्धे** वासुदेवनारदसंवादः वर्तते। अत्र दत्तात्रयेण सह युद्धम्, उद्धवश्रीकृष्णसंवादः, यदुवंशविनाशः वर्ण्यते। **द्वादशस्कन्धे** भविष्यकालनिर्देशः, प्रलयः, परीक्षितमोक्षः, वेदशाखाप्रणयनं, गौरी – सात्त्वती – विभूति – पुराणसंख्यावर्णनञ्च वर्तते।

एवमत्र भागवतस्य संक्षिप्तकथावस्तु श्लोकेनोच्यते-

**आदौ देवकिदेविगर्भजननं गोपीगृहेवर्धनं**
**मायापूतनिजीवितापहरणं गोवर्धनोद्धारणम्।**
**कंसच्छेदनकौरवादिदहनं कुंतीसुतापालनम्**
**एतद्भागवतं पुराणकथितं श्रीकृष्णलीलामृतम्॥** इति॥

**********


ISSN: 2320-740X

## सभ्यता- वेषः विचारो वा

**मयूरी उल्हास जोशी**

**आचार्यद्वितीयवर्षम्**

स्वामिविवेकानन्दस्य आचरणेन , तस्य कार्येण, व्यक्तिमत्वेन च वयं सर्वेऽपि सुपरिचिताः स्मः। अल्पेन वयसा एव सः विश्वविख्यातः सञ्जातः । तस्य व्यक्तिमत्वं नाम अत्यन्तं तेजस्वी युवा, काषायवस्त्रधारी, मनसि देशं प्रति दृढभक्तिमान्, देशकार्ये सत्यश्रद्धावान्, ज्ञानवान् कश्चित् भारतीयः। एतदेव सभ्यतायाः आदर्शम् उदाहरणं वर्तते।

आङ्ग्लजनानाम् आक्रमणेन भारते काचित् क्रान्तिः अभूत्। सद्गुणैः सह केचन दुर्गुणा अपि भारतीयेषु प्रविष्टाः । संस्कृतजगत् तु संस्कृतेन रक्षितम् अस्ति अतः वयमपि संस्कृतज्ञाः नूनमेव रक्षिताः भवेम। किन्तु जगत् परिवर्तमानं भवत, तेन सह वयमपि परिवर्त्तमानाः स्मः। तत् परिवर्त्तनमपि अत्यन्तम् आवश्यकम्। किन्तु वयं भारतीयाः युवानः अस्माकं संस्कृतिं क्वचित् विस्मरन्तः स्मः। उदाहरणार्थम् आधुनिकवेषः। आधुनिकवेषधारणे काऽपि बाधा नास्ति। परिवर्त्तमानेन जगता सह अवश्यम् अस्माभिः तथैव व्यवहर्तव्यम् किन्तु काचित् मर्यादा अस्माभिः परिपालनीया । वस्तुतः एषु केषुचित् वर्षेषु भारतीयानां गणद्वयम् अभूत्। यथा यदि केनचित् आधुनिकः वेषः धृतश्चेत् तंसंस्कृताः परिहसन्ति , यदि केनचित् सांस्कृतिकवेषः धृतश्चेत् तम् आधुनिकाः परिहसन्ति। अतः अनयोर्मध्ये सामञ्जस्यं कल्पनीयम् । अनयोः परस्परम् आदरभावकल्पनेन अयं वाद एव नावशिष्येत। अतः युवभिः सेतुना इव भवितव्यम्।

द्वितीयः विषयः विवाहसंस्था । अस्माकं पूर्वजैः इयं काचित् संस्था परिकल्पिता यया समाजे सुस्थितिरासीत्। किन्तु (Western culture) पाश्चात्त्यसंस्कृतिं प्रति आकृष्टाः वयम् अन्यथा भावेन व्यवहरन्तः स्मः । आधुनिकविचारास्तु अपेक्षिता एव । किन्तु भारतीयसंस्कृतौ एतादृश्यः संस्थाः किमर्थं

सन्ति, इदमपि विचारणीयम्। यस्मिन् देशे दर्शनशास्त्रस्य महान् भाण्डारः वर्तते तस्यैव देशस्य युवानः विभ्रान्तमतयः भ्रमन्ति अनपेक्षितं च व्यवहरन्ति। अस्य किं कारणं स्यात् इत्यपि विचारणीयम्। अतः सभ्यता न केवलं वेषः न केवलं विचारः । वेषविचारयोः सामञ्जस्यमेव मनुष्यस्य सभ्यतां परिलक्षयति ।

**********

## संस्कृतभाषायाः महत्त्वम्

**लक्ष्मीः शिवकुमार् ऐय्यर्**

**प्राक्शास्त्री प्रथमवर्षम्**

अस्मिन् लोके अनेकाः भाषाः सन्ति । तासु संस्कृतम् अन्यतमा । सम्यक् कृतम् इति संस्कृतम्। संस्कृतस्य देववाणी, सुरभारती, गीर्वाणवाणी, देवभाषा इत्यादीनि नमान्तराणि सन्ति । संस्कृतं भारतस्य प्राचीनभाषा वर्तते । देवनागरी संस्कृतभाषायाः लिपिः । संस्कृतभाषा सर्वासां भाषाणां जननी इति उच्यते । भारतीयभाषासु बाहुल्येन संस्कृतशब्दाः उपयुक्ताः । ये संस्कृतं पठन्ति ते सुसंस्कृताः इति उच्यन्ते । संस्कृतस्य अध्ययनेन भारतवर्षस्य प्राचीनधर्मस्य, आयुर्वेदस्य, अतीतसभ्यतायाः पूर्णः परिचयः प्राप्यते । कपिलमुनिः आर्यभट्टः, धन्वन्तरिः, विश्वकर्मा, सुश्रुतः, नागार्जुनः, भास्कराचार्यः, वराहमिहिरः एते सर्वेऽपि महदन्वेषणं कृतवन्तः ।

कपिलमुनिना साङ्ख्यशास्त्रम् उपदिष्टम् । साङ्ख्यशास्त्रे चेतनपुरुषस्य सत्त्वरजस्तमोरूपगुणत्रयवत्याः प्रकृतेः च अस्तित्वं प्रतिपाद्यते । आर्यभट्टः महान् विद्वान् पृथिवी सूर्यस्य परिक्रमं करोतीति सिद्धं कृतवान् । सुश्रुतः शल्यचिकित्साशास्त्रे प्रसिद्धः आसीत् । सुश्रुतः सुश्रुतसंहितायाः रचयिता । भास्कराचार्यः महान् गणितज्ञः । गुरुत्वाकर्षणबलम् अस्ति इति भास्कराचार्यः ऐसाक्न्यूटनतः पञ्चशतवर्षेभ्यः प्रागेव सिद्धं कृतवान् आसीत् । व्यासमहर्षिः पञ्चसहस्रवर्षाणां पूर्वं वेदानां



ISSN: 2320-740X

चतुर्धा भागम् अकरोत् । ते ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः इति । चतुर्षु वेदेषु मिलित्वा द्वात्रिंशदुत्तरशताधिकैकसहस्रशाखाः आसन् । ऋग्वेदे एकविंशतिः शाखाः, यजुर्वेदे शतं शाखाः, सामवेदे सहस्रं शाखाः, अथर्ववेदे एकादश शाखाः आसन् । किन्तु इदानीं तेषु एकादशशाखाः एव सन्ति । ऋग्वेदे द्वे शाखे, यजुर्वेदे चतस्रः शाखाः, सामवेदे तिस्रः शाखाः, अथर्ववेदे द्वे शाखे एव सन्ति । अस्माभिः विंशत्युत्तरशताधिकैकसहस्रम् अमूल्यशाखाः लुप्ताः ।

विदेशे संस्कृतस्य बहु महत्त्वम् अस्ति । विदेशे कस्याञ्चित् शालायां प्रतिदिनं भगवद्गीतापारायणम्, संस्कृतभाषायाः पठनम् इति अस्ति । किन्तु भारते एषः सम्प्रदायः नास्ति । इदानींतनकाले भारते एव संस्कृतस्य महत्त्वं न्यूनं जायमानं अस्ति । एतत् खेदस्य विषयः । संस्कृतस्य स्थानं सर्वे भारतीयाः जानीयुः । यदि वयम् अद्य आरभ्य एव संस्कृतस्य रक्षणं न कुर्मः चेत् तर्हि विदेशीयाः यथा अस्मदीयं योगशास्त्रं, गणितशास्त्रं गृहीत्वा प्रसिद्धिं प्राप्तवन्तः तथैव संस्कृतभाषामपि गृहीत्वा साफल्यं प्राप्नुयुः । तथा विकसितदेशाः भवेयुः । संस्कृतं भारतस्य अभिवृद्धये योग्यसाधनम् अस्ति । वयं भारतीयाः संस्कृतस्य रक्षणार्थं तथा देशस्य विकासार्थं संस्कृतं पठित्वा तस्य प्रचारं कुर्मः ।

**********